Sasthramukthavali- 43.

# PARASARYAVIJAYA.

(Vol.;—1.)

———(*)———

By

ANUJACHARYA or MAHACHARYA

or of Chandamarutha Panchavijaya &c.

EDITED BY

P. B. ANANTHACHARYA

Printed at the

SRI SUDARSANA PRESS.

CONJEEVERAM

———(*)———

1912

शास्त्रमुक्तावळी– ४३.

# पाराशर्यविजयः ।

## ब्रह्मसूत्रव्याख्यानम् ।

( प्रथमाध्यायस्य–प्रथमःपादः । )

———(*)———

महाचार्यापरनामधेयेन चण्डमारुताद्यनेकग्रन्थप्रणेत्रा

श्रीरामानुजाचार्येण

विरचितः ।

———(*)———

श्रीकाञ्ची प्रतिवादिभयङ्करानन्ताचार्येण

परिशोधितः ।

श्रीसुदर्शनमुद्राक्षरशालायाम्

अमुद्र्यत ।

श्रीकाञ्ची ।

१०९२

—(*)—

## अधिकरणसूची ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

# पाराशर्यविजयः ।

पाराशर्यो दयालुर्जयति बहुविधान् वेदमार्गप्रतीपान्
सम्यक्तर्काख्यशस्त्रैः प्रतिभटजनतागर्वसर्वङ्कषैस्तैः ।
ब्रह्मण्यैश्वर्यभूती गुणगणविततिं हर्तुकामान् कुतर्कै
स्तैस्तैर्दुर्लङ्घ्यमायाविततिविरचितैर्न्यायमार्गप्रहीणैः ॥

वेदापहारिणं दैत्यं मीनरूपी निराकरोत् ।
तदर्थहारिणस्सर्वान् व्यासरूपी महेश्वरः ॥
पाराशर्यजयोस्माभिः ख्याप्यतेद्य सतां मुदे ।
वाधूलश्रीनिवासार्यगुरूणामनुकम्पया ॥

श्रियःपतिरवाप्तसमस्तकामस्समस्तकल्याणगुणगणभूषितो भग... ...त्मतनूजाय ब्रह्मणे वितीर्णं ब्रह्मशेवधिं वेदबृन्दं दैत्येनापहृतं मीनर... ...वतीर्य दैत्यं तं संहृत्य पुनर्ब्रह्मणे प्रदाय तदर्थं कुदृष्टिभिरपहृतं ... ...सरूपेणावतीर्य कुदृशो निर्जित्य विबुधेभ्यः प्रददौ ।

तत्र तावदिदं विचार्यते- किं ब्रह्ममीमांसाशास्त्रं द्वैतविषयं उ... ...तविषयमिति ? द्वैतविषयमिति केचित् । शुद्धाद्वैतविषयमिति परे ... शिष्टाद्वैतविषयमिति वेदान्तिनः । तत्र पूर्ववादिनः "तदनन्यत्वम... ...भणशब्दादिभ्य" इत्यादिसूत्रविरोधात्तत्समानार्थकश्रुतिविरोधाच्च निरस्ता

नाद्यः, कुत्रापि सूत्रे जीवब्रह्माभेदस्य प्रपञ्चामिथ्य
सिद्धेः। जीवब्रह्मणोर्भेद एव हि सर्वत्र प्रतिपाद्यते।
परि:- जीवेशभेदश्शास्त्रेण प्रतिपाद्यमानः स्वाभाविक
आदावेवच 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्मे' ति
त्वाच्च तद्ब्रह्मेत्याभिधीयत' इत्यादिश्रुतिस्मृत्यनुसारे
सारेण च स्वरूपरूपगुणविभूतिभिरपरिच्छिन्नस्य ब्रह्मणो ि
जगत्कारणत्वेन तस्य लक्षितत्वाच्च, कथमद्वैतविषयता
हि विशिष्टमेव ब्रह्मशब्दमुख्यार्थः, जिज्ञास्यत्वं च सा
लक्षणातल्लक्षणतात्पर्यकल्पनयोश्चास्वारस्यं सुस्पष्टमेव।
तात्विकत्वेपि पूर्वकाण्डवद्भेदपरत्वोपपत्तेः; भेदस्यैव तात्वि

अथ स्यात्, 'तदनन्यत्वमारम्भणशब्दादिभ्य'
पञ्चस्याध्यस्तता प्रतिपाद्यते, 'तद्गुणसारत्वादि' ति
र्माणां अध्यस्तता प्रतिपाद्यते, 'यथाच तक्षोभयथे' ति
प्रतिपाद्यते, 'अंशो नानाव्यपदेशात्।' 'आत्मेतितूपगच्छ
ति जीवब्रह्मैक्यं प्रतिपाद्यते; अतश्शास्त्रस्याद्वैत एव ता
भेद एव तात्विक इति; तदपि न, अद्वैतस्यैव सर्वा
पादनात्; तथाहि-सद्विद्यायां तावत् "सदेव सोम्येदम
द्वितीय" मिति, कठवल्ल्यां- चतुर्थे खण्डे "यदेवेह
तदन्विह। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति।
व्यम्, नेह नानास्ति किञ्चन। मृत्योस्स मृत्युं गच्छ
पश्यति।" इति, ईशावास्ये- 'यस्तु सर्वाणि भूतान्यात्म
सर्वभूतेषु चात्मानं न ततो विजुगुप्सते॥ यस्मिन्
न्यात्मैवाभूद्विजानतः। तत्र को मोहः कश्शोक एकत्वमनु
बृहदारण्यके चतुर्थेध्याये चतुर्थे ब्राह्मणे- 'इदं ब्रह्मेदं

व भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं शृणोति देतर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति त्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केनकं शृणुयात्तत्केन मभिवदेत्तत्केन कम्मन्वीत तत्केन कं विजानीयात् येनेदं सर्वं विजानाति केन विजानीयात्, विज्ञातारमरे केन विजानीयादि' ति, पञ्चमेध्याये मदृष्टोद्रष्टाऽश्रुतश्श्रोतामतो मन्ता अविज्ञातो विज्ञाता नान्योतोऽस्ति द्रष्टा न्योतोऽस्ति श्रोता नान्योतोऽस्ति मन्ता नान्योतोऽस्ति विज्ञाते' ति, नारायणोप षदि द्वितीयखण्डे— "ब्रह्मा नारायणः, शिवश्च नारायणः, क्रश्च नारायणः, कालश्च नारायणः, दिशश्च नारायणः, दिशश्च नारायणः, ऊर्ध्वं च नारायणः, अधश्च नारायणः, न्तर्बहिश्च नारायणः, नारायण एवेदं सर्वम्, यद्भूतं यच्च भव्यम्, निष्कलो रञ्जनो निर्विकल्पो निराख्यातश्शुद्धो देव एको नारायणः, न द्विती- स्ति कश्चिदि' ति, उत्तरतापनीयेऽष्टमे 'अद्वयो ह्ययमात्मा एकएवे' दि, नवमे 'नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धो द्वितीयः' इति, कैवल्यो षदि 'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्। अन्नपानादिविचित्रभोगैस्स एव जाग्रत्परितृप्तिमेति ॥ स्वप्नेतुजीवस्सुख- खभोक्ता स्वमायया कल्पितजीवलोके। सुषुप्तिकाले सकले विलीने ोभिभूतस्सुखरूपमेति ॥ पुनश्च जन्मान्तरकर्मयोगात्स एव जीवस्स्व- ते प्रबुद्धः। पुरत्रये क्रीडति यस्स जीवस्ततस्सुजातं सकलं विचित्रम् ॥ धारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च। एतस्मा- यते विश्वं मनस्सर्वेन्द्रियाणिच। खं वायुर्ज्योतिरापश्च भूमिर्विश्वस्य धारिणी॥ रं ब्रह्म विश्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात्सूक्ष्मतरं नित्यं तत्व त्वमेवतदि' ति, माण्डूक्योपनिषदि- 'अयमात्मा ब्रह्म, अनादिमायया सुप्तो ाजीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा। प्रपञ्चो यदि विद्येत र्तेत न संशयः। मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः। विकल्पो विनिवर्तेत

उच्यते — 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्य
ध्याध्यासो न केनापि पदेन प्रतीयते ; चिदचिते
आध्यासिकाभेदपरो ऽनन्यत्वशब्दो वाच्यः, सच ब्रह्मणि
धीन इत्येवमध्यासपरत्वं सूत्रस्येति चेन्न; - तात्त्विकाभेदपर
काल्पनिकाभेदपरत्वासम्भवात् । तत्सम्भवश्च वक्ष्यते । 'तद
' यथा च तक्षोभयथे ' ति सूत्रद्वयेपि मिथ्यात्वगन्धोपि नाप्र
क्षितार्थे सूत्रयोर्यथाकथञ्चिदाकर्षणं च निरसिष्यते । 'अंशो
दित्यत्र नानात्वेन व्यपदेशो हि भेदव्यपदेशः, तत्र प्रकृतत्वाद
तस्माद्ब्रह्मणो भेदव्यपदेशादित्यर्थः । एवं च ब्रह्मणो
कथं ब्रह्मांशत्वसिद्धिः । नहि घटाकाश आकाशादन्यः ।
तत्सूत्रव्याख्यानावसरे । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति
आत्मशब्दो ऽन्तर्यामिपरः । तस्मात्किमपि सूत्रमद्वैतविषयं

नाप्युपनिषदामद्वैतविषयता । 'सदेवे' त्यत्र अ
द्वैतसिद्धिः । 'तदैक्षत बहुस्यामि' त्येतदुपयुक्तार्थश्च पूर्व
सुचितः, सच कार्याभाव एव । 'यदेवेह तदमुत्र' त्य
' पराञ्चि खानि व्यतृणत्स्वयम्भूः तस्मात्पराङ् पश्यति ना
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि' ति
स्वरूपं प्रतिपाद्य, तमेवार्थं 'पराचः कामाननुयन्ति बाला
र्यान्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्व
घ्रुवम् न प्रार्थयन्ते ॥' इति विवृत्य, उत्तरग्रन्थेन ब्रह्म
पाद्यते । प्रतीचो ज्ञानोपायः क इत्यत्राह—

'येन रूपं रसं गन्धं शब्दान् स्पर्शाश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥
एतद्वै तदि' ति ।

।वभाग: प्रत्यक्पदानुसारात्कृत: । स्वयमेव हि प्रत्य-
पे स्वापेक्षया परागेव । कृत्स्नमपि भगवत्परमेववा, अन्त
रात् । प्रत्यगात्मशब्द: तदन्तर्यामिपर:, येनैकेनैवानन्तो
रूपादीन् विजानाति तदधीनो जानाति । अत्र रूपादिसकल
। अस्मिन् विद्यमाने किं परिशिष्यते, तत्प्रसादेन दुर्वि-
ास्यत एवेत्यर्थ: । 'येने' ति परांचि खानीत्येतदर्थोनूदित: ।
ास्त्वित्यत्राह 'एतद्वै तदि' ति, रूपादिसकलदर्शनहेतुभूतं
ृष्णो: परमं पदमि' ति पूर्वोक्तमित्यर्थ: । शङ्करेणाप्येव
ातम् ।

' स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
य इदं मध्वदं वेद आत्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥
एतद्वै तदि' ति ।

न्तम्— स्वप्नमध्यगतं पदार्थम्, जागरितान्तम्— जागरितमध्य
, अन्तशब्दस्य निश्चयार्थस्य तद्विषयलक्षकत्वात्; यद्वा
नेद्राया:, अन्त:- अवधि:, जागरितम्, तस्यान्त:- स्वप्न:,
त्सम्बन्धिपदार्थपर:, एवं पूर्वोक्तं रूपादिकमेव द्वेधा विभज्य
तं महान्तं इत्यन्वय: । अनेन 'किमत्र परिशिष्यत'
। य:, मध्वदम् - कर्मफलभोक्ता जीव:, विभक्तिव्यत्ययश्छा-
-आत्मानम्, इदंशब्देपि लिङ्गव्यत्ययश्छान्दस:, यद्वा, मध्वदम्-
न्दतृसम्, यएवंविधं भूतभव्येशानं परमात्मानं वेद स ततो

'यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत
गुहां प्रविश्य तिष्ठन्तं यद्भूतेभिर्व्यपश्यत ॥

एतद्वै तदि' ति ।

यः- परमात्मा, पूर्वम्-सर्गाद्यकाले, तपसः-स
चतुर्मुखम्, अद्भ्यः - अबुपलक्षितभुवनेभ्यः, पूर्वमजीज
वरयोगेन हृदयगुहां प्रविश्य भूतैस्सह तिष्ठन्तम्, अप
पूर्वं चतुर्मुखं सृष्ट्वा स्वानुग्रहलब्धशक्तिविशेषेण भूतै
भुवनादिभिस्सह तिष्ठन्तमपश्यदित्यर्थः । एतद्वै तत्- पूर्व

'या प्राणेन सम्भवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥

एतद्वै तदि' ति ।

हृदयगुहां प्रविश्य तिष्ठन्ती परदेवतारूपा अदि
जीवेन, सम्भवति- तद्द्वारा ज्ञानविकासशरीरसम्बन्धरूपस
वति, भूतेभिः- भूतैश्च, स्थूलावस्थाभाग्भवति । य
सम्भवे वा हेतूपन्यासः । भूतेभिरिति विशिष्टोपादानकत्वमु
तदिति पूर्ववत् । बृहदारण्यके तृतीये अध्याये द्वितीये ब्राह्म
सृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं
भवति सर्वमस्यान्नं भवति य एवमदितेरदितित्वं वेदे' ति प
शब्दनिर्वचनात् एवं व्याख्यातम् । यद्वा- कर्मफलान्यत्त
'अत्तीत्यदिति' रिति बृहदारण्यकनिरुक्त्यनुसारादेव; एवं
स्वरसार्थः, मयट्प्रत्ययश्च स्वार्थः; अन्यथा हि मयडस्वार्थिक
स्यात् । ततश्च, देवतामयी- इन्द्रियप्रचुरा, इन्द्रियाधीनभोगे
'या भूतेभिर्व्यजायते' त्युक्तं शरीरसम्बन्धनिबन्धनं जन्म

... ... ... गर्भ इव सुभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिः हविष्मद्भिर्मनुष्येभिरग्निः ॥
'एतद्वै तदि' ति ।

अनेन गुहां प्रविश्य स्थितौ दृष्टान्त उच्यते; अन्तर्यामित्वे वा
र्भिणीभिस्सुभृतो गर्भ इवारण्योर्निहितो जातवेदश्शब्दवाच्योऽग्निः, जागृ
द्भिः - अवहितैः, हविष्मद्भिः - प्रशस्तसोमादिहविर्युक्तैः, मनुष्येभिः -
ष्यैः, दिवेदिवे - तत्तत्स्वर्गमुद्दिश्य, ईड्यः । दिने दिन इत्यपरे । गुहा
अन्तर्यामिणि वा दार्ष्टान्तिके तात्पर्यम् । इदं वाक्यं अग्नयन्तर्यामि
वा । एतद्वै तत्, पूर्ववत् ।

यतश्चोदेति सूर्योऽस्तं गच्छति यत्र च ।
तं देवास्सर्वेऽर्पिताः तदु नात्येति कश्चन ॥
एतद्वै तदि' ति ।

तद्वस्तु, ब्रह्मरुद्रादिः कोपि नात्येति, तदर्पिततया तन्नियाम्य-
। एतद्वै तत् - पूर्ववत् ।

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥
मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥
अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥
एतद्वै तदि' ति ।

एवं सर्वप्रपञ्चाधिष्ठातृतया वर्तमानं वस्त्वेव, अमुत्र- मुक्तप्राप्यं

नश्यति स पुनः संसार्येव भवति। मनसैव - ज्ञानेनैव, इदं वस्तु इह- ब्रह्मणि, नानाभूतम्- तेन विनाभूतम्; स्वतन्त्रं वस्तु नास्तीत्यर्थः. 'यतश्चोदेति सूर्योऽस्तं गच्छति यत्र च। तं देवास्सर्वे नात्येति कश्चने' ति अपृथक्सिद्धत्वावगमात्; अतोनान्यत्र कुशत्वशङ्कावकाश इति भावः। यद्वा - 'मनसैवेदमाप्तव्यम्' इति मोक्षसाधनस्य प्रस्तुतत्वान्मोक्षसाधने यो नानात्वं पश्यति कर्मणां साधनत्वं पश्यतीति भावः। एतद्वै तत् - पूर्ववत्। एतद्वैतदिति देवतान्तरस्य परत्वशङ्कानिरासाय। बृहदारण्यके 'नेह नानास्ति।' इति वाक्यमप्युक्तार्थकम्, तत्रैव 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।' इत्यपृथक्सिद्धत्वावगमात्।

'यस्तु सर्वाणि भूतानी' त्यत्र, 'यस्मिन् - यदा, तत्र एकत्वमनुपश्यतः-सर्वव्यापके एकत्वं पश्यतः, सर्वव्यापकं वस्त्वन्तरं पश्यत इत्यर्थः।

'इदं ब्रह्मेदं क्षत्र' मित्यत्र ब्रह्मक्षत्रादिवत्सर्वदेवतानां भगवद्भिन्नान्यत्र तत्तुल्यत्वशङ्कावकाश इति भावः। 'यत्रहि द्वैतमिव भवती' यत्र - यदा, द्वैतं भवति - द्वैतबुद्धिर्भवति, तत् - तदा, इतरः- स्वतन्त्रः इतरेण- स्वतन्त्रकरणेन, इतरम्-स्वतन्त्रम्, जिघ्रति। 'केने' त्युत्तरत्र प्रमाणत्वात् इतरेणेत्यध्याहार्यम्। स्वतन्त्रोऽहं स्वतन्त्रकरणेन स्वतन्त्रं जिघ्रामीति बुद्धिर्भवतीति तात्पर्यम्। एवमुत्तरत्रापि योज्यम्। यत्र- अस्य - ज्ञातुः, सर्वमात्मैवाभूत् - परतन्त्रत्वेन ज्ञातमभूदिति। इदं मितरमिथ्यात्वपरमिति पक्षे, यदा द्वैतबुद्धिर्भवति तदा इतर इतरं जिघ्रति यदा सर्वमात्मैवेत्यद्वैतबुद्धिर्भवति तदा सर्वस्य निवृत्तेः केन कं करणाभावात् ज्ञेयाभावाच्चेति नार्थः, सर्वमात्मैवाभूदित्यस्याभेदपरत्वे ऽ बाधात्, बाधार्थपरत्वे चिदंशे बाधात्। यद्वा-यदा द्वैतबुद्धिर्भवति, तदा

ामीति बुद्धिर्न भवतीत्यपि नार्थः, ' यत्रत्वस्य सर्वमि ' ति
थ्यात् ; अद्वैतज्ञानिनोपि मिथ्यात्वेन ब्रह्मणोन्यमेव गन्धन्त
घ्राणेनैव जिघ्रामीति ज्ञानाच्च । ' यत्र त्वस्य सर्वमात्मैवा-
ुक्तसार्वात्म्यबुद्धिः केन भवतीत्यत्राह ' येनेदमि ' ति । ततो-
विजानीयात् तेनैव विजानीयादिति भावः । पश्यतीत्यादिना
वस्य ज्ञानमपि तेनैवेत्याह ' विज्ञातार ' मिति । भगवत्प्र-
स्वस्वरूपमपि केन विजानीयादित्यर्थः । पूर्वत्र ' स यथा
ग्र ' इति मोक्षे भेदप्रतिपादनादिदं वाक्यं यथोक्तार्थपरमेव ।

अदृष्टो द्रष्टे " त्यत्रापि अदृष्टो द्रष्टा इतोन्यो नास्तीत्येवं
अनेनान्यस्य परत्वनिषेधसिद्धेः चिदचिद्वैशिष्ट्यमपि नान्य-
ोक्तम् ।

ब्रह्मा नारायण " इत्यत्रापि एतादृशसर्वप्रपञ्चविभूतिको द्वितीयो
: ।

अद्वयोह्वयमात्मे " त्यत्रापि, अद्वयः - स्वतुल्यद्वितीयरहित
" नह्यस्ति द्वैतासिद्धि " रित्यत्रापि अद्वितीयशब्दः स्वतुल्य-
त्य एव स्वरसः, तत्रैव भूरिप्रयोगात् । नतु द्वितीयनिषेध-
द्विवक्षायां हि द्वितीयं नेत्येवोच्येत, नत्वद्वितीय इति, अन्यो-
। प्रतिपादने प्रयोजनाभावात् । तस्मान्निस्समत्वप्रतिपादनार्थ-
पदप्रयोगः । स्वाभिलषितार्थपरत्वे अस्वारस्यात् । एवंच
द्वैतसिद्धि " रित्यपि तत्परमेव ।

सएव मायापरिमोहितात्मे " त्यत्रापि ' सएवे ' ति ' आत्मान
त्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनादेव पाशं दहति
इति पूर्ववाक्ये पण्डितशब्देन प्रकृतो जीवः परामृश्यते ।

नतु स्वाधीनमाययेत्यर्थः । जीवलोकः- स्वामामित्रादिलोकः । ' त
इति । तमसाभिभवेन ज्ञानसङ्कोचात् परमात्मनि लीनो भव
' जन्मान्तरे ' ति । जन्मान्तरारम्भककर्मयोगवशात् , स्वपिति-
सकलः-प्रबुद्धः,अनेन स्वपितीति निर्दिष्टमरणप्रतिसम्बन्धिभूतजीवनं
पुरत्रयम्- जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयम् , तत्तद्दशायां जीवाश्रयः
विशेषो वा । ' शरीरमास्थाय करोति सर्वमि ' त्यनेन प्रसक्तं स
वारयितुमाह ' ततस्सुजातमि ' ति । सर्वाधारे आनन्दमये सर्वज्ञे
पुरत्रयोपलक्षितो जीवः लयं याति तत एवास्य जीवस्य भोग्य
करणभोगस्थानरूपेण तदवान्तरवैजात्येन च विचित्रं सकलमपि ध
सम्यगेव निष्पन्नम् । ' एतस्मात् ' — तत इत्यादिना निर्दिष्ट
त्मनः । एतच्च जगत्कारणत्वं विशिष्टोपादानत्वात्मकमिति तत्व
वदुपसंहरति ' तत्त्वमेव त्वमेवतदि ' ति ।

" अनादिमायये " ति । अनादिसिद्धदृढतरप्रकृतिसम्बन्
देहात्माभिमानेन तद्विवेकशून्यः देवोहं मनुष्योहमिति भ्रान्तः
तद्विवेकवान् भवति तदा जन्मादिविकाराणां सोपाधिकत्वपरिज्ञाने
स्तच्छून्यतया देवादिभेदमपश्यन् उक्ताकारैस्समानरूपमेवात्ममात्रं पश्
त्यर्थः । प्रबोधानन्तरं किं देवादिभेदप्रपञ्चोत्र निवर्तते येन
स्सप्रयोजनस्स्यादित्यत्राह ' प्रपञ्चो यदी ' ति । देवत्वादिभेदप्रप
यद्यात्मनि विद्येत तदा स तत्र निवर्तेत, नच भेदप्रपञ्चस्तत्र व
किन्तु देवत्वादिद्वैतमात्मनि, मायामात्रमेव- आरोपविषयमात्रमेव,
तस्य- ज्ञानानन्दात्मकतयैकरूपत्वस्य पारमार्थ्यात्; अतो न निव
इत्यर्थः । कथं तर्हि प्रबोधस्सप्रयोजन इत्यत्राह— " विकल्प
इति । विकल्पः- विपरीतकल्पः, भ्रमः, यदि केनचित्कल्पितः- उ
दितः, स निवर्तेतैव, अतोत्र

" विकल्पो यदी " ति व्याप्तिप्रदर्शनपरम् । एतदपेक्षयैवेयं
ाह ' उपदेशादि ' ति । उपदेशात्, आत्मस्वरूपे ज्ञाते
ग्रत इत्ययं वादो भ्रमनिवृत्तिनिबन्धन इति भावः ।
बहिः प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः । घनप्रज्ञस्तथा प्राज्ञः
त्रिधा स्मृत " इति विश्वतैजसप्राज्ञतुरीयाणां पादत्वकीर्तनप्रयुक्त
ावृत्तये विश्वतैजसप्राज्ञानामेकत्वमभिधाय उत्तरत्र " सर्वं
प्राणश्चेतोंशून् पुरुषः पृथगि " ति पादत्रयत्वेन कीर्तिता
न कीर्तनाद्द्वैतपरैवेयमुपनिषत् । पृथक्- पृथग्भूत इत्यर्थः ।
वस्थात्रयवतः प्रतियोगितया लाभः । ननु पूर्वत्र ' अयमात्मा
भेदः प्रतिपन्न इति चेन्न ;- " यच्चान्यत्त्रिकालातीतं तद
एवे " ति आदावेवात्राभेदोपदेशस्य स्तुत्यर्थत्वावगमात् ।
ाण्डूक्योपनिषदि श्लोका गौडपादीयाएव, तथापि कैश्चिच्छ्रुति-
ात्तदनुसारेण व्याख्यातम् ।

एवं न काप्यद्वैतप्रमितिसिद्धिः ।
तन्तु तात्विकमेव, मोक्षदशायामपि भेदस्य भेदज्ञानान्मोक्षस्य
माणत्वात् ।

थाहि- कठवल्ल्यां चतुर्थे खण्डे- " यथोदकं शुद्धे शुद्धमा-
ादृगेव भवति एवं मुनेर्विजानत आत्मा भवती " ति । ब्रह्म
ाम्यमुपैतीत्यर्थः ।

मुण्डके पञ्चमे खण्डे- " समाने वृक्षे पुरुषो निमग्नोऽनीशया
मुह्यमानः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं
ाम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्य
' ति । अत्राह कश्चित्परममूर्खः- साम्यस्य पारम्येन विशेष-
[illegible]

साम्य एव अतिशयसिद्धौ भेदे धर्मे वातिशयस्सिध्येत्, निरासः । षष्ठे- 'यथा नद्यः स्यन्दमानास्समुद्रे ऽस्तं' ग रूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं दिव्यम् ॥ सयो हवै तत्परं ब्रह्म वेद ब्रह्मैव भवति । "। अ इवार्थः, परमं साम्यमुपैतीति पूर्वानुसारात्; वाक्यशेषानु तत्र हि नदीसमुद्रदृष्टान्तः प्रतिपादितः । नहि तत्राभेदे नामरूपकृतभेदाभाव एव, 'स्पर्धमानो विष्णुरेव भूत्वेमां यती' तिवत्, 'विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमांल्लोक तिवच्च । नहि तत्र पशवालम्भनादिमात्राद्विष्णुतादात्म्यमुपपद्यत द्वैवमेवे' ति नैघण्टुकाश्च पठन्ति । अन्यथा नैरर्थक्यात् अवधारणार्थ एवायमेवकारः, स्वारस्यात् । परमसाम्यश्रुत सौसादृश्यविवक्षया हि सेनान्यां राजैवायमिति त्वरिता वक्तारे अवधारणार्थ एवकारस्सौसादृश्यपरः ।

दहरविद्यायां 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणा इति, बृहदारण्यके चतुर्थे अध्याये चतुर्थे ब्राह्मणे 'स खिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणा यतस्त्वाददीत लवणमेव, एवं वा अरे इदंमहद्भूतमनन्तमपारं वि एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञा अनेन वाक्येन मुक्त्यवस्था प्रतिपाद्यते । विज्ञानघनोजीवः, मयं देहं विसृस्य तद्विशरणानन्तरक्षण एव, सर्वस्य ग मात्मनि, नश्यति - लीनो भवति, देवादिनामरूपप्रहाणादित्य लम्बित प्रतिपादनाय तान्यन्वित्युक्तिः । जीववियोगोत्तरक्षण विशरणं भवति, तदुत्तरक्षण एव ब्रह्मप्राप्तिर्भवति, न भावः । देवादिवैजात्यप्रहाणात् परमसाम्यापत्तेश्चात्यन्तवैधर्म्याग्र दिकृतिपयधर्मैर्वैधर्म्यग्रहणां ...

स्य ' इति । सैन्धवखिल्यः - सैन्धवघनः लवणपिण्डः, अस्य — अत्र लयप्रतिपादनेन रूपतो वैधर्म्यग्रहणाभावः प्रतिपादितः । इति आदिमध्यान्ताचामेषु रसतो वैधर्म्यं गृह्यत इति भावः । योग्यत्वप्रतिपादनेन अपुनरावृत्तिर्व्यज्यते । ' अस्ये ' ति । संयो- ो न पृथग्भावकरणसामर्थ्यमिति प्रतिपादनेन स्वप्राप्तिप्रदस्यापि पुनरावृत्तौ न सामर्थ्यमिति गम्यते । अस्य वाक्यस्याभेदप- ान्तवैघट्यम् , ' नप्रेत्ये ' त्यादिवाक्यवैय्यर्थ्यञ्च ।

तापनीये पञ्चमोपनिषदि —

" तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुरा- तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परम ' ति ।

मैत्रायणीयोपनिषदि—

" तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैक- र अत्रहि सर्वे कामास्समाहिताः । " इति ।

' सैन्धवघनइवे ' ति । यथा सैन्धवघन उदके प्रास्तस्तत्र लयं । तत्समानरूपतया दुर्ग्रहविवेको भवति, रसविशेषेण विवेक्तुं यः, तद्वद्ब्रह्मणि लीनोपीति भावः । अत्र च ब्रह्मैकतानुवादेन गताविधिः प्रतीयते, तदयं भावः — सर्वेषु मोक्षप्रकरणेषु ' ब्रह्म- ह्मैव भवती ' त्यादिरूपेणाभेदप्रतिपादकत्वेन प्रतीयमानानां वाक्या मेवार्थ इति ।

श्वेताश्वतरे—

" पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्व " इति,

“ समाने वृक्षे पुरुषो निमग्नोनीशया शोचति मुह्यमानः
यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ” इति

प्रपञ्चमिथ्यात्वजीवब्रह्माभेदतन्मूलाविद्यानिरासश्च वेदा
प्रपञ्चितोऽस्माभिः । तस्माच्छुद्धाद्वैतं सूत्रस्वारस्याभावात्, श्रु
त्यभावादुपपत्तिविरोधाच्च न ब्रह्ममीमांसाशास्त्रविषयः ।

सूत्रस्वारस्यादुपनिषदनुरोधादनुपपत्त्यभावाच्च विशिष्ट
द्विषयः ।

तथाहि - सूत्रस्वारस्यन्तावत्— “ ईक्षतेर्नाशब्दं ” ‘ तद
मारम्भणशब्दादिभ्यः । ’ ‘ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । ’
दिषु । ‘ ईक्षतेर्नाशब्दमि ’ ति बहुस्यामितीक्षणानुसारात् प्रकृति
कृतः, अयं कथमुपपद्यताम् ? न तावत्स्वरूपपरिणामात्, निर्वि
श्रुतिविरोधात्, सकलहेयास्पदत्वप्रसङ्गेन निर्दोषत्वश्रुतिविरोधाच्च
प्रपञ्चमिथ्यात्वात्, चैतन्यमात्रे इक्षणासम्भवात् ; सदेवब्रह्माधि
अधिष्ठानेनैव चाध्यासिकाभेदसम्भवः ; नचाविद्याशबळस्याधिष्ठा
अविद्याया दोषतया परिणामितयावोपयोगेप्यधिष्ठानत्वासिद्धेः;
द्याशबलित ईश्वरः, तस्यैवायमविद्यावृत्तिरूपस्सङ्कल्पः, अधिष्ठा
तन्यस्येश्वरानुस्यूतेरीश्वराभेदनिर्देशोपपत्तिरिति चेन्न;— ‘ हन्ताहमिम
देवता ’ इति वाक्ये अहमिति निर्देशेन तन्मते ईक्षणादीनामी
त्वासम्भवात् । ‘ तदनन्यत्वमारम्भणशब्दादिभ्य ’ इत्यत्र चिदा
कस्य प्रपञ्चस्य ब्रह्माभेदः प्रतिपाद्यते, स च सदेव सोम्येदमग्र अ
त्यत्र इदंशब्दस्य चिदचिद्विशिष्टब्रह्मपरत्वनिबन्धनः, अन्यथा स
धिकरण्यानुपपत्तेः; नच बाधार्थे सामानाधिकरण्यम्, ‘ अग्र ’
निर्देशविरोधात् । ‘ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि ’ त्यत्र ब्रह्मा
दानत्वमुच्यते, उपादानत्वं च कार्याभेद एव, पूर्वोत्तरावस्थायो

यदत्त्वमितिवदयोग्यार्थत्वात्; नच शुक्ती रजतोपादानतया

।

ानिषदनुरोधश्च । सद्विद्या हि विशिष्टोपादानत्वं प्रतिपाद

ाहि- तत्रोपोद्घातेन प्रथमखण्डेन पितापुत्राख्यायिकया प्रति

तार्थोवतार्यते । अनन्तरं षड्भिः खण्डैः प्रतिपिपादयिषि

तेपाद्यते । अनन्तरं च नवभिस्सएव स्थाप्यते । केन सिद्धोयं

? उच्यते, सद्विद्यान्त इव सप्तमखण्डान्तेपि "तद्धास्य

ी" ति पिता पुत्रस्योत्पिपादयिषितं ज्ञानं सम्यगेव निर्वृत्त

वगम्यते । नचेदमवान्तरार्थस्य ज्ञाततापरम्, पूर्वोत्तरखण्डेष्व

ु तददर्शनात्; 'उद्दालकोहारुणि' रिति पुनरुपदेशारम्भ

पूर्वप्रक्रान्त उपदेशः परिसमाप्त इत्यवगम्यते । तस्मात्प्रथम

नवखण्डौ च मध्यषट्कशेषभूतौ ।

ात्र विवक्षितार्थस्य साभिष्टताज्ञापनार्थं पितापुत्राख्यायिकामाह

तुरित्यादि ) "अननूच्य"— अनुक्तिः, स्वाध्यायानध्ययनम्,

मनधीत्येत्यर्थः । 'सः-' श्वेतकेतुः । 'उपेत्ये' त्युपनीतत्वं

'उपनयीते' ति प्रयोजकव्यापारान्तर्गतप्रयोज्यव्यापारस्य

तिना प्रत्यभिज्ञानेन गुरुकुलान्युपेत्येत्यवगमात् । 'महामनाः'—

ंसोपचितमनाः । 'अनूचानः' - अधीतवेदाङ्गः । 'स्तब्धः'—

रः, अलम्पटः, परिपूर्णः । उद्दालकः पुत्रस्नेहेन ब्रह्मोपादिदिक्षु

ब्रह्मजिज्ञासामुत्पादयितुमाह ( "श्वेतकेतवि" त्यादि ) 'तमादेशम्'-

न्नेयन्तारम् । उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात्तच्छब्दः

परः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'यः पृथिवीमन्तरो

।' 'तमो वा इदमास, तत् परेणेरितं विषमत्वं प्रयाति'

: प्रसिद्धिर्द्रष्टव्या । आदेश इति कर्तुरपि साधकतमत्वात् स्वात-

... कर्तर्येव करणे घञ् .

परत्वाभ्युपगमे प्रकृत्यस्वारस्यम्, आङ्पूर्वस्य दिशेः प्रशासनार्थत्व
किञ्च — धर्मादेरप्युपदेश्यत्वेन तस्य ब्रह्मासाधारण्यासिद्धेः अप्राक्ष्य
नेनैवोपदेश्यत्वसिद्धेश्चादेशशब्दो व्यर्थः । किञ्च- 'सदेव सोम्येद'
वक्ष्यमाणत्वेन नपुंसकान्तेन पदान्तरेण निर्देशे स्वरसेपि पुल्लिङ्गनि
नियन्तृप्रतीत्यर्थएव, नियन्तृपरस्यादेशशब्दस्य 'एषत आत्मान्तर्याम्यमृ
'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण' इ
पर्यवसानेन तत्प्रसिद्धिसापेक्षस्य निर्देशस्य पुल्लिङ्गत्वोपपत्तेः । कि
तच्छब्दः प्रसिद्धिपर इत्युक्तमेव । नियन्तृत्वमेव हि बहुश उपदिश
न तथोपदेश्यत्वम् । अतो नियन्तैवादेशशब्दार्थः । प्रकरणानुसार
नियन्तृपरत्वमेव युक्तम्, अत्रोपादानमात्रप्रतिज्ञायां 'तदैक्षत' '
जते' त्येव वक्तव्यं स्यात्, 'तत्तेजोभवदित्यादि' हि वाच्यम्,
उत्तरत्र कर्तृत्वस्याभिधानादिहापि तदुक्तेरपेक्षितत्वादपेक्षितविधानन्य
तदभिधानमेव युक्तम् । 'उत तमादेश' मित्याक्षेपाभिप्रायम् । ब्रह्म
हि स्तब्धताहेतुः, तदभावेपि सा विस्मयनीयेति भावः । (येनाश्रुत मि
'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवती'
मैत्रायणीयश्रुत्यनुसारादुपादानप्रकरणानुगुण्याच्च 'येन श्रुतेनाश्रुतं
भवति येन मतेनामतं मतं भवति येन विज्ञातेनाविज्ञातं विज्ञातं भव
त्यर्थः । अत्र श्रुतत्वादिकं साध्यम् । श्रुतादिः करणत्वेन निर्दिश्य
एवं च श्रवणादेः करणत्वे तात्पर्यम् । यच्छ्रवणमेव यच्छ्रवणं भवत
पर्यवसितोर्थः । अश्रुतत्वं स्थूलाकारविशिष्टरूपेण, श्रुतत्वं सूक्ष्मरू
धर्म्यैक्याच्छ्रुतत्वाश्रुतत्वयोस्सामानाधिकरण्यम् । आवृत्या ज्ञातता हढी
श्रवणादित्रयमुपन्यस्तम् । इति पितोवाचेत्यन्वयः । अन्यज्ञानेनान्य
ज्ञातत्वासम्भवम्मन्वानः पुत्रः पृच्छति (कथन्निवति) गुरुराह (यथेत्या
अत्रापि मृत्पिण्डादेर्ज्ञातत्वं विवक्षितम् । रूपभेदान्नामभेदाच्च कार्यद्रव्य
कारणद्रव्याद्भिन्नत्वेन दृष्टान्तेप्यसम्भवाशङ्कां परिहरति (वाचारम्भणामि

। वसतीति वत् प्रयोजनतया हेतुत्वं वाचेति विवक्षितम् ।
णाज्जलाहरणादिव्यवहारो ऽप्युपलक्ष्यते । वाग्व्यवहारार्थं
यवहारार्थं च पृथुबुध्नोदराकारादिविकारो घटादिनामधेयञ्च
। आरम्भणमिति कर्मणि ल्युट् । तत्र प्रत्यभिज्ञां युक्तिमाह
त्येवेति ) प्रातर्या मृत्तिका मयोपलब्धा सैवेदानीं घटादि
त्यभिज्ञानं दृश्यते, तच्च अबाधितमित्यर्थः । इतिकरणेनानुकरण
एवकारोपश्लेषात्प्रत्यभिज्ञावाक्यानुकरणरूपताच प्रतीयते । व्य-
वहारानुकरणेन तद्धेतुभूता प्रत्यभिज्ञा विवक्षिता । सत्यम्—अबा-
मृत्तिकैवेति प्रत्यभिज्ञानमबाधितमित्यर्थः । यद्वा,- अनुकरणे-
मुपस्थाप्य तस्यैवाबाधितत्वमुच्यते । लोहमणिः—स्वर्णपिण्डः ।
न्तनमिति चिकीर्षिताकारप्रागवस्थाकारसाम्यादभिधीयते ।
कर्तृत्वं विशिष्टोपादानत्वसिद्धये ब्रह्मज्ञानेन कृत्स्नस्य ज्ञातत्वेन
म् , तत्र द्वितीये शङ्का दृष्टान्तेन परिहृता । पुनर्गुरुकुल
नशङ्कयाह (नवै इति) (मइति) निजकुमारेभ्योप्यतिशयितव्यामोह
महामित्यर्थः । ( तद्ब्रवीत्विति ) दृष्टान्ते उपादानोपादेय
ज्यते, इह कथमिति भावः ।

एवं प्रथमखण्डेन द्विविधं कारणत्वमवतारितम् । अथ कारणत्व
( सदेवेति ) समष्टिव्यष्टिसर्गौ व्यष्टिसर्गार्थं त्रिवृत्करणं विकारस्य
यस्य च स्वपर्यन्तत्वसिद्धये नामरूपव्याकरणयोरनुप्रवेशाधीनतां
कार्यत्वसिद्धयेनुप्रवेशस्य जीवद्वारकतान्त्रिवृत्करणोपपत्तिं जीवस्य
द्वारकसत्कार्यत्वसिद्धये शरीरस्य भूतत्रयमयत्वं सूक्ष्मनिर्गममाप्त्या-
ञ्चोपपाद्य, विशिष्टोपादानत्वं प्रसाध्योपसंहरति षड्भिः खण्डैः ।

द्वितीयखण्डेन समष्टिसृष्टिमाह ( सदेवेति ) अप्ययपूर्वकत्वात्
प्रथमतो लयमाह । अनेन सर्गप्रळययोः प्रवाहानादित्वं सूच्यते ।
कार्यनिरासः. कारणस्यैव कार्यभावस्य प्रवाहा-

नादितावगमात् । इदम् - परिदृश्यमानं ...

रूपं स्थूलकार्यम्, सर्गात्प्राचीने प्रळयकाले, अद्वितीयम् -
पेक्षम्, एकम् - अविभक्तनामरूपतया कार्यावस्थानिबन्धनब
सदासीदित्यर्थः । सत एव कर्तृत्वस्य कार्यरूपेण बहुभवनस
माणत्वात् - प्रकरणानुसारेणैकाद्वितीयपदयोरर्थ उक्तः । प्र
पदेन नियन्तृतयावगतस्यैवोपादानत्वोक्तेरिदमिति प्रसिद्धव
श्वेतकेतुर्महामनाः सदेवेति विशिष्टग्रहणमिति स्वयमेव ज्ञ
प्रायेण वैशिष्ट्यन्न कण्ठरवेणोक्तम् । ततश्चेदं सदासीदि
चिदचिद्विशिष्टं सूक्ष्मचिदचिद्विशिष्टमासीदिति पर्यवसितार्थः ।
निर्देशो वादिनिराकरणार्थः । मिथ्यावादिमतमनूद्य दूषयति (
तत् - तत्र, इदम्, अद्वितीयम् - कार्यशून्यम्, अत एवैकम्
मज्ञानमासीत्, तस्मादसतोज्ञानात्प्रातिभासिकाद्व्यावहारिकस
व्यावहारिकसज्जायत इत्यर्थः । "कथमसतस्सज्जायत" इ
स्यैवासिद्धिरसतस्सदुत्पत्त्यसम्भवश्च विवक्षितौ । सच्छब्देन
निरासोभिप्रेतः । 'असदेवेदमग्रआसी' दिति तन्त्रावृत्त्यन्यत
यिकमतानुवादः, 'कुतस्तु खलु सोम्ये' ति तन्निरास
शून्यवादानुवादस्तु न सम्भवति, असत्त्वस्य कालविशेष
सज्जायत इति तैरनङ्गीकाराच्च । लयउक्तः, अथ कर्तृ
चाह (तदैक्षतेति) ईक्षणात्स्यामितिचोभयसिद्धिः । तत्सत
चिद्विशिष्टं ब्रह्म, तेजः - तेजोवस्थम्, 'बहुस्याम्' 'तत्तेज
पूर्वोत्तरानुसारात्; तस्मादित्यौचित्यद्योतनम् ।

इदं सदासीदिति स्थूलस्य लय उक्तः, सृष्टिरप्यत
तत्कथम्भूता सृष्टिरुच्यत इति शङ्कां परिहरन् व्यष्टिसृष्टि
खण्डेन (तेषामिति) आण्डजं जीवजमुद्भिज्जामित्येतेषाम्
कार्याणाम्, बीजानि, त्रीण्येव - तेजोबन्नान्येव । व्य

रुक्तेति भावः । व्यष्टिसृष्टिसङ्कल्पमाह ( सेयमिति ) ननु अन
नुपपन्नम्, अचेतनत्वात्, चेतनत्वेपि निरुक्तलक्षणानुपपत्तिरिति
देवताशब्देन परिहरति । सा- आदेशपदेन निर्दिष्टा, इयम्
। निर्दिष्टा, तिस्रो देवताः - अत्र देवताशब्देन देवताशरीराण्यु
च्यन्ते, यथा देवाधिष्ठितत्वाद्देवशब्देनेन्द्रियाणि । नामरूपव्याकरणा
न्तत्वसिद्धये अनुप्रवेशकीर्तनम्, अनुप्रवेशस्य नामरूपव्याकरणार्थत्व
ार्थे ल्यपा समानकर्तृकत्वनिर्देशः । अनुप्रवेशस्य हि तादर्थ्यं नामरूपव्याकरणप
र्यन्तत्व एव हि सिद्ध्यति । अत एव हि श्रुत्यन्तरम्
नामरूपाभ्यां व्याक्रियत " इति । जीवस्यापि कार्यत्वसिद्धये
रकमनुप्रवेशमाह ( अनेनेति ) अनेन जीवेनात्मनानुप्रविश्यामि व्याक
ीत्यन्वयः । जीवपदं स्वपर्यन्तम्, अतः स्वपर्यायेणात्मशब्देन
ानाधिकरण्योपपत्तिः । अनेन जीवानुप्रवेशस्तद्द्वारकत्वानुप्रवेशश्च
क्षितः । " नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नु
जास्स्रष्टुमसमागम्य कृत्स्नशः ॥ " इति त्रिवृत्करणं विना सृष्टाव
ाक्षमत्वान्नामरूपव्याकरणार्थं त्रिवृत्करणसङ्कल्पमकरोदित्याह ( तासा
ते ) कार्यसङ्कल्पानन्तरं कारणसङ्कल्पो युक्त एव । ' ...
नते ' त्यत्र पाठक्रमो न क्रमनियामकः, किन्त्वर्थस्वभाव एव, ...
र्यकारणभावः । व्याकरणस्य कार्यत्वं सङ्कल्पप्राथम्याद्वगन्तव्य
ामनुप्रवेशकथनात् सद्वारकावस्थाश्रयतयोपादानत्वमुक्तम् । ...
र्यत्वमवस्थाद्वारकम्, चितः कार्यत्वमवस्थावद्द्वारकम्, परमात्मनस्त
थद्वारकम् । सद्वारककारणत्ववत् सद्वारकमाश्रयत्वं चास्त्येव. ...
यनेपि प्रासादे शेत इत्यभिधानात्; जलपूर्णकुम्भवहने ...
योपलम्भाच्च, उह्यमानगुरुत्वस्यैव श्रमप्रयोजकताया यथासम्भवमन
लक्षत्वेन स्वैरमेव प्रयोजकान्तरकल्पनस्यानवकाशत्वात् । न च ...
टावस्थाश्रयत्वप्रसङ्गः, यथादर्शनं पृथक्सिद्धस्य पृथक्सिद्धं प्रति ...
... । एवं च ब्रह्मणस्त...

वस्थाश्रयत्वान्न निर्विकारश्रुतिविरोधोपि । सर्वत्रापि हि निषेधो यथाप्रस
अचेतने ज्ञानन्नेत्युक्ते यस्सम्बन्धश्चेतने दृष्टस्तत्सम्बन्धेनाचेतनेपि प्रस
तेन संसर्गेण निषेधः क्रियते, लौकिकेष्वेव ज्ञानन्न शास्त्रार्थेष्वित्यु
लौकिकेषु दृष्टविषयाविषयिभावसम्बन्धेनैव वैदिकेष्वपि प्रसक्तौ
संसर्गेण निषेधः क्रियते, एवमिहापि येनाद्वारकसम्बन्धेनाचेतने विक
दृष्टस्तेनैव सम्बन्धेन निषेधः क्रियते, अन्यथोपादानत्वसर्वाधारत्वश्रु
विरोधात् । नचाद्वारकसंसर्गप्रतीतौ लक्षणा, प्रतियोग्यधिकरणाभाव
स्थापकपदेषु लक्षणाविरहात् । केन तर्हि तत्प्रतीतिः ? प्रतियोगित्वप्रति
गितावच्छेदकत्ववन्निषेधकवाक्येनैव । एवं विशिष्टस्योपादानत्वमुपादेय
ञ्चोक्तम् । यदाह - किमिदं विशिष्टोपादानत्वम् ? न तावदुभयोः, निर्वि
कारत्वश्रुतिविरोधात्; विकाराश्रयत्वं ह्युपादानत्वम्; अत एव न वि
ष्यस्य; नापि विशेषणस्य, ब्रह्मणोनुपादानत्वप्रसङ्गादिति;- तन्न, उभयोपाद
नत्वस्यैव विवक्षितत्वात् - विशेषणं विशेषणोपादानं विशेष्यं विशेष्यो
पादानमिति । उक्तरीत्या ब्रह्मणि विकाराश्रयताया द्वारसापेक्षत्वादपि विशि
ष्टोपादानत्वव्यपदेशः । एवञ्चेदमिति स्थूलचिदचिद्विशिष्टब्रह्मरू
कार्यन्निर्दिश्य सदासीदिति तस्य स्थूलावस्थाप्रहाणेन सूक्ष्मचिदचिद्वि
शिष्टकारणरूपता प्रतिपद्यते । एतत्सर्वमभिप्रेत्य नामरूपव्याकरणमनु
प्रवेशप्रयोज्यमुक्तम् । प्रयोजकत्वं च रूपाश्रयत्वनामवाच्यत्वाभ्यामेव
सिद्ध्यति । नहि पितृकुलालयोरनुप्रवेशो नामरूपव्याकरणे हेतुतया
दृष्टः । कार्यप्रयोजकमेव हि त्रिवृत्करणमिह कीर्त्यते । अत
प्रकरणावगतञ्च प्रयोजकत्वम् । अन्यथा भूतसृष्ट्यनन्तरं कार्यसृष्टिं वक्तुं
प्रथमतस्सामान्येन कार्यत्रैविध्यमुखेन कार्यमुपाक्षिप्य ' हन्ताहमिमा ' इत्या-
दिना कार्यसृष्टिं प्रतिपादयितुं प्रवृत्तस्य मध्येनुप्रवेशकीर्तनं स्वज्ञान
गच्छतो [illegible]

च सृश्यते न तु द्रव्यमुत्पद्यत इति यत्पूर्वमुक्तम्, तद्राष्टी
गष्टीकृतम्। एवन्तृतीयखण्डे व्यष्टिसृष्टिरुपपादिता।

वन्त्रिवृत्करणमन्यस्य कार्यद्रव्यस्याभावञ्च संवादयति चतुर्थे
(यदग्नेरित्यादि) (अपागादिति) अग्नित्वेन पराभिमतात्
यस्मात् अग्नित्वमपागादित्यर्थः। पूर्वोक्तामुपपत्तिं स्मारयति
भणामिति) भूतत्रयरूपाण्येवाग्नौ प्रत्यभिज्ञायन्ते, साच
साधिता, रूपान्तरानुपलम्भादिति भावः। गुर्वन्तरसंवादमाह
मेतिं) तत् - कार्यकारणयोरनन्यत्वम्, एतत् - त्रिवृत्करणम्,
आहुरित्यर्थः। तेभ्यस्सकाशादन्ये केचनेममर्थमवेदिषुरित्याह
हाशाला महाश्रोत्रिया न नोद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्य
भ्यो विदांचक्रुरिति) महाशालाः- यज्वानः, महाश्रोत्रियाः- श्रुतवे-
अविज्ञातम् - भूतत्रयातिरिक्तं कार्यद्रव्यम्, नकश्चिदपि, नः -
म्, अस्मत्पुरतः, उदाहर्तुं शक्नोतीतीममर्थम्, एभ्यः- विद्वांस इति
यः, विदाञ्चक्रुरित्यर्थः।

जीवस्य शरीरद्वारकं कार्यत्वमाभिप्रयन् तस्य कार्यत्वसिद्धये शरी-
तत्रयमयत्वमाह पञ्चमखण्डेन (अन्नमाशितमिति) 'तन्मन'
ायुर्घृतामिति वद्व्यपदेशः। तेनाप्यायितमित्यर्थः। सूक्ष्मस्य सारां
कथन्ततो निर्गम इत्यभिप्रायेणाह (भूय इति)

सूक्ष्मनिर्गममुपपादयति षष्ठखण्डेन। आप्यायकत्वमुपपादयेत्याह
इति)

आप्यायकत्वमुपपादयति सप्तमखण्डेन (षोडशेति) (अन्या-
ति) वह्नेरिति शेषः। एतर्हि - इदानीम् (तद्धास्येति) आचा-

रनन्यत्वं कर्तुरुपादानत्वं चिदचिद्विशिष्टस्योपादानोपादेयभावञ्च वि
सोपपत्तिकं कुदृष्टिनिरसनपूर्वकं ज्ञातवानित्यर्थः । 'हे' ति कुदृष्टिनिर
प्रयुक्तहर्षो द्योत्यते । श्वेतकेतोस्स्वेनोत्पादितां भगवतस्सर्वोपादनत्व
मवेदान्तिनोपहरेयुरिति पुत्रस्नेहेनापायमाशङ्क्य स्वेनोत्पादितां
विशिष्टोपादानत्वं सोपपत्तिकं नवकृत्वोभ्यस्य द्रढयति नवभिः खण्डै

जीवविशिष्टस्य परमात्मनः कार्यता द्विविधा, एका ज्ञानाव
द्वारिका, अपरा शरीरद्वारिका, द्विविधामपि तामुपपपादयति अष्टमखण्
( स्वप्नान्तमिति ) स्वप्नस्यान्तः— सुषुप्त्यवस्था, यत्र - यदा, सुषु
वस्थायाम्, पुरुषशब्दो ब्रह्मपर्यन्तः, सता सम्पन्नो भवति — ज्ञ
विकासरूपस्थूलावस्थाप्रहाणेन सूक्ष्मचिदचिद्विशिष्टब्रह्मणि लीनो भवति
' आचक्षत ' इति वैदिकप्रसिद्ध्यभिप्रायम् । स्थूलावस्थाप्रहाणमुपप
यति ( यथा शकुनिरिति ) प्राणोजीवः । द्वितीयं कार्यत्वमुपपादय
( अशनायेत्यादिना ) तत्र स्वपितीति प्रसिद्ध्येवाशनायापिपासाप्रसिद्धिः
विवक्षितं साधयति । किन्तत इत्यत्राह ( तत्रैतादिति ) तत्र— अ
नावस्थायाम्, एतत्— एतत्कालीनो विकारः, शुङ्गम्- अङ्कुरम्
कारणानुमापकमित्यर्थः ( तस्येति ) अद्भिर्नीतम्, क्षीणमन्नम्, तत्कार
मित्यर्थः ( अन्नेनेति ) उक्तरीत्या तन्नेतृत्वात् कारणत्वाच्चेति भावः
( सन्मूला इति ) यत एवं भूतत्रयात्मकत्वं शरीरस्य भूतानाञ्च सन
लत्वम्, अतः प्रजा भूतत्रयात्मशरीरसंसृष्टाः, सन्मूलाः— सत्कार्यभूताः
सदायतना इति स्थितिरुक्ता, सत्प्रतिष्ठा इति लयः ( यत्रैतत्पुरु
पिपासति नामेति ) पूर्ववद्योज्यम् । जीवस्य ब्रह्मकार्यत्वसिद्ध्ये श
रस्य भूतत्रयात्मकत्वमुक्त्वा तदपि त्रिवृत्कृतभूतत्रयात्मकत्वमेवेत्यभिप्राये
त्रिवृत्करणोपपादनं स्मारयति (यथात्विति) भूतावस्थाद्वारकं लयमुपपाद
(अस्य सोम्येति) एवमुपादानत्वमुपपद्यत एवेत्यभिप्रायेणोपसंहरति (स य इति

कं सदादेशस्वरूपं स्थूलचिदचिद्विशिष्टं ब्रह्म सूक्ष्मचिदचिद्विशिष्ट
ामित्यर्थः । कुदृष्टिभिरविचाल्यत्वाभिप्रायेणाह ( तत्सत्यमिति )
ेदबुद्धिं वारयति ( स आत्मेति ) तस्यान्तर्यामित्वेन स्थूलसूक्ष्मा
ायोगादयं भेदव्यपदेश इत्यर्थः । तत्त्वमसीति विशिष्टोपादानो
वे श्वेतकेतुमेवोदाहृत्योपसंहरति दार्ढ्यार्थम् । 'स त आत्मान्तर्याम्यमृत'
्, 'तत्त्व' मिति पदद्वयमपि परमात्मपर्यन्तम् । श्वेतकेतुपदन्तु न
सम्बोधनत्वात् । युष्मदुपपदत्वान्मध्यमपुरुषः । कथन्तर्ह्यहमनेन
इति सम्पत्त्यग्रहणमित्यभिप्रायेण पृच्छति ( भूय इति ) ननु-
ययादि' ति सूत्रे 'सता सोम्ये' त्युक्ता सत्सम्पत्तिः प्रकृति
ेतुतयोच्यते, तस्याश्च तद्धेतुत्वं 'स्वमपीतोभवती' ति सत्स-
स्वस्मिन् लयरूपत्वोपपादनात् ; जीवस्य सति लयः तथाहि
न् लयो भवति , यदि जीवब्रह्मणोरभेदस्स्यात् ; स्थूलजीवशरीर
सूक्ष्मजीवशरीरके लयस्यात्र विवक्षायामपि साङ्ख्यान्प्रति कथमियं
च्येत, ब्रह्मण एव तैरनङ्गीकारात् ; इति चेत् ? उच्यते,
ह्माभेदपक्षे जीवस्य ब्रह्मणि लयो हि न मुक्तेः प्राक्सम्भवति,
काले हि अन्तःकरणस्य सूक्ष्मरूपतापत्त्या स्थूलस्य जीवस्य सूक्ष्मे
लय इति स्यात्, तस्माज्जीवस्य प्रकृतौ लयासम्भवाज्जीवब्रह्माभेदेपि
तिपादनानुपपत्तेश्च उक्तरीत्यैव स्वाप्ययविवक्षया साङ्ख्यनिरासोभिप्रेतः ।

अग्रहणमुपपादयति नवमखण्डेन ( यथासोम्येति ) 'पुरुषः
ति' 'नविदुरि' ति एकवचनबहुवचनाभ्यां पूर्वत्र ब्रह्मपर्यन्ततां
त्र जीवपर्यवसानञ्च स्फोरयति । तेन जीवस्य ब्रह्मसम्पत्तिः
ावस्थाावियुक्तब्रह्मण्यवस्थानम् । ( अमुष्याहमिति ) अमुष्य, सोह
सङ्गतोस्मीति विवेको नेत्यर्थः । सामग्रीविरह एव तस्य तथा
ाभावनिबन्धनम् , स एवेहापीति भावः । सामग्रीसम्भावनामपि
[illegible] । ( न इहेति ) यथा पूर्वं सुप्तास्तद्दशा-

यामपि व्याघ्रादयो भवन्त्येव, तथापि तद्रूपन्न जानन्ति, त
भावः। सुप्तोत्थितज्ञानं वा विवक्षितम्। 'तदे' ति सुप्तो
परामृश्यते। अत्रापि पक्षे स्वापकाले व्याघ्रादिरूपवदेव स
न जानन्तीत्येव भावः। (सएषोणिमेति) पूर्ववत्। कथमाग
मिति पृच्छति (भूय इति)

तदुपपादयति दशमखण्डेन (इमास्सोम्येति) (इयमह
अस्मात्समुद्रादागताहमस्मीति न जानन्तीत्यर्थः। 'स य ए
पूर्ववस्थाविशिष्टस्य लय उक्तः, तत्र जीवस्यैव कथं मरणं
त्यभिप्रायेणाह (भूयइति)

तदुपपादयत्येकादशेन (अस्यसोम्येति) 'सय' इति
अणिम्नः कथम्महत्वमित्यभिप्रायेणाह (भूय इति)

तदुपपादयति द्वादशेन (न्यग्रोधेति) यदि परमात्मा
णानुगतः, कथन्तर्हि तदनुपलम्भः, अनुपलम्भे तस्य तत्रानुगतत्वे
नमित्यभिप्रायेणाह (भूय इति)

तदुपपादयति त्रयोदशेन। 'सय' इति पूर्ववत्। ल
ज्ञानोपायः क इत्यभिप्रायेणाह (भूय इति)

तदुपपादयति चतुर्दशेन (यथासोम्य पुरुषमिति) (आचार्यवानिति
र्यवानुपदेशेन तं सदादेशं वेद, तद्विदो मम सम्पत्तौ शरीरवियोगप
विळम्ब इत्यपि जानाति, तदुपासनस्य मोक्षसाधनतया आचार्येणाभिध
भावः। 'न विमोक्ष्य' इति मोक्षतया किं विवक्षितमित्यभि
(भूयइति)

विवक्षितमाह पञ्चदशेन (पुरुषं सोम्येति) 'सय' इति

ृदम् — ब्रह्मणः कर्तृत्वं विशिष्टोपादानत्वं च तप्तपरशुग्रहणेन
ातव्यमित्याह चरमखण्डेन ( पुरुषंसोम्येति ) ( सयथेति ) तथा-
ादानबाधपि तच्छ्रद्धापनाय तप्तपरशुग्रहणे न दह्येतेति भावः ।
इति पूर्ववत् ।

कर्तुर्विशिष्टोपादानतया 'आदेशम्' 'येनाश्रुत' मित्युपक्रमः,
त्म्यमिदं सर्वमात्मे ' त्युपसंहारः, अस्यैवाभ्यासः, अपूर्वत्वं प्रसिद्धम्,
सम्पत्स्य ' इति फलम्, आख्यायिकार्थवादः, दृष्टान्तप्रदर्शनानु-
थनादिरुपपत्तिः, एवं षड्विधतात्पर्यलिङ्गोपेतया सद्विद्यया कर्तु-
ापादानभावस्समर्थितः ।

श्रुत्यन्तराण्यपीमामेवानुरुन्धते । 'असद्वा इदमग्र आसीत्' —
स्थं ब्रह्म तच्छून्यं सूक्ष्मावस्थमासीत् । 'ततः'- असतः,
स्थादित्यर्थः । 'सत्'- स्थूलावस्थम् । कार्यकारणयोरभेदं
ोपादानत्वं कर्तृत्वञ्चाह ( तदात्मानं स्वयमकुरुतेति ) अनेन 'तत्तेजो
' त्यादौ तेजआदिपदानां भगवत्पर्यन्तत्वं प्रख्यापितम् । 'तत्'-
, सूक्ष्मावस्थम् । एवम् - 'आत्मा वा इदम्' 'ब्रह्म वा इदम्'
ह वै नारायणः' 'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी
क्षुः' 'आत्मन आकाशस्सम्भूतः' 'यतो वा इमानि भूतानि
न्ते' 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदि'
वाक्यान्यप्येतदर्थकानि ।

इमं सद्विद्याराद्धान्तमसहमानाः प्रकारान्तरमपि उपादानत्वे निर्वोढु

त् । बहुधर्मैस्साहृस्यस्य घटादावेव सम्भवात्, ब्रह्मणि तद्-
। किञ्च - श्रुतं मतं विज्ञातमित्युच्यते । ब्रह्मज्ञाने सति कथंचि
( ज्ञाततासम्भवेपि कथं ब्रह्मणि श्रुतत्वादौ सत्यन्यत्र श्रुतत्वा-
। प्राधान्यपरत्वे मतविज्ञातपदयोरपि तथात्वे पौनरुक्त्यम् ।
ाधान्यात् सर्वस्य श्रुतादिप्रायत्वविवक्षायामौपचारिकत्वं स्पष्टम् ।
श्रुतपदेन युगपच्छ्रुतत्वश्रुतप्रायत्वरूपमुख्यामुख्यार्थबोधनासम्भ-
द्वावृत्तिस्तन्निबन्धनवाक्यावृत्तिश्च प्रसजेत् । यथा सोम्येकेनेत्यस्या
पपन्ना । 'तनूर्वर्षिष्ठे' त्यत्र तु अयाशयारजाशयेत्यनयोस्साकाङ्क्षत्वा
पन्ना । मृदादिशब्दानामशब्दानुशासनत्वादर्थपरत्वेन शब्दपरत्वमनु
मृत्पिण्डमृण्मयमृत्तिकाशब्दानां लोहमणिलोहमयशब्दयोर्नखनि-
र्णायसशब्दयोश्च मिथो व्याघातः । व्याकरणाध्ययनसाध्यत्वात
तदेवाव्यापकम् । किञ्च - 'वाचारम्भणं विकारो नामधेयं
रूपाणीत्येव सत्य' मित्यत्र कां गतिं यास्यथ । तत्र उक्तकुसृष्ट्य
तद्वैरूप्यमिहानुपपन्नम् । यच्च - तैरेवोक्तम् - 'बहुस्या' मिति
प्रवेशार्थं विग्रहविशिष्टरूपेण बहुभवनमुच्यत इति; तत्तुच्छम्, स्व-
हुभवनस्य सिद्धेः, कार्यविशिष्टबहुभवनस्य वक्तुं शक्यत्वाच्च;
थिवीशरीर' मित्यादिना सर्वेषां विग्रहत्वसिद्धेः कार्यरूपविग्रहविशिष्ट
हुभवनं सङ्कल्प्यत इति कुतो नेष्यते। किञ्चैवं सति सङ्कल्पसर्गयोः पर
नभिज्ञत्वप्रसङ्गः, तथाच 'नामरूपे व्याकरवाणि' 'नामरूपे व्याकरोत्'
करवाणि' 'त्रिवृतमकरोदि' ति सङ्कल्पितकरणोक्तिप्रकरण
। 'तत्तेज ऐक्षत' 'बहु स्याम्' 'ता आप ऐक्षन्त' 'बह्व्य
' इति कथं सङ्कल्पकीर्तनम् । ब्रह्मलक्षणायां स एव दोषः ।
त्राप्यस्वारस्यं द्रष्टव्यम् ।

अपरेत - मिथ्याभूतस्य जगतो मिथ्याभूता मायोपादानम्, सा

िकाराश्रयत्वम् , स्वसमानसत्ताकविकाराश्रयत्वं परिणामितयोपादानत्वम् ,
ासमानसत्ताकविकाराश्रयत्वं विवर्ताधिष्ठानतयोपादानत्वम् , कार्यं च कारणा
द्भिन्नम् , कार्यत्वादेव प्रातर्या मृण्मया दृष्टा सैवेदानीं घटादिरभूदिति
त्यभिज्ञया कार्यं कारणादभिन्नञ्च, अभेदश्चानिर्वचनीयः, तादात्म्य
ववा सामानाधिकरण्यनिमित्तम् , तच्च भिन्नत्वे सत्यभिन्नसत्ताकत्वम् , इदं
थक्सिद्धमात्रसाधारणम् , अत एव शुक्लो घट इति सामानाधिकर
ण्यम् , तस्मान्माया ब्रह्मणि उपादानमिति ; तेच सद्विद्यामनुरुन्धाना इव
गेत्प्रेक्षितार्थे कथञ्चित्सद्विद्यां पातयन्ति । आदेशशब्द उपदेश्यपरः ।
येनाश्रुतमित्यादि ) ब्रह्मस्वरूपे ज्ञाते प्रपञ्चस्वरूपं ज्ञातमेव, मिथ्या
स्याधिष्ठानमेव हि स्वरूपम् , तदतिरिक्तस्वरूपाभावात् ; दृष्टान्ते -
त्पिण्डमृण्मयादीनामपि ब्रह्मण्यध्यस्ततया मृदादिस्वरूपे ज्ञाते तत्कार्य
रूपमपि ज्ञातमेव ( वाचारम्भणमिति ) वागालम्बनम् , व्यावहारिक
त्यर्थः ( मृत्तिकेत्येव सत्यमिति ) मृत्तिका स्वरूपेणैव सत्यमित्यर्थः,
द्व्यतिरेकेण सत्ताविरहादिति ।

तदपि न, अधिष्ठानस्यानुपादानत्वात् । नहि शुक्तीरजतोपादानम् ,
ातानाश्रयत्वात् । रजताभेदेन हीदमर्थस्य प्रतीतिः । कार्याश्रयत्वं
ुपादानत्वं त्वयोक्तम् । यच्च भेदाभेदोपपादनम् , तत्तैरेव भेदाभेद
राकरणाद्विरुद्धम् । नच विषमसत्ताकयोरङ्गीकारादविरोधः, इह भेदा
ायोर्विषमसत्ताकत्वासिद्धेः । ननु- भेदः पारमार्थिकः, अभेदोनिर्वचनीयः;
ाद्वैतक्षतिः, भेदो ब्रह्मस्वरूपमित्यङ्गीकारादिति चेन्न;- घटस्यापि पटवद्घट
प्रसङ्गात्; भेदवादिनापि तथैव वक्तुं शक्यतया भेदखण्डनासम्भवाच्च ।
। प्रातिभासिकव्यावहारिकरूपेण भेदः, अभेदस्याबाधितप्रत्यभिज्ञासिद्धतया
तेभासिकत्वानुपपत्तेः । भेदस्य प्रातिभासिकत्वे कार्यत्वानुपपत्तेः । नच
क्तिकत्वात् भेदो व्यावहारिकः, अभेदः प्रतीतिमात्रसिद्धत्वात् प्रातिभासिक

द्वेद्यानिपातनञ्चानुपपन्नम् । तथाहि - उक्त आदेशशब्दार्थः
पपत्तिश्च । येनाश्रुतामिति अधिष्ठानस्य मिथ्यावस्तुस्वरूपत्वं
प्रसिद्धम् । नच स्वरूपान्तराभावो मानम् , मिथ्यावस्तुन एव
स्वरूपत्वात् । यदि तत्तस्य स्वरूपन्न भवेत् , तर्हि तन्निःस्व-
स्यात् । नहि वायौ रूपान्तराभावात् पृथिव्यादिरूपमेव तदीय
क्रियते, किन्तु नीरूपमित्येव ।

ञ्च - मिथ्यात्वादेव यथा मिथ्यार्थस्वरूपन्न स्यात् तथा मिथ्या-
स्वरूपसापेक्षोपि न स्यात् । अश्रुतामताविज्ञातपदानां स्वरूपे
च स्यात् , अश्रुतादिपदार्थात् प्रपञ्चरूपात् ब्रह्मणोन्यत्वा
परिच्छिन्नव्यावृत्तिं ह्यावर्तयसि । यथासोम्येति पिण्डघटयोः कथ
त्वम् , भिन्नकार्यत्वात् ।

केञ्च - 'कथन्नु भगवस्स आदेश' इति पृष्टवन्तं प्रति ह्ययं
उच्यते, दृष्टान्तश्च पूर्वं निर्ज्ञातः, अद्वैतोपदेशार्थश्चायमारम्भ
मतम् , एवञ्च प्रपञ्चमिथ्यात्वस्य प्रागनवगमात् दृष्टान्ते
टयोः ब्रह्मैव स्वरूपमित्यनवगमात् कथं दृष्टान्तः ? दृष्टान्तस्या
नादेव 'वाचारम्भण' मिति तदुपपाद्यत इति चेन्न ; —
थ्यात्वज्ञानात् प्राक्त्वदुक्तवाक्यार्थस्याप्यपरिज्ञानात् ।

किञ्च - मृत्पिण्डमृण्मयलोहमणिलोहमयनखनिकृन्तनकार्ष्णायसप -
क्षणा च स्यात् । तथा मृत्तिकादिपदत्रयस्यापि । ब्रह्मण एव सर्वेषां
वाद्यस्य कस्यापि स्वरूपे ज्ञाते सर्वेषां स्वरूपं ज्ञातमेवेति विशिष्य
युक्तिर्निर्णिबन्धना । कारणस्वरूपमेव कार्यस्वरूपमिति चेन्न;- विशेषणत्वे
स्यापि घटस्वरूपत्वप्रसङ्गः, उपलक्षणत्वे पूर्वोक्तदोषस्तदवस्थः ।

किञ्च - ब्रह्मज्ञानेन सर्वस्य स्वरूपज्ञाने प्रतिपादिते ब्रह्मणोधि
तत्र प्रपञ्चस्याध्यस्तत्वे च सत्येव ब्रह्मज्ञानेन प्रपञ्चस्वरूपस्य

त्खलु एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्, तत्र कथमस्य दृष्टान्तस्या नुगुण्यम्, यथा सोम्यैकया रज्ज्वा सर्पभूदळनाम्बुधारादि सर्वं विज्ञ स्यादित्युक्तिर्हि तदनुगुणा ।

किञ्च- मिथ्यात्वे प्रतिपिपादयिषिते 'वाचारम्भण' मित्येवालम् 'मृत्तिकेत्येव सत्यमि' त्येवं रूपवाक्यत्रयं व्यर्थम् । मृत्तिकापदस्य मृत्तिकामात्रपरत्वे एवकारेण घटव्यावृत्तिरनुपपन्ना, मृद्घटयोस्सत्वे विशेषाभावात् । स्वरूपपरत्वेपि तथैव मृत्तिकापदं स्वरूपपरम् । व्यावहा मृण्मयमात्रमित्युक्तौ न मृत्तिकाग्रहणे निमित्तं पश्यामः । यदि तत्कार्यस्य सत्त्वप्रतीतेर्गमनिकोच्यत इति न वैयर्थ्यम्, तर्हि विकारस्वरूपमेव सत्यमित्येव वाच्यम् । ननु कारणसत्यत्वं कार्यस्य मिथ्यात्वञ्च खलु प्रतिज्ञाभिप्रेते, तथैव दृष्टान्तेपि विवक्षितमिति दृष्टान्तानुगुण्यमिति चेन्न:- तथा सति मृत्तिका सत्या न घट इत्यनुपपत्तेः, उभयोर्मिथ्यात्वस्य व्यावहारिकत्वस्य चाविशेषात् । इतिपदञ्च व्यर्थम्, मृत्तिका सत्येति हि वाच्यम् । वाचारम्भणपदेन व्यावहारिकत्वलाभश्चातिक्लिष्टः । कटकादिकार्यक्षमत्वं हि व्यावहारिकत्वम्, नतु वाग्विषयत्वम्, प्रातिभासिकेपि सत्वात् । यदि व्यावहारिकपदं रूढम्, तदा सुतरां व्यावहारिकपदार्थस्य वाचारम्भणपदेनोपस्थापनासम्भवः । नामधेयश्रवणञ्च व्यर्थम् । सिद्धान्ते तु नामभेदात् कार्यद्रव्यभेदशङ्कानिरासः प्रयोजनम् ।

यच्चेदमुच्यते- ब्रह्मणि ज्ञाते सर्वं मिथ्यात्वेन ज्ञातं भवतीति; तदपि मन्दम्, घटादिज्ञानानामपि ब्रह्मविषयतया तेषु सत्स्वपि मिथ्यात्वज्ञानासिद्धेः । ब्रह्मणोद्वितीयत्वज्ञानविवक्षायां मिथ्यात्वज्ञानपर्यवसानादात्माश्रयः । 'कस्मिन्नु खलु विज्ञाते इदं सर्वं विदितं भवती' ति वाक्ये प्रपञ्चस्य ब्रह्मज्ञानविषयतायास्स्वरसतः प्रतीतेस्तज्ज्ञानसाध्यत्वोक्तिरनुपपन्ना । दृष्टान्तानुपपत्तिश्च स्पष्टा । 'सदेव सोम्येदमग्रआसी' दिति प्रपञ्चमिथ्यात्वमुच्यत इत्यप्यनुपपन्नम्, 'अग्रे इदं सदासी' दिति इदानीं

ात् । सत्पदेन ब्रह्मोपस्थापने कथन्तदभेदोक्तिः ? यद्यधिष्ठानात्म-
त्वेन तादात्म्यात् सा, तदा अग्र इत्यनुपपन्नम् , इदानीं
नाध्यस्यमानभावात् । वस्तुतस्तु इदानीमेवाधिष्ठानाभेदः, अध्या
व तदभेदात् । तत्वावेदकवाक्यस्य भ्रमोत्पादकत्वञ्चानुपपन्नम् ।
सीदित्यर्थाङ्गीकारे लक्षणा, मिथ्यात्वासिद्धिश्च । नहि - कालविशे
त्रेण मिथ्यात्वसिद्धिः । नच सजातीयविजातीयस्वगतभेदशून्य-
ादनान्मिथ्यात्वसिद्धिः । किं सदनुवादेन सजातीयादिभेदशून्यत्वं
, किं वा सजातीयादिभेदशून्यवस्त्वनुवादेन प्रपञ्चभेदः ? नाद्यः,
लु सदेवाग्रे एकमेवाद्वितीयमासीन्नान्यदग्रे एकमेवाद्वितीयमासी-
स्यात् , तत्रेदमिति पदानन्वयः स्पष्टः । सदेवेत्येवकारस्य विधी
स्य तत्काले ऽन्यत्र व्यवच्छेदपरतया तस्य त्वदभिलपितार्थपरत्व
। न द्वितीयः, प्रपञ्चस्य विद्यमानतादशायामेवाधिष्ठानतादात्म्यन्न
क्तत्वात् । तस्मात्प्रळयकाले प्रपञ्चजातमेकमेवाद्वितीयं सदासी-
। एकमेव बहुस्यामिति वक्ष्यमाणबहुत्वावस्थाशून्यमेव कर्त्रन्तर
सदासीदित्यर्थः । बहुस्यामित्यनुसारादेकशब्दार्थनिर्णयः , उपादानत्व
कर्त्रन्तरस्य घटादिवदाकांक्षितत्वात् । अद्वितीयो देवदत्त आस्त
सजातीयपुरुषान्तरनिषेधवत् सत्पदस्यादेशपदार्थोपस्थापकतया कर्तृ
द्वितीयशब्दस्य कर्त्रन्तरनिषेधपरत्वात् आकाङ्क्षासत्पदाभ्यां अद्वि-
स्यार्थनिर्णयः ।

'तद्धैक आहु' रित्यस्य परोक्तार्थपरत्वं प्रागेव निरस्तम् ।
ादिनिराकरणपरत्वं च प्रागेवोक्तम् । बहुस्यामित्यप्यनुपपन्नम् ।
न्निर्विशेषस्यायं सङ्कल्पः, तत्वादेव । नापीश्वरस्य, तस्य भ्रमा-
प्रपञ्चे बहुस्यामिति स्वाभेदभ्रमासम्भवात् । 'हन्ताह' मित्य-
ति निर्देशश्च निर्विशेषस्य - ईश्वरस्यचानुपपन्नः । तेजसोपाञ्च
र्तृत्वप्रतिपादनञ्चानुपपन्नम् । किञ्चैवम्मिथ्यात्वतात्पर्ये कर्तृत्वोप-

... नात्पर्यम् । तत्रैव कृत्स्नानुगुण्यं प्रागेवोपपादितम्

एवं प्रथमखण्डे आदेशपिण्डमणिपदत्रयमश्रुतादिपदत्रयम्मृ ...पदत्रयं मृण्मयादिपदत्रयं वाचारम्भणपदत्रयं नामधेयपदत्रयं ... ...दिपदत्रयमितिपदत्रयमिति चतुर्विंशतिपदान्यस्वरसानि । अनिर्ज्ञात ...त्वाच्च दृष्टान्तवाक्यत्रयमस्वरसम् । नहि पराभिलषितार्थानुगुणो दृष्ट ...नुक्तमेव ।

द्वितीयखण्डे सत्, इदम्, अग्रे, आसीत्, सज्जायते, सत्त्वं ...इदमग्र आसीत्, तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोसृजत, तेज ऐक्ष बहुस्यां प्रजायेयेति, तदपोसृजत, ता आप ऐक्षन्त, बह्व्यःस्याम प्रज ...येमहीति, ताअसृजन्ते, त्यादिपदान्यस्वरसानि ।

तृतीयखण्डेपि 'अनुप्रविश्य नामरूपे व्याकरवाणि, अनुप्रावि... व्याकरोदि' ति ब्रह्मणस्सङ्कल्पकर्तृत्वे अनुपपन्ने इति प्रागेवोक्तम् । ईश्वर... तु जीवाद्भिन्नत्वात्समानकर्तृकत्वानुपपत्तिः ।

चतुर्थखण्डे 'अपागादग्नेरग्नित्व' मित्यादेर्मिथ्यात्वपरत्वे अग्नेर... ...त्वमपागादिति अग्निमङ्गीकृत्य तत्र धर्मनिषेधो ऽनुपपन्नः । 'त्रीणि रूप... ...णीत्येव सत्यमि' त्यपि न मिथ्यात्वसाधकम्, अनुपपन्नश्च । त्रीणि रूपाण... ...त्येव सत्यमित्यत्र त्रिरूप्यधिष्ठानसद्विवक्षायां तल्लक्षणैव दोषः ...कार्याधिष्ठानसतोपि सत्यत्वाद्विशेषोक्त्यसम्भवश्च ।

'न्यग्रोधफल' मित्यादिद्वादशखण्डे 'श्रद्धत्स्व सोम्ये' त्युच्यते अतएव तदर्थ एव प्रकरणे प्रतिपाद्यत इत्यवगम्यते । नचात्राधिष्ठान... ...प्रतिपाद्यते, किन्तु परिणामित्वम्, अणिम्नो महान् न्यग्रोधस्तिष्ठतीत्य... ...भानात् । न्यग्रोधफलेपि वृक्षो न दृश्यते, नापि तदन्तर्गतास्वण्वी... ...धानासु, तस्मादण्व्या धानाया एवायं परिणामो वृक्ष इति—परिणाम... ...पपादने हि तात्पर्यं गम्यते । यदि सूक्ष्मस्थूलाध्यासोपपादने तात्पर... ...स्यात्तदा हि काचाद्यधीनलिपिस्थूलाध्यासादिरुदाहर्तव्यः । तस्मात्पर्यो...

असद्वा इदमग्र आसी ' दित्यत्रासदिति कार्यस्वरूपासत्त्वमेवो-
आत्मानमकुरुते ' ति विग्रहविशिष्टरूपेण सृष्टिरुच्यत इति
ाख्यानमनुपपन्नम् ; तदित्यसतः परामर्शात्कर्तृत्वानुपपत्तेः ।
आकाशस्सम्भूत' इति प्रकृत आत्मा परामृश्यत इति चेन्नः- तदिति
ानुपपत्तेः । 'सच्च त्यच्चाभवदि ' ति सत्त्वादिगुणाभिव्यक्तिपरमित्य-
म् , ब्रह्मणस्सत्त्वादिगुणासिद्धेः । सदिति स्वरूपविकारशून्यो
च्यते, त्यदिति स्वरूपविकारवदचेतनमुच्यते, सृष्टिकथनात्
स्यानुप्रवेशाधीनत्वकथनाच्च विवर्ततात्पर्याभावोवगम्यते, सृष्ट्यनु-
भद्भावानां समानकर्तृकत्वमात्रं विवक्षितम् ।

एवं निर्विकारत्वश्रुतेरुपादानत्वश्रुतेश्च सद्वारकमुपादानत्वं सिद्ध्यति,
पूर्वद्वारा स्वर्गसाधनत्ववत् । एवं विशिष्टोपादानत्वं श्रुतिभिः प्रति-
तथा अपृथक्सिद्धचिदाचिद्वैशिष्ट्यश्चान्तर्यामिब्राह्मणसुबालोपनिष-
बहुशः प्रतिपन्नम् । तस्मात्सूत्रोपनिषदां सामरस्याद्विशिष्टा[illegible]
ांसाशास्त्रविषय इति सिद्धम् ।

**अथ देवमीमांसा** – अस्मिन् शास्त्रे का देवता प्रतिपाद्येति ?
ते पाशुपततन्त्रानुसारिणः । भगवानेवेति वेदान्तिनः ।

पूर्ववादिन आहुः - ' शब्दादेव प्रमित ' इति सूत्रे शब्दशब्दः
रः, ' ईशानो भूतभव्यस्ये ' ति वाक्यमुदाहरणम् , ततश्च
ात् ' - ईशानश्रुतेरित्यर्थः । श्रुतिश्च रूढिः । ईशानशब्दश्च रुद्रे
ते अनेन सूत्रेण तस्यैव ब्रह्मत्वावगमात् कृत्स्नं शास्त्रन्तद्विषयमेवेति ।

वेदान्तिनस्तु - जगत्कारणत्वं ब्रह्मणो लक्षणमभिहितम् , तदेव
केन निरूपितम् , तदुपासनन्तृतीये, तत्प्राप्तिश्चतुर्थे, इति कृत्स्न
शास्त्रं कारणविषयत्वाद्भगवद्विषयमेवेत्यनुगृह्णन्ति । तेषामयमाशयः ।

स्मकाय भगवते नमस्कार उक्तः। प्रथमपक्षे शरीरविशिष्टगतरुद्रत्वज्ञाने किं
प्रयोजनमिति बुद्ध्या देवानुजिघृक्षया भगवन्तमुपदिदेश । अत्र किमर्थं
जिज्ञासा ज्ञातव्यमेव जानन्त्विति भावः । प्रश्नोत्तरयोर्वैयधिकरण्यपरि
हारार्थं तथोपासनार्थं च सामानाधिकरण्येन उत्तरं कृतम् । तपस्वित्व
च 'सोपि त्र्यम्बक इमामृचमुद्गायन्नुत्ग्रथितजटाकलापः प्रत्यक्ज्योति
ष्यात्मन्येवारमतारमते' ति तापनीयवाक्यसिद्धम् । रुद्रपदस्य परमात्म
परत्वेऽपि प्रतिपर्यायं रुद्रविशेषणोपादानाद्रुद्रं स्तुवन्तीत्युक्तम् । निर्धारणा
शक्ताः पप्रच्छुरिति पक्षे परिचयेन रुद्रं ज्ञात्वा रुद्रपदं प्रयुक्तवन्तः
एवमितिकरणं स्वस्थान एव योजितम्। कृत्स्नरुद्रवाक्यसमाप्तावितिकरणं योज्य
मित्यप्याहुः । तदानीं 'सोन्तरा' दिति वाक्यमपि रुद्रस्यैव । भगव
त्सार्वात्म्यमेव मया व्यपदिश्यत इति भावः। अस्यां योजनायां 'सोहन्नित्या
नित्य' इत्यत्र स इति निर्देशस्स्वरसो भवति । 'प्राविश' दिति स्वेनैवोक्त
स इति परामृश्य स परमात्मैव अहञ्च नित्यश्चानित्यश्चेत्येवं स इतिनिर्देश
स्सफलोपि भवति । पक्षान्तरे तु पूर्वमहमेवेति वाक्यानिर्दिष्टस्य स्वस
स इति परामर्शः स्यात् , तदा न किञ्चित् प्रयोजनम् । यदि स इ
भगवन्तमेव परामृश्य स एव अहंच नित्यश्चेत्येवमर्थः पक्षान्तर एवोच्येत
तदा साफल्यमस्त्येव, अप्रकृतस्यापि प्रसिद्धिमूलः परामर्शः, इत्यास्थेयम्
सः अन्तरादन्तरं परमात्मानं ज्ञातवानित्यर्थः । इत्यपि वदन्ति ।

परेतु- 'इति सोन्तरादन्तरं प्राविश' दित्येतदुत्पाट्य कृत्स्नरु
वचनसमाप्त्यनन्तरं प्रक्षिप्य रुद्रो देवदृश्यं स्थूलरूपं विहाय सूक्ष्मरू
प्राविशदित्यस्यार्थं यथेष्टमुत्प्रेक्षयन्ति । अत्रोत्पाटनप्रक्षेपदोषौ स्फुटावेव
अन्तरादन्तरामिति कोशप्रत्यभिज्ञा स्फुटा । प्राविशदिति नामरूपव्याकर

ेद्धयानुप्रवेशप्रत्यभिज्ञापि स्फुटैव । दिशश्चान्तरमिति चानन्वितम् ।
त उत्प्रेक्षामात्रमकिञ्चित्करमेव । 'यो वै रुद्रस्स भगवा' नित्यत्र
कार्थ एव स्वरसः । भगवच्छब्दस्यापि रुद्रपरत्वे यो रुद्रः यश्चान्यस्ताभ्या
न इति वाच्यम्; तस्मा इत्यनन्वितमेव, यो रुद्रो ब्रह्माभूदित्यर्थाङ्गीकारे
तीययत्पदासामञ्जस्यम्, यो रुद्रोभूयो ब्रह्माभूदित्यर्थाङ्गीकारे धर्म्यन्तरं
रसतो लभ्यते, पक्षद्वयेपि स भगवानिति तच्छब्दस्य स्वारसिक-
च्छब्दप्रतिनिर्देशकत्वभङ्गः, यो वै रुद्रस्स भगवान् तस्मै नमो य एव
ब्रह्मा तस्मै नम इत्यर्थः । ब्रह्मशब्दो रुद्रपर्यन्त इत्यङ्गीकारेप्ययन्दोष-
समानः, तस्मै नम इत्यावृत्तिरधिका । सिद्धान्ते यश्च ब्रह्मा सोपि भग-
ानिति तद्भगवच्छब्दावृत्तिस्तु न दोषः, चकारेण द्योतनात् । एवञ्च
ो वै यश्चेति वाक्यद्वयेन उभयतादात्म्यमुक्त्वा 'तस्मै नम' इति
ृतीयवाक्येन तादृशस्य भगवत एव नमस्कारः क्रियत इति पूर्वोक्त
ुवार्थस्स्वरसः । एवमुक्तार्थस्येह विवक्षितत्वादेव तद्विवक्षाभावे भङ्ग्य
तरं दृश्यते । तथा तापनीये 'योह वै नृसिंहो देवो भगवान् यश्च ब्रह्
भूर्भुवस्सुवस्तस्मै वै नम' इति । अत्र पूर्वोक्तार्थस्य तात्पर्यगोचरत्व
भावेन यश्च ब्रह्मा सोपि भगवानेवेत्येवं वाक्यभेदस्याविवक्षिततया भग
वानित्यतः प्राक् तच्छब्दाप्रयोगः । अत्र च यो नृसिंहो देवो भगवा
तस्मै नम इति स्वरूपेण नमस्कृत्य, यश्च ब्रह्मा तस्मै नम इति अन्त
र्यामी नमस्यते । तस्मै नम इत्युत्तरवाक्य एवान्वितम्, अन्यव
धानात्; भूरादिपर्यायेषु तत्पदलिङ्गवचनयोर्भूरादिलिङ्गवचनानुरोधित्वा
पूर्ववाक्ये तत्सजातीयपदाध्याहारः । अतोस्मिन्प्रकरणे प्रतिपर्या
मुत्तरवाक्यं तत्तदन्तर्यामिनमस्कारपरम् । अत एव 'या सरस्वती त
नमः' 'या श्रीः तस्यै' 'या गौरीतस्यै' 'या प्रकृतिस्तस्यै' 'या वि
तस्यै' 'याश्चतस्रोऽर्धमात्रास्ताभ्यः' 'ये च देवास्तेभ्यः' 'ये चाष्टौ ग्र

वचननिर्देशः, भगवानित्यन्वयस्याविवक्षिततया तत्तदन्तर्यामिनम स्यैव विवक्षितत्वात् । अथर्वशिरसि तु सोपि भगवानेव तादृशे नम इत्यन्वयस्य विवक्षितत्वादेव 'या च भूस्तस्मै या च पृथिवी तस्मै पस्तस्मै यानि च नक्षत्राणि ये चाष्टौ ग्रहा स्तस्मै नम' इति तत्तद्वि तिलङ्घिभगवच्छब्दानुरोधिलिङ्गवचननिर्देशः । नन्वस्त्वेवं योजना, 'यो रुद्रस्स भगवा' नित्यत्र भगवच्छब्दे यौगिकत्वमेवेष्यत इति बाधकं विना स्वारसिकरूढिपरित्यागायोगात् । किंच-योरुद्रस ज्ञ्यादिगुणकः, यश्च ब्रह्मा सोपि सार्वज्ञ्यादिगुणक इत्युक्तौ अन्यत्रापि अयोग्यार्थता रुद्रस्तुतिविरोधश्च । तस्माद्रूढ्या भगवत्परत्वमेव रु ( तदेतद्रुद्रचरित मिति ) हृदये सप्रणवं सार्वात्म्य विशिष्टभगवदनु रुद्रेणानुष्ठितामित्यर्थः । ( तदेतदुपासितव्य मिति ) रुद्रेण सार्वात्म्यविशिष्टं वस्तूपासितव्यमित्यर्थः । प्रतिपर्यायं रुद्रविशे दानात् रुद्रान्तर्यामिणस्सार्वात्म्योपासनमिह विधीयते । एवं यामितयोपासने अङ्गविशेषो विधीयते ( व्रतमेतत् पाशुपतमिति ) वक्ष्यमाणमित्यर्थः । पाशुपतं पशुपतिनानुष्ठितम् । इदमे कालाग्निरुद्रोपनिषदि प्रतिपाद्यते । अतस्सापि भगवदुपासनाङ्गवि भगवत्परैव । पञ्चमखण्डे - 'एक एव रुद्र' इति भगव श्वेताश्वतरे व्याख्यातम् । ईशानादिशब्दाः 'यस्सर्वान् नित्यादिना योगार्थाभिधानात्तन्मुखेन भगवदभिधायकास्सन्तः धायकं प्रणवं बोधयन्ति । षष्ठे 'एषो हि देव' इति प पुरुषपरम्; न तु 'तदेतद्रुद्रचरित' मिति प्रासङ्गिकोपसर्जनरु 'विश्वतश्चक्षु' रित्यादिना पुरुषसूक्तार्थप्रत्यभिज्ञानात् । अम्भसिव यमेवार्थः स्थापितः । 'ईशानं पुरुष' मितीशानशब्दः 'अधि [illegible] । एवं च भगवान एव जगत

ते - अनुष्टुभा जातानि जीवन्ति- अनुष्टुभं प्रयन्त्यभिसंविशन्ती' ति
ीयवाक्यप्रत्यभिज्ञापक 'यतो' वेत्यादिवाक्यविषयत्वाच्च प्रतिज्ञा-
ा भगवत्परतया कृत्स्नमपि शास्त्रं भगवत्परमिति सिद्धम् ।

अपि च प्रथमपादे जगत्कारणत्वेन लक्षितं ब्रह्म अन्यदिति साध्य-
ेन चिदचिद्विलक्षणमिति प्रसाध्य त्रिपाद्यधिकरणानां साध्याकाङ्क्षायां
ाजिज्ञासे' ति प्रतिज्ञासामर्थ्यादेव ब्रह्मविचारत्वात् ब्रह्मेति साध्ये
पि स्वाभिमतदेवतास्फोरणार्थमाकर्षापकर्षाभ्यां पूर्वोत्तराधिकरणेषु
ेकरणे चान्वयतात्पर्येण त्रिपादीमध्यपादमध्यमाधिकरणे 'ईक्षतिकर्म
देशात् स' इतिसूत्रे 'स' इति भगवन्तं निर्दिशन् स्वयमेवाचार्यः
भिमतां देवतां प्राचिख्यिपत् । 'तदुपर्यपी' त्याद्यधिकरणत्रयस्य प्रास-
कगर्भाधिकरणत्वादस्याधिकरणस्य पादमध्यता । 'परात्परं पुरिशयं पुरुष-
ात' इति ईक्षतिकर्म सः, 'सहस्रशीर्षापुरुषः' 'तद्विष्णोः परमं-
सदा पश्यन्ति सूरयः' 'अमृतमभयमशोकमनन्त' मिति पुरुषसूक्त-
वल्लीसौबालादिप्रसिद्धः परमपुरुष एव, न हिरण्यगर्भः, व्यपदेशात्-
ाषोपदेशात्, परमपुरुषप्रत्यभिज्ञापकशब्दात् । पुरुषश्रुतेरीक्षणामृतत्वा-
देशाच्चेत्यर्थः । त्रिपादीप्रथमाधिकरणे 'स' इति निर्देशे विवक्षित-
ता न लभ्येतेत्यस्मिन् सूत्रे तथा निर्देशः कृतः । सच सर्वार्थ एव,
ा परित्यज्याश्रुतकल्पनस्यान्याय्यत्वात् । तस्मात् त्रिपाद्यधिकरणेषु सर्वत्र
' इत्येव साध्यम् । पुरुषविष्णुनारायणादिशब्दित इत्यर्थः । यद्यस्मिन्न-
करणे 'स' इति निर्देशो न सर्वार्थः, न च स्वाभिमतदेवताप्रकट-
र्थः, तदा तद्वैयर्थ्यमनिवार्यम् । यद्यपि द्वितीयपादे 'अत एव च-
ब्रह्मे' ति ब्रह्मपदं श्रूयते, चतुर्थपादे 'प्राज्ञो हि प्रकरणा' दिति
ज्ञपदं श्रूयते, तथापि तयोस्तत्तदधिकरणप्रातिज्ञार्थता नास्त्येव
ाक्षेपपरिहारशेषत्वात् । अत इदमेव साध्यं सर्वान्वयार्हम् । आचार्यैस्त

यानुगृहीतम् । अनास्था च तत्तदधिकरणव्याख्यानसमये तदनुक्तेरवग
भाष्ये तत्र तत्र ब्रह्मेति निर्देशस्साध्यस्पाष्ट्याय । तस्य विष्णर्वा
यत्वविवक्षया सर्वार्थत्वाभावेपि परमपुरुषतात्पर्याभावे वैयर्थ्यप्रसङ्ग
स्याधिकरणस्य परमपुरुषतात्पर्ये सत्यन्येषामपि तथैव वाच्यम् ।
स्सिद्धं भगवानेव शास्त्रवेद्य इति । भगवत एवान्तरादित्यवि
वेद्यत्वादत्र चाधिकरणेषु ब्रह्मणस्तत्प्रतिपादनात्तस्यैव परब्रह्मत्वमा
यते । अन्तरादित्यविद्यादिवेद्यत्वञ्च भगवतस्तत्तदधिकरणेषु
भविष्यति ।

'शब्दादेव प्रमित' इत्यत्र शब्दशब्दो न वाक्यव्याव
वाक्यस्यापि शब्दत्वात्, अतश्शब्दशब्दो 'भूतभव्यस्येशान
वाक्यपरः, किमङ्गुष्ठप्रमितो जीवः? उत सर्वेश्वरः? इति
सन्देहः, अतः सर्वेश्वरत्वबोधकश्शब्दश्शब्दादेवेति ग्रहीतुं युक्त
किञ्चात्र ईशानशब्दो न श्रुतिः, भूतभव्यसमभिव्याहारेण रूढ्यनुन्मे
नचौत्सर्गिकरूढ्यर्थोपस्थितिस्तदुपादानेपि दुर्वारेति वाच्यम्;
कार्थप्रतिपादनेन चरितार्थस्यार्थद्वयपरत्वासम्भवात् । अन्यतर
काभावात्तु क्वचिद्योगरूढ्यर्थद्वयपरत्वम् । यद्वा - अर्थद्वयतात्पर
सद्भावे उभयपरत्वम्, निर्धारकाभावे रूढितात्पर्यग्राहकसद्भाव
रूढार्थपरत्वम्, तत्रैव प्रतीत्याञ्जस्यात्; योगतात्पर्यग्राहकमात्र
तन्मात्रपरत्वम्, तावन्मात्रेण प्रयोगस्य चारितार्थ्यात्; योगद्वयतात
सद्भावेप्युभयपरत्वम्; अत एव शेषोपपत्तिः, आर्षानेकनिरुक्त्युपप
इह तु प्रतिसम्बन्ध्युपादानं योगार्थग्रहणे नियामकमास्ति ।
योगार्थस्योन्मिषितत्वान्न रूढ्युन्मेषः । योगोन्मेषे रूढेर्निम
हि 'पद्मानि यस्याग्रसरोरुहाणी' त्यत्र पद्मपदप्रयोगः । यदुक्तं
प्रधानत्वात्काव्यस्य गिरेरौन्नत्यव्यञ्जनाय योगे शब्दस्योपक्षय

हि व्यङ्ग्यप्रतीतिनिमित्तम्; न तु रूढ्यविवक्षापि ; योगार्थ-
द्रस्य स्वभावादवर्जनीयतयैवेति । रूढिस्तु अग्रपदेनैव योगो-
वारिता । तस्य च योगोन्मेषहेतुत्वमधिकरणाकाङ्क्षण सरसा
रोहस्य हि अधिकरणाकांक्षा सरसैव पूर्णा । वस्तुतस्तु
प्रबोधनमौन्नत्याभिव्यञ्जकम्, न तु योगार्थस्तदभिव्यञ्जकः ।
स्तु 'योगरूढ्योर्विकल्प एव अक्षादिशब्द इव रूढ्योः, अत
कानां शब्दानामवयवार्थसमुदायार्थयोः प्रयोगविकल्पदर्शना-
ापि पङ्कजादिशब्दानवयवार्थविवक्षया वाक्यवित्प्रयुङ्क्ते, अपङ्क-
थलजेषु नारायणनाभिजाते च पङ्कजशब्दं प्रयुङ्क्ते' इति ।
प्रतिसम्बन्ध्युपादानेनावयवार्थस्य विवक्षणीयत्वान्न रूढ्या रुद्धोप-
तस्माद्ब्रह्ममीमांसाशास्त्रं भगवत्परमिति सिद्धम् ।

त्र भगवान्वेदाचार्यो निखिलजगदनुजिघृक्षया ब्रह्ममीमांसाशास्त्रं
स्वग्रन्थे प्रेक्षावदुपादित्सासाधनाय विचारकर्तव्यतामादौ चतु-
रूपयति । तदुक्तं 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन
ाफलत्वम् । एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृ-
इति । भगवानपि द्वितीयपादादौ प्रथमपादाधिकरणार्थानुक्रमेण
दे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः
गामल्पास्थिरफलत्वमवगम्य वेदान्तवाक्येषु चापातप्रतीतान-
लब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षो ऽवधारि
न्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन्ब्रह्मणि निश्चित-
सस्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभत इत्युक्तं शा-
द्धये' इत्यनुजग्राह । तत्र शास्त्रमारम्भणीयमित्युक्तमिति वक्तव्ये
सिद्धय इत्युक्तिर्हि शास्त्रारम्भणीयताया एतदधिकरणासाधार-
ावमधिकरणान्तरसाधारण्यञ्च ख्यापयति । तथा समन्वयाधिकर-

'तत्- शास्त्रप्रमाणकत्वम्, ब्रह्मणस्सम्भवत्येवे' ति च तस्याधिकरणस्य
रम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वमनुजग्राह । तथा ईक्षत्यधिकर
' ब्रह्मजिज्ञास्यमित्युक्त ' मिति चतुस्सूत्र्यर्थोऽनूदितः । शब्दसाम
सामर्थ्याच्च चतुस्सूत्र्यारम्भार्था। शब्दसामर्थ्यन्तावत् 'अथातो धर्म
त्यनन्तरं ' चोदानालक्षणोर्थो धर्म ' इतिवदिह ' अथातो ब्रह्म
त्यनन्तरं जन्मादिकारणं ब्रह्मेति नोक्तम् , अपि तु 'जन्माद्यस्य यत'
अतस्सूत्रद्वयस्यापि भिन्नवाक्यताया अभिमतत्वात् तत्र पुनर्धर्म
अत्रत्वेकवाक्यताया अभिमतत्वात् पूर्वसूत्राध्याहृतकर्तव्यत्वस
यार्थे यत इति निर्दिष्टम् । ततश्च यतोस्य जन्मादि तद्ब्रह
कार्येत्यवगम्यते । ' शास्त्रयोनित्वा ' दित्यपि साध्यानुक्तेः
नैवान्वेति । साध्यान्तरविवक्षायां समन्वयसूत्र इव कथं प्रतिज्ञान
' तत्तु समन्वया ' दित्यस्य तृतीयसूत्रशेषत्वं स्पष्टमेव । तस
येन शास्त्रप्रमाणकत्वात् जन्मादिकारणं ब्रह्म विचारार्हमिति श
स्यसिद्धो महावाक्यस्य पर्यवसितोऽर्थः । सूत्रभेदो न्यायभेदनिब
उक्तं शब्दसामर्थ्यम् । यदि शब्दसामर्थ्यानुगुणमर्थसामर्थ्य
दा शब्दसामर्थ्यमबाधकमिति शङ्क्येतापि; अस्ति च शब्दसाम
मर्थसामर्थ्यमपि, चिदचिद्व्यावृत्तलक्षणासम्भवे ततो भेदासिद्ध
दिपदानां जीवपरत्वे वेदान्तभागस्याधिकारिप्रशंसार्थतया
तद्विचारो न कर्तव्य इति स्यात् , धर्मलक्षणाभावेपि ज्यो
वाक्यप्रतिपन्नार्थगोचरविचारस्यानारम्भहेत्वभावान्नैकवाक्यता कृ
णासम्भवस्यानारम्भहेतुत्वं वाचस्पतिरप्याह ' तस्माल्लक्षणाभावा
तव्यमित्याक्षेपाभिप्राय ' इति । कल्पतरुकारश्च ' प्रथमसूत्रे
सूत्रस्याक्षेपलक्षणां सङ्गतिमाहे ' ति । तृतीये पूर्वपक्षस्या

## १– अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्र सन्देहः, इदं शास्त्रमारम्भणीयन्न वेति, तदर्थं प्रकृती-
शास्त्रे प्रेक्षावदुपादित्सा सम्भवति नेति, तदर्थं ब्रह्मविचारः कर्तुं
। उत नेति, तदर्थं कर्माल्पास्थिरफलत्वनिर्णयसहितसिद्धब्रह्मना-
सम्भावनाविशिष्टब्रह्मज्ञानानन्तस्थिरफलत्वापातप्रतीतिरूपविशिष्टाधिकारि
यते न वेति, तदर्थं वेदान्तेषु सिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टा-
प्रतीतिस्सम्भवति न वेति, तदर्थं सिद्धे पदानां व्युत्पत्तिरस्ति
वेति। यदा सिद्धे पदानां व्युत्पत्तिर्नास्ति तदा वेदान्ते सिद्धतात्प-
म्भावनाविशिष्टापातप्रतीतिर्न सम्भवति ; यदा न सम्भवति , तदा
शेष्टाधिकार्यलाभः, यदा तदलाभः तदा न विचारः कर्तुं योग्यः ;
[ा न योग्यः तदा शास्त्रे न प्रेक्षावदुपादित्सासम्भवः ; यदा न सम्भ-
तदा न शास्त्रमारम्भणीयम् ;— इति पूर्वपक्षे फलफालिभावः । यदा
द्धे पदानां व्युत्पत्तिः तदा वेदान्तेषु सिद्धतात्पर्यसम्भावनाविशि
ापातप्रतीतिस्सम्भवति ; यदा सम्भवति तदा विशिष्टाधिकारिलाभः
दा च तल्लाभः तदा विचारः कर्तुं योग्यः ; यदा च योग्य
दा शास्त्रे प्रेक्षवदुपादित्सा सम्भवति ; यदा च सम्भवति तदा शास्त्र
ारम्भणीयम् ; - इति सिद्धान्ते फलफालिभावः ।

अत्र प्राभाकराद्युक्तरीत्या— सिद्धे न व्युत्पत्तिः, अतो न वेदा
वाक्यैर्ब्रह्मप्रतिपत्तिः । अथ स्याद्वेदान्तेषु तत्र तत्रोपासनरूपकार्यश्रवण
तदन्वितवाक्ये ब्रह्मप्रतिपत्तिस्सम्भवत्येवेति ; उच्यते । सद्विद्यायान्त
वदुपासनरूपकार्यन्न श्रूयते, अतस्तस्यासम्प्रतिपन्नाधिकारिमुखेन का
र्थवादता वाच्या ; एवञ्चोपनिषदन्तराणामपि तथात्वं स्यादिति न ब्र
प्रतीतिसम्भवः । ननूपासनस्य वेदान्तेषु श्रवणादन्तरङ्गतया सद्विद्या

न्वयेपि स्ववाक्यश्रुतोपासनानां वाक्यान्तराणां किमर्थं दूरधावनम्
अतो ब्रह्मबोधनं कार्यव्युत्पत्तावपि सम्भवतीति चेन्न;- एवं कार्यपरतयै
प्रामाण्ये तदर्थतया प्रतिपन्नेष्वर्थसत्त्वनिर्बन्धाभावान्न ब्रह्मसिद्धिः
यद्यप्युपास्यसमर्पकतया प्रामाण्यन्तदुपस्थापकानां सम्भवति, तथा
वेदान्तवाक्येषु वाक्यान्तरादिव्याहतिप्रतीतेर्न्यायेन कथञ्चिदविरोधो नेय
स किमर्थं कार्यः? न हि पूर्वभागप्रतिपन्नार्थवादिकार्थेषु विरोधः के
चिन्न्यायेन परिह्रियते, किन्तु लक्षणादिना कथञ्चित् स्तुत्युपयोग इष्यते
कार्यवाक्यार्थस्यावैकल्याद्विरोधेपि ह्यर्थवादो निष्प्रत्यूह एव, अ
वेदान्तानां विधिसरूपार्थवादतया कर्मविधिरूपकार्यपरत्वं स्यात्; न तु जी
विलक्षणब्रह्मपरत्वम्, तस्माद्वेदान्तानां सिद्धब्रह्मतात्पर्यसम्भावनाविशि
पातप्रतीतिर्न सम्भवति। तस्माद्विशिष्टाधिकारी न लभ्यत एव। अत्रा
कार्याक्षेपेणैव विषयप्रयोजनसम्बन्धाक्षेपोपि सिद्धः, सिद्धब्रह्मणि ता
र्याभावनिर्णये त्रयाणामप्यसम्भवात्। तथाहि— वेदान्ताः कर्मार्थवादा
वृत्ताः; अतस्तदर्थेषु न विचारणीयमस्ति। अर्थवादत्वादेव न ब्रह्म
नस्य मोक्षफलकत्वसम्भव इति। एवं प्रेक्षावत्प्रवृत्त्यङ्गविरहात् ब्रह्म
मांसाशास्त्रमनारम्भणीयाम्। — इति पूर्वःपक्षः।

भाष्याद्युक्तरीत्या— सिद्धे व्युत्पत्तिसत्त्वात् सद्विद्यायाः कार्यत
र्याभावात्तत एव जीवातिरिक्तब्रह्मप्रतीतौ जीवासम्भावितार्थप्रतिपाद
सर्वेषां जीवातिरिक्तपरत्वसम्भवान्मीमांसया सर्वाण्यपि वेदान्तवाक्यानि
रस्येन जीवविलक्षणब्रह्मप्रतिपादकानि सम्भवन्ति। वस्तुतस्तु स
यां तावत् स्तब्धोसीति पुत्रस्य ब्रह्मज्ञानोत्पिपादयिषयाऽयमाक्षेप
प्रागेवोक्तम्। तत्र च प्रश्नस्य स्तब्धोसीति विवक्षितपूर्तिहेतुत्वं
ध्यासनपर्यन्ततयैव, न श्रवणमात्रात्, अतोत्रोपासनमेवोत्पिपादयिषि
[illegible]। तथा 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात

इचर्यात्, अत एतत्कीर्तनमप्युपासनोत्पादनतात्पर्यमवगमयति।
तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य' इति तस्ये-
एवोच्यते, तेनाप्युपासनतात्पर्यं व्यज्यते, उपासनस्य फल-
प्रतीतेः। तथा सद्विधान्ते 'तद्धास्य विजज्ञा' वित्युच्यते।
च विपूर्वकजानातेरुपक्रमविज्ञानपदसमानार्थत्वमेव स्वरसम्।
तिपिपादयिषितं ज्ञानमुत्पन्नमिति विजज्ञावित्यनेन प्रतीयते। उपि-
षितं चोपासनमित्युक्तमेव। सप्तमखण्डान्ते तु नोपक्रमानुरोधः,
रमप्युपदेशात्। एवं च श्वेतकेतोरुपासननिष्ठता तद्विधानं विना
त इतीदमपि विधितात्पर्यं स्पष्टयति। तस्मात्तत्त्वमसीत्यत्र
स्वेति विधौ तात्पर्यम्। पुत्रस्ते जात इत्यादावपि हि अकाण्ड
ार्यतात्पर्यमिष्यते कार्यशक्तिवादिभिः। इत्थं कार्यलिङ्गे जाग्रति
वं कथन्न स्यात्? वस्तुतस्तत्रैव तदसम्भवः, कस्य चिदपि
यासम्भवात्। न च स्नानदानादि कार्यम्, एतद्वाक्यमभिलपन्त्याः
कुक्षिंभरेश्च पृथग्जनस्य तत्कार्यताऽसिद्धेः। न च जानीहीत्य-
ारः, शाब्दज्ञानादेः प्रमाणपरतन्त्रस्यायत्नसाध्यत्वेनाविधेयत्वात्।
न्तु न विधेयम्; प्रयोजनाभावात्। तस्मादिदमेव वाक्यं सिद्धे
णां व्युत्पत्तिं साधयति। अतः कार्य एव व्युत्पत्तावपि वेदान्तानां
ण्याद्विचारारम्भो युक्त एव। इदं च सद्विद्याया उपासनतात्पर्यकत्वं
न्वयाधिकरणव्युत्पाद्यमेव, इह तु सिद्धे व्युत्पत्तिरेव व्युत्पाद्या, न्यायेन
धपरिहारसम्भवे न तत्परित्याज्यमित्यतिरिक्तब्रह्मसिद्धिरप्यविरुद्धा।

आवृत्तिविधानादिभिश्च कर्मणामल्पास्थिरफलत्वनिर्णयः कृतकर्म
ारस्य समुन्मिषति। तथाहि - आवृत्तिविधानन्तावत्— 'दाक्षायण
न यजेत स्वर्गकाम' इति। अत्रेदं विचार्यते; किं प्रकृतद
ात् कर्मान्तरमिदम्? उत तत्रैव गुणविधिः? इति। तत्रै

नामधेयात् कर्मान्तरमिति पूर्वपक्षे राद्धान्तः- दक्षः - उत्साही, यज
मानः, तत्सम्बन्धिनो दाक्षा आग्नेयादयः, तेषामयनमावृत्तिः, अतो
ऽवयवप्रसिद्ध्या तत्रैवावृत्तिलक्षणस्य गुणस्य विधेर्न कर्मान्तरमिति
एवं चावृत्तानावृत्तकर्मणोर्गौरवलाघवाभ्यां फले तारतम्यं "फलस्य कर्म
निष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्या" दित्यर्थवादाधि
करणोक्तरीत्या कालस्वरूपाभ्यां सिद्ध्यति। ननु 'सर्वेभ्यः कामेभ्यो
दर्शपूर्णमासा' वित्यनेकफलार्थतया विहितदर्शपूर्णमासयागस्य पश्वाद्यर्थ
प्रयोगे स्वगार्थतया आवृत्तिगुणविधानसम्भवादावृत्तानावृत्तयागजन्यस्वर्ग
योर्न गुरुलघुभावसिद्धिरिति चेत्; न, यत्र शास्त्रादृते न क्रतोः गुणान्वय
सिद्धिः, तत्र तद्विशिष्टक्रतुरेव फलाय चोद्यते; यथा दाक्षायणय
इति गुरूक्तरीत्या 'दाक्षायणयज्ञेन यजेत स्वर्गकाम' इत्यस्या
कारविद्ध्यन्तरत्वे पश्वाद्यर्थप्रयोगे आवृत्तिगुणविधिशङ्कानुत्थानात्, पक्षान्
रे पिफलान्तरार्थप्रयोगविषयत्वे नियामकाभावात् स्वर्गार्थप्रयोगविषयत्वमप्य
वश्यकम्। ननु 'अपाम सोमममृता अभूम' 'दिवि ज्योतिरज
मारभेता' मित्यादिमन्त्रार्थवादबलाद्विध्युद्देशप्रतिपन्नस्य स्वर्गस्य नित्या
वगतौ तदनुसारात् पश्वाद्यर्थप्रयोगविषयत्वं कल्पनीयमिति चेत्; न, स्व
सतो दर्शपूर्णमासमात्रगोचरतया प्रतीयमानस्य विधेर्मन्त्रार्थवादमा
सङ्कोचायोगात्। दाक्षायणयज्ञेनेति यज्ञशब्दस्य पश्वर्थप्रयोगे लक्षण
प्रसङ्गाच्च। एतेन 'यो वृष्टिकामो योन्नाद्यकामो यः स्वर्गकामस्स
...रेण स्तुवीते' ति विध्युपस्थापितवृष्टिकामादेरेव 'हीषिति वृष्टिका
निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये' ति
मर्शेन तत्तत्प्रयोग एव हीषादिनिधनविधिवदिहापि स्वर्गार्थतया वि
दर्शपूर्णमासयोरेवावृत्तिलक्षणगुणविधिरिति किन्नस्यादिति निरस्तम्
तत्र हीषादीनां फलाय विधौ निधनानन्वयप्रसङ्गः। नचाश्रयतयान्व
...

ासत्वेन तादृशबाधकाभावेन गुणफलाबाधत्वमेव कामन-
ात् न्याय्यम् ।

यः स्वर्गकामस्स सौभरेण स्तुवीते ' ति लघुभूतसौभरगुणस्य
येन्वीत स्वर्गकाम ' इति गुरुभूताम्न्याश्रितगुणस्य च
श्रूयते, तथा गुरूलघुभूतानां दर्शपूर्णमासज्योतिष्टोम-
प्रभृतीनां कर्मणां स्वर्गः फलत्वेन श्रूयते, अतः स्वर्गे
कम्, अत्र च कर्मकर्मभेदाङ्गविनियोगप्रयुक्त्यतिदेशादि-
पूर्णमासज्योतिष्टोमवाजपेयादीनां गौरवलाघवसिद्धिरिति
अनित्यताज्ञान उपयुज्यन्ते । नन्वेवं गुरुलघुविकल्पासम्भ-
ाम्ये ब्रह्मज्ञानावृत्तेराप्रयाणमनुवर्तनीयतया प्रयाणकालस्या-
ारतारतम्येन फलतारतम्यं स्यादिति चेत्; न, तत्र शास्त्रीयस्य
ास्याभावात् । न हि साधनतारतम्यं तत्वादेव फलतारत-
किन्तु भूयः श्रमसाध्ये प्रवृत्तिप्रतिबन्धात्, न हि दैवका-
ाघवन्तादृशगुरुसाधने प्रवृत्तिं प्रतिरोद्धुं क्षमते । किंच—
कारं ज्ञानं हि साधनम्, तन्निष्पत्तिश्च सत्वशुद्धिविळम्बा-
धेनी, तौ च विळम्बाविळम्बौ रजस्तमोबाहुळ्यवैरळ्य-
अतो न साधनतारतम्यम् । यदि च दर्शनसमानाकारज्ञानो-
ापि प्रारब्धानुसाराद्विळम्बः, न ततोपि साधनातारतम्यसिद्धिः;
ामानकालीनध्यानस्यैव हेतुत्वात्, तच्च सर्वत्र तुल्यमेव ।
योपेतात् ' तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र
लोकः क्षीयत ' इत्यादिवाक्यात् कर्मफलानित्यत्वनिर्धारण-
ातो विशिष्टाधिकारिलाभात् तत एव तात्पर्यसम्भावनाविशिष्टा-
सत्यामापातप्रतीतार्थस्य विचारार्हतया ब्रह्मज्ञानस्यानन्त-
ासम्भावनाबुद्ध्या च विषयप्रयोजनसम्बन्धानामपि सिद्ध्या

यत्तु विषयप्रयोजनदर्शनेनैव तत्सम्बन्धस्यापि प्रदर्शितत्वात्तयो ्सम्बन्धो न पृथग्दर्शनीयः, अस्यायं विषयः अस्येदं प्रयोजनमिति हे तयोः प्रदर्शनम्, अतोनुबन्धत्रयमेव ग्रन्थमात्रे प्रवृत्त्यङ्गम् वेदान्ते तु पूर्ववृत्तस्याप्यावश्यकत्वादनुबन्धचतुष्टयं प्रवृत्त्यङ्गम्, अत पूर्ववृत्तरूपानुबन्धपरस्सम्बन्धशब्द इति ; तन्न, अनुबन्धचतुष्टयमपि ग्रन्थमात्राङ्गमिति हि प्राचां घण्टाघोषः । युक्तश्च सः । कार्यमात्रे इदमस्य फलं इदमेतादृशेन कार्यमिति ज्ञानादेव प्रवृत्तिरिति फलाधिकारिणं प्रवृत्तिमात्राङ्गम् । हलेन जीवनं भवतीति ज्ञाने सत्यपि कर्षणादिद्वार नवगमे प्रवृत्तिर्न सम्भवतीति फलसम्बन्धविशेषज्ञानमपि प्रवृत्तिमात्राङ्गम् अतः कार्यत्वाविशेषात ग्रन्थेप्येतत्त्रितयमनिवार्यमेव । अर्थपरत्वाद्विषय ज्ञानमधिकमङ्गम्, तत्सम्बन्धविशेषज्ञानमपि । लोके हि केचि साक्षात्प्रतिपादकमिच्छन्ति, केचित्तद्व्याख्यानम्, अतः तत्सम्बन्ध विशेषोपि ज्ञातव्य एव । अत्र च 'ब्रह्मजिज्ञासे' ति ब्रह्मणो विचा विषयत्वावगमाद्विचारस्य निर्णयफलकत्वात् अतश्शब्देन वेदान्तेष नन्तस्थिरफलापातप्रतीत्युपस्थापनाच्च शास्त्रस्य ब्रह्मनिर्णयद्वाराऽनन्तस्थि फलप्रयोजकत्वं वेदान्तद्वारा ब्रह्मविषयकत्वं च सिद्ध्यति । पूर्ववृ चाधिकार्यन्तर्भावेनैवानुबन्धो न पृथगनुबन्धः ।

किञ्च — वेदान्ते मुमुक्षा हि पूर्ववृत्ततया विवक्षिता, नित्यानि विवेकादिकं तत्साधनमात्रमेव, सा च फलेच्छैव, फलेच्छा प्रवृत्तिमात्राङ्गमिति कुतो वेदान्तासाधारण्येनानुबन्धचतुष्टयस्य प्रवृत्त्यङ्गत

किञ्च - सम्बन्धशब्दः पूर्ववृत्तरूपानुबन्धं कथमिवाभिदध्यात यदि कर्मणिव्युत्पत्त्याभिदध्यात्; तर्ह्यनुबन्धान्तरमपि कथं नाभिदध्यात तत्रश्चैकानबन्धपरिशेषः प्रसजेत । अतस्सम्बन्धोप्यनुबन्धएवेति

ऐकशास्त्र्यात् सङ्गतिसूचनार्थं स्वाध्यायाध्ययनविधिमुखप्रवृत्त-
।बन्धविवक्षया 'परीक्ष्ये' त्यादिश्रुत्यनुसाराच्च कर्मविचारानन्तर्यमत्र-
न निर्दिष्टम्, तात्पर्यन्त्वधिकारसमर्थन एव। ततश्च कर्मणा-
स्थिरफलत्वज्ञानं यद्युपदेशेन कस्यचित्सम्भवति, तदा तस्या-
।कारोस्त्येव। यद्येवन्तर्हि उपदेशादेव ब्रह्मणस्तद्ज्ञानस्य ततो मोक्षस्य
नेद्धारणे ब्रह्मविचारोपि नापेक्ष्येतेति चेत्; न, पुरुषविशेषे तदन-
या इष्टत्वात्। 'श्रोतव्य' इति श्रवणनियमेनौपदेशिकज्ञानस्य
च्छेदात् कथमिष्टत्वमिति चेत्; न, श्रोतव्यशब्दस्य शाब्दावधारण-
र्थेन तेन मीमांसितवाक्येनार्थावधारणस्य दृढविश्वस्तौपदेशिकज्ञानस्य
संग्रहादिति।

देवमीमांसायामेव सिद्धे व्युत्पत्तेस्समर्थनीयतया इह कथन्तत्समर्थन
ते केनचिदुक्तमसङ्गतम्, कर्मविधिशेषतयैव देवतानान्निरूपणेन त
द्धे व्युत्पत्तिसमर्थनस्यानपेक्षितत्वात्। उक्तं च तत्वटीकायां "एवं तर्कि
र्गणि सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवता एव स्वरूपभे
गप्रकर्षैर्निष्कृष्य तत्समाप्तौच 'अन्ते हरौ तद्दर्शनात्' 'स विष्णुराह हि
तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षत' इति विचारयिष्यमाणमुपचिक्षेपो
त्ववृद्धा" इति। अत्र च मुमुक्षाधिकारः, सा च 'यदि वेदान्ते प्रती
ानमनन्तास्थिरफलं ब्रह्म तद्ज्ञानं तयोस्साध्यसाधनभावश्च तत्वमेव त
न मया तत्साधनीय' मित्येवंरूपा, निरुक्तमुमुक्षानुगुणश्च नित्यानित्य
कः कर्मफले निर्धारणरूपः ज्ञानफले त्वनिर्धारणरूपः, पुरुषः र
ऐहिकामुष्मिकफलेषु यावन्नानित्यतान्निर्धारयति तावन्न मोक्षसाधनवि
वर्तते, अनादिवासनया विषयप्रवणस्वभावत्वात्, तस्मादिह त
र्धारणं मुमुक्षानुगुणम्; सर्वत्र हि प्रमाणे प्रवृत्तिस्तत्प्रतिपाद्यसन्देहाते
द्यं च प्रवृत्तिर्न्यायोपेतवेदान्तरूपप्रमाणएव। इत्थमेव च पूर्वतन

ायोपेतवाक्येन निर्णयार्थो प्रवृत्तिस्साध्यसाधनसन्देहादेव, अवान्तर
ालन्तु निर्णयरूपं विचारेण भवतीति निर्णीतमेव । तच्च निर्धारणं न
ाध्यसाधननिर्धारणं भवतीति, किन्तु तत्तदभावान्यतरनिर्धारणं भवतीति ।
ानु ब्रह्मज्ञानस्य मोक्षसाधनत्वनिश्चयाभावे कथं श्रवणार्थं गुरूपसदने
ावृत्तिः ? नियमादृष्टस्य स्वाभिमतफलपर्यन्तोपयोगज्ञानाभावे प्रवृत्त्यनुप
ात्तेरिति चेत्; न, यदि ब्रह्मज्ञानं मोक्षसाधनं स्यात्; तदा गुरूपसदनवैगुण्ये
ाम फलं ब्रह्मज्ञानेन न स्यादिति बुध्या प्रवृत्त्युपपत्तेः ।

अत्रायमधिकारो नानुबन्धान्तर्गतः, ज्ञायमानं प्रवृत्त्यङ्गं ह्यनु
बन्धः, नचोक्ताधिकारो ज्ञायमानः प्रवृत्तावुपयुज्यते, किन्तु स्वरूप
सन्नेव, अतोत्र ज्ञायमानः प्रवृत्त्यङ्गभूतोधिकारस्त्रैवर्णिकत्वम्, तच्च
नेह निरूपणीयम्, सूचितं च तदथातश्शब्दाभ्याम्, प्रकृते चाधिका
व्यपदेशो मुमुक्षारूपाधिकारहेतुत्वात्फलकामनाप्यनुबन्ध एव, सा तु न ज्ञा
पयुज्यते, अतस्तद्व्यतिरिक्तानुबन्धानामेव ज्ञाततयोपयोग इत्यपि केचिदिति

अत्र सूत्रस्य तमोविजृम्भणवैचित्र्यसन्धुक्षितकुदृष्ट्यनुगुणं यथ
यथं तात्पर्याणि वर्णयन्ति । तथाहि- तत्र विवरणकार आह- ब्रह्म वि
र्थेन्न वेति संशयः, तदर्थं चिन्ता किं विषयप्रयोजने न सम्भवतः ः
सम्भवत इति, अत्र पूर्वः पक्षः - प्रत्यग्ब्रह्मैक्यं हि विचार्यम्, तः
न सम्भवति, कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्यायोगात्, नापि त
वृत्तिः प्रयोजनम्, ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य तस्य ज्ञा
न्निवृत्त्ययोगादिति; राद्धान्तस्तु सत्यं कर्तृत्वभोक्तृत्वादि, प्रपंच
सत्यत्वे विषयादि न सिद्ध्यतीति, प्रपंचस्तु मिथ्यैवेति ।

वाचस्पतिस्तु- पूर्ववदेव संशयः, पूर्वपक्षस्तु प्रत्यगात्मन
ब्रह्मत्वात्तस्यचाहमिति प्रकाशमानत्वेनासान्दिग्धतया न विषयत्वमुपप

लब्धेरिति ; सिद्धान्तस्तु वेदान्तवाक्यैः ज्ञानानन्दैकरसाद्वितीयो-
स्वभाव आत्मा उपक्रमादिभिः प्रतिपाद्यते, सच वेदान्तवेद्य-
प्रत्ययेन भातीति विषयादिसिद्धिरविकलेति ।

माध्वास्तु— ब्रह्मविचारो न कर्तव्यः उत कर्तव्यइति चिन्ता, विषयादिकञ्च सम्भवति उत सम्भवतीति, तदर्थं विषयभूतं किं प्रत्यगर्थभूतजीवः उत तदन्य इति, पूर्वःपक्षस्तु विषयत्वेनाभिमतं न जीवचैतन्याद्भिन्नम्, नापि सविशेषम्, मानाभावात्, वेदान्तैः क्रमोपसंहारादिभिरखण्डप्रत्यगात्मस्वरूपमात्रप्रत्यायनात्तस्य चाह-मासमानत्वादिति, राद्धान्तस्तु — ब्रह्मशब्दोक्तगुणपूर्तितदभावाभ्यां ब्रह्मणोभिन्नत्वेन ब्रह्मणोहमिति प्रकाशमानत्वाभावेन विषयत्वं वतीति ।

अत्र व्यध्वविध्वंसनम्—

आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरगणैर्निर्विशेषश्च सर्वैः
किन्तत्र स्वप्रकाशे गुणलवरहिते वस्तुशास्त्रेण चिन्त्यम् ।
इत्याक्षेपो गुरूणान्नतिशतविषये स्वाप्रणम्यत्ववादः
श्रुत्यन्तानान्निरूप्यस्स यदि जडमते केन शास्त्रस्य न स्यात् ॥

अत्रेदं परकीयमधिकरणं - ब्रह्ममीमांसाशास्त्रमिदं नारम्भणीयम्, निर्विषयत्वात् ; न तावदस्य सविशेषं ब्रह्म विषयः, तत्र मानाभावात् ; वेदान्तानान्निर्विशेषजीवस्वरूपमात्रपरत्वात् ; न च जीव एव ब्रह्मेति स तत्र विषयः, तस्य स्वप्रकाशत्वेनाहमितिसर्वानुभवसिद्धत्वान्निर्विशेषे तत्र निरूपणीयानां धर्माणामभावादिति पूर्वः पक्षः । सिद्धान्तस्तु भवेदेव निर्विषयत्वम्, यदि विचार्यत्वाभिमतं ब्रह्म जीवरूपत्वेन संशयविप जिज्ञासानास्पदं स्यात्, नत्वेवम्, तस्य "तद्विजिज्ञासस्व, तद्ब्रह्म" इ

ज्जीवनिकायाद्विलक्षणत्वसिद्धेः ; तस्य गुणपूर्तिवाचिता च " अथ य दुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः" इति श्रवणात्, स्वर गुणतश्चापरिच्छिन्नत्वविषयावयवशक्त्यनुरोधाच्चेति । तत्र निर्वि स्वरूपस्य ब्रह्मणः श्रुत्यन्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वास पूर्वपक्षो गुरूणां प्रणतिपरम्परायाविषये महापुरुषे तच्छिष्योदितस्व मानर्हत्ववादमनुकरोति । प्रमाणशिखामणयो हि वेदान्ता नि मनधिगतार्थमन्विच्छन्ति, पौरुषेयाणि तु शास्त्राणि उपायान्तरेणा शक्येष्वप्यर्थेषु श्रोतृबुद्धिसमाधानार्थं प्रवर्तमानानि स्वोक्तमप्यर्थमवि णार्थमाम्रेडयन्ति, न तथानधिगतार्थव्यसनितामनुभवन्ति, ततश्च वे अपि यदि स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वभोक्तृत्वादिरहिततया शेषतां प्रतिपाद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति तदा शास्त्रस्य पर्यवसाने कानुपपत्तिः ? पूर्वपक्षिणापि हि वेदान्तानां प्रामाण्यसंरक्ष स्वप्रकाशजीवपरत्वेप्यनधिगतार्थत्वमुपपादनीयम् । ततश्च शास्त्र तेन स्वविषयत्वोपपत्तिरिति भावः ।

ननु पूर्वपक्षिणा वेदान्तानां प्रामाण्यं न संरक्षणीयम्, क्रमादिन्यायैस्स्वप्रकाशजीवस्वरूपपरा एव, तस्यचानाधिगतत्वं क समर्थयितुं न शक्यते, तथाहि सति यदि तेषां प्रामाण्यं न स्य भूत्, न्यायलब्धेऽर्थे किं कुर्मः, अतएव तदर्थमधिकृत्य शास्त्रं नारम्भण सर्वथैव विषयालाभादिति पूर्वः पक्षः क्रियते ; कात्रानुपपत्ति शङ्क्याह—

प्रामाण्यं सिद्धमेव ह्यकृतकवचसा त्वन्मते तर्कशास्त्रे
शास्त्रस्याङ्गं यदस्य स्मरसि हरिकृतं ब्रह्मतर्काभिधानम् ।
तच्चेद्भज्येत नित्यस्फुरदगुणलवप्रत्यगात्मैदमर्थ्ये

र्थं हि तव मतम् , अस्ति विष्णुना नारायणरूपेणातिविस्तरेण
व्यासरूपेण तेन संक्षिप्तं च ब्रह्मतर्काभिधानं शास्त्रम् , तदेव
व्याख्यानान्तर्गतं तर्कशास्त्रम् , न तु गौतमादिप्रणीतम् , तच्चास्य
शास्त्रस्याङ्गम् , इदं हि सर्वेषां कर्मब्रह्मकाण्डरूपाणां वेदानां सकल-
र्णो भगवानेव मुख्यार्थ इति निर्णयाय प्रवृत्तम् , तत्रे-
र्थानां वेदानान्तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुति-
नां च स्वरूपप्रामाण्यतद्बलाबलनिर्णायकत्वेनैतदपेक्षितमिति ।
नुव्याख्याने — ' प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः ।
येस्तु तत्सिद्धेर्मीमांसा मेयशोधनम् ॥ ब्रह्मतर्के च कृतवान्
। भगवान्प्रभुः । पञ्चाशत्कोटिविस्ताराान्नारायणतनौ कृतात् ॥
। पञ्चसाहस्रं कृतवान् बादरायणः ॥ ' इति । एवं च यदि
नामखण्डजीवस्वरूपपरत्वे मानान्तरसिद्धतत्स्वरूपानुवादमात्रपर्यव-
त्वेन प्रामाण्यन्न निर्वहेत्तदा तन्निर्वाहाय तेषामुपक्रमादिस्वारस्या-
पि तद्विषयत्वं परित्यज्य मानान्तरानधिगतसगुणब्रह्मविषयतैव
क्षेणाप्यङ्गीकर्तव्या स्यात् , न हि सिद्धप्रामाण्यानां वेदान्तवाक्याना-
गतार्थपर्यवसानविरोधी कश्चिदपि वाक्यस्वारस्यानुरोधोऽस्ति ,
। तण्डुलान्विसृजेत् ' ' सृष्टीरुपदधाति ' ' कपालेषु श्रपयति '
षु तत्तत्स्वारस्योपस्थितानप्यन्यतः प्राप्तिमतोऽर्थान् परित्यज्य लक्ष-
प्रत्यक्षविध्यन्तरद्वारा कल्प्यविध्यन्तरद्वारावानाधिगत एवार्थे
सानस्याङ्गीकृतत्वात् ; विश्वजित्स्वर्गकामाधिकरणपूर्वपक्षयोरपि नान-
तार्थत्वरूपप्रामाण्यत्यागः , किन्तु फलाभावादनुष्ठानालाभमात्रः ।
ं हि तन्त्ररत्ने स्वर्गकामाधिकरणपूर्वपक्षे - ' नन्वेवं प्रमाणं स्यात्
, गम्यमाने प्रवर्तनामात्रे प्रमाणमेव , न हि पुरुषप्रवृत्त्यधीन
प्रामाण्यम् , यदि हि तथा स्यात् , ततः प्रमाणभूतवचनविहित
——गत्वं च प्रामाण्यमितीतरेतराश्रयापातः ; तस्मात् त्वत्पू

त्वेपि वानधिगतविषयत्वमद्वैतिवत्समर्थनीयम् , तद्विलक्षणसगुणब्र
वाङ्गीकरणीयमित्युभयथापि न निर्विषयत्वशङ्कावकाश इति भ

परमते मतान्तरासिद्धोपक्रमादिन्यायजालमवलम्ब्य पूर्व
मप्ययुक्तमित्याह –

साक्षी जीवः सुखादीन्यनिशमनुभवन् सर्वमानाधिकस्ते
तेषान्तर्के त्वदिष्टो बलवदबलतासंविभागश्च सिद्धः ।
तस्यात्यन्तानुकूलं श्रवणमपि तव प्राग्विचारादपेक्ष्यं
श्रुत्यन्तानां कुतस्स्यादगुणविषयतापूर्वपक्षस्य लाभः ॥

एवं हि तव मतम् , सुखादिकं साक्षिवेद्यम् , साक्षी
प्रमाणाधिकः , नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् , स
सुखदुःखेच्छाद्वेषादौ कदापि संशयविपर्यययोरदर्शनात् , दूरसञ्चा
ज्ञानप्रामाण्यपरीक्षाधारायाः ततो जलावगाहनादिप्रयुक्तसुखदुःखा
साक्षिणमादायैव विश्रान्तेश्च , अतस्साक्ष्यनुभवविरुद्धेर्थे श्रु
प्रमाणमिति । इदं च साक्षिणो बलवत्त्वं तव प्रमाणमीमांसारू
तर्क एव सिद्धम् । अतोत्र साक्ष्यनुभवविरुद्धं वेदान्तान
दुःखादिरहितनिर्विशेषजीवस्वरूपमात्रपरत्वमपेक्ष्य पूर्वपक्षप्रवर्तनं न
अपि च– सर्वेषामपि प्रमाणानां त्वदिष्टो बलाबलविभागस्तव
एव सिद्धः , अतो वाक्यार्थनिर्णयप्रमाणभूतानामुपक्रमादीना
दुपसंहारो बलीयानित्यादिरूपस्त्वदिष्टो मतान्तरविलक्षणो
विभागस्तव ब्रह्मतर्क एव सिद्धः , 'उपक्रमादिलिङ्गानां बलीय
रोत्तरम् । श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णया' दित्यनुव्याख्य
त्वदभिमतोपक्रमादिबलाबलानुसारी सर्ववेदान्तानामर्थश्च त्वन्मते
[illegible]

श्रवणम् , तच्च यावदज्ञाननिवृत्ति एकस्मादेव गुरोर्वा तत्तदुत्तम-
बहुभ्यो गुरुभ्यो वा सम्यगावर्तनीयम् , एवं श्रवणावृत्ति-
वाक्यार्थग्रहणस्य स्थिरीकरणार्थं न्यायविचारात्मकयुक्त्यनुसन्धानं
, न तु तदेव श्रवणम् , ततश्च विचारशास्त्रं मननविधिमूलं
ाविधिमूलकमिति हि तव मर्यादा । तथा च निर्विशेषनिष्प्रपंच-
ग्रादिपरवाक्यानामपि सगुणप्रपञ्चजीवभिन्नस्वाभिमतब्रह्मपरत्वमेव
ां स्वाप्तानां गुरूणां सकाशाद्बहुधावर्तितश्रवणलब्धसकलवाक्या-
रणः तदनुगुणप्रमाणस्वरूपतद्बलाबलव्यवस्थापकब्रह्मविचारशास्त्रेति-
तारूपतर्कशास्त्राभ्यासेन लब्धश्रवणसंवादः तदनन्तरं तदर्थमनन-
श्रवणे प्रवर्तमानशिष्यः प्रत्यक्षादेस्तर्कशास्त्राभ्यासलब्धप्रमाण-
लस्याप्यनुगुणमनेकाप्तोपदिष्टन्तमर्थं परित्यज्य सर्वेषां वेदान्तवाक्यानां
ोषजीवचिन्मात्रमेवार्थ इति सर्वविरुद्धमर्थं कथमाशङ्केत ? तदा-
ावकाशाभावे च कथं पूर्वपक्षोदयः ? शिष्यस्य आगमगतार्थेनु-
न्धुमशक्यतयोदेतुं योग्या शङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो
, अतोत्र शिष्यस्य प्राङ्निर्वृत्तेन श्रवणेनाङ्गविद्याभ्यासेनचा-
बन्धुमशक्या शङ्का नोदेतुमर्हतीति तव मते नैवं पूर्वपक्षावकाशो-
ति भावः ।

एवं परमर्यादया पूर्वपक्षस्य निरवकाशत्वमुक्तम् , हेत्वन्तरे-
पे तदाह -

श्रुत्यन्तानामखण्डो विषय इति च ते केन बोद्धव्यमेत-
न्न्यायैस्तादर्थ्यमेषां घटयदतिदृढैश्शास्त्रमेकन्न चेत्स्यात ।
तच्चेदङ्गीक्रियेत प्रतिहतविविधप्रत्यगात्मैकनिष्ठम्
कस्यानारम्भसिद्ध्यै प्रभवतु भवतः पूर्वपक्षप्रयासः ॥

सर्वेषां वेदान्तानां निर्विशेषजीवस्वरूपरत्वं प्रबलन्यायैः प्रतिष्ठा

नैकावान्तरवाक्यकृतान्तःकलहप्रतिरुद्धं च तेषां तत्परत्वन्
दिति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थानं न स्यात्, इष्यते चेत्
मपेक्ष्य विषयाभावेन तदनारम्भस्समर्थ्यत इति व्याघातस्स्या

नन्वेवं वाचस्पतिविवरणकाराभिमतयोरपि आद्याधिकरण
व्याघातस्स्यात्, वाचस्पतिमते हि प्रत्यगात्मन एव ब्रह्मत्व
चाहमिति प्रकाशमानत्वात् लोकसिद्धस्य तस्य विचारार्थं
म्भणीयमिति पूर्वः पक्षः, विवरणकारमते तु प्रत्यग्ब्रह्मैक्यस्यैव
नाभिमतत्वात् प्रत्यग्ब्रह्मणोश्च विरुद्धस्वभावयोरैक्यासिद्धेः
शास्त्रं नारम्भणीयमिति पूर्वः पक्षः, न च प्रत्यगात्मन
प्रत्यग्ब्रह्मणोरैक्यञ्च शास्त्रं विना सिद्ध्यति, येन व्याघात
दित्याशंक्याह—

सिद्धेऽसिद्धे च सिद्धान्त्यभिमतविषये दूषणं चेत् क्रि
न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे
सिद्धान्त्यस्वीकृतेऽर्थे यदि तु विषयतापादनं पूर्वपक्षे
कर्तव्यं तद्युपायः कथमिव सुधिया तत्र नापेक्षणीयः

प्रत्यगात्मन एव ब्रह्मतया विषयत्वं प्रत्यग्ब्रह्मणोरैक्य
यत्वं च सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेना
त्वेन विषयत्वासम्भव इति तौ पूर्वपक्षौ प्रवृत्तौ, तत्र कुत
त्मैव ब्रह्मेति वा प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिणं प्रति
हेत्वाकाङ्क्षा न भवति, सिद्धान्त्यभिमतस्यैव तयोर्विषय
पक्षेऽनूदितत्वात्, ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य
पूर्वपक्षप्रवृत्तेर्न व्याघातः, त्वन्मते तु निर्विशेषजीवचिन्
सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तिरिति

ननु सिद्धान्त्यनभिमतमर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुप-
शास्त्रारम्भोपेक्षित इति व्याघातश्चेत्, पूर्वमीमांसा-
रणपूर्वपक्षेऽपि व्याघातः स्यात्, स खल्वेवं प्रवृत्तः, अध्ययन-
विश्वजिन्न्यायाद्वेदाध्ययनस्य स्वर्गार्थताववबोधकेनार्थज्ञानेतरफलार्थ-
नानां वेदानां विषनिर्हरणादिमन्त्राणामिवार्थविवक्षाग्राहकं प्रमाण-
ति वेदवाक्यान्यापाततोऽपरिपूर्णानुपपन्नार्थानि लक्षणानुषङ्गा-
रव्यवधानकल्पनाधिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र निया-
गवादनुपपत्तिशङ्काकलुषितवेदार्थविचारात्मकशास्त्रमारम्भणीयमिति ,
पे स्वाध्यायाध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षि-
ग्राह्यमिति तदुपपादकविश्वजिन्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षेत्या-
क्याह—

एवं वाक्यं विचार्यं यदि भवति नयो वापि सर्वत्र तुल्यः
सत्किंचिन्न्यायकलृप्त्यानभिमतरचना युज्यते पूर्वपक्षे ।
सर्वेषामेव नानाविधनयनिकरानेकतात्पर्यसीम्नाम्
वेदान्तानां विमर्शाद्विषयविरचनात्वेकमीहेत शास्त्रम् ॥

धर्मजिज्ञासासूत्रे अध्ययनवाक्यमेकमेव विचार्यम्, तस्य सिद
ग्ध्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात् सर्वानिशितस्वर्गार्थ
ाच्यमिति शक्यं पूर्वपक्ष एव किंचिन्न्यायोपपादनमिति तदर्थं
शास्त्रारम्भापेक्षा, अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामपि
वाक्यानां विचार्यत्वेऽपि तेषामविवक्षितार्थत्वे पूर्वपक्षोपपादनीये
निर्हरणादिवदन्यार्थनीयमानत्वमेक एव न्यायः, सोऽपि पूर्वपक्ष
व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा; इ
त्वन्मते नैकमेव वेदान्तवाक्यं विषयः, तस्यैकस्य केनचिन्न
—ीनाr पात व्युत्पादितेन निर्विशेषजीवचिन्मात्रपरत्वासिद्धावपि य

पूर्वपक्षिणा सर्वेषामेव वेदान्तानान्निर्विशेषचिन्मात्रपरत्वव्यवस्था-
सिद्धान्त्यभिमते सगुणे ब्रह्मणि प्रमाणाभावात्तद्विचारार्थमपि शास्त्र-
भणीयमिति वाच्यम्, त्वदभिमतं च, न च सर्वेषां वेदान्तानां
शेषजीवब्रह्मचिन्मात्रपरत्वे सार्वत्रिक एको न्यायोस्ति, उपक्रमादीनां श्रुति-
दीनां च परश्शतबाध्यबाधकभावप्रकारशालिनां तत्र तत्र व्यवस्थि-
त्, न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम्,
सति सर्वस्यापि शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात्, तस्मात्तावता-
यायानां व्युत्पादकमेकं शास्त्रमिहापेक्षितमित्यत्रैव व्याघातो न धर्म-
मांसापूर्वपक्ष इति भावः ।

एतेन- वाचस्पतिपूर्वपक्षे प्रत्यगात्मन इदानीमहमिति प्रकाश-
नं रूपमध्यासपरिनिष्पन्नम्, तदिह न विचार्यम्, किन्तु संसार-
शायामनाविर्भूतन्निर्विशेषं तस्य तात्त्विकरूपमस्ति श्रुतिप्रसिद्धम्,
द्विचारार्थं शास्त्रारम्भ इति शङ्कावारणाय, विवरणकारपूर्वपक्षे प्रत्य
ब्रह्मैक्यञ्चासिद्धम् तत्साधकश्रुतिसम्भवादिति शङ्कावारणाय च, बहूना
न्निर्विशेषवाक्यानामभेदवाक्यानां चान्यपरत्वं वक्तव्यमिति तदुपपादक
शास्त्रारम्भापेक्षायां व्याघातस्स्यादित्यपि शङ्का निरस्ता; एकयैव प्रत्यक्षादि
विरोधयुक्त्या तेषामन्यपरत्वकल्पनात् ।

स्यादेत्, अस्त्येव शारीरकशास्त्रादन्यत् सर्वेषां वेदान्तानां निर्वि
शेषपरत्वव्युत्पादकं शास्त्रम्, तदवलोकनेनैवं पूर्वपक्षस्स्यादित्याशङ्क्याह

तच्छास्त्रञ्चेदतोन्यत्कणचरमतवत्कल्प्यते पूर्वसिद्धं
जीवन्तस्य स्वसिद्धं विषयमुपयतो हन्त तस्यैव सोस्तु ।
तेनैकार्थ्ये विरोधेप्यपसृतविषयं शङ्क्यते चेदिहेदं
[illegible] ॥

य शास्त्रस्य स्वप्रकाशोपि जीवो विषयः क्रियत चेत्;
ास्त्रस्य विषयोस्तु, किमप्रसिद्धशास्त्रान्तरकल्पनया, तत्कल्प-
पक्षसमर्थनेपि स्वप्रकाशस्य विषयत्वासम्भवयुक्तेर्व्याहतत्वा-
; नन्वत्र स्वप्रकाशस्य विषयत्वासम्भवयुक्त्या नारम्भ्यमिति
:, किन्तु वेदान्तानां स्वप्रकाशचिन्मात्रपरत्वव्यवस्थापकन्त्वा-
ास्ति, इदमपि तथाभूतं चेत्तेन गतार्थम् सगुणब्रह्मविषय-
ापकञ्चेत्तेन बाधितार्थमित्युभयथापि तदपहृतविषयत्वादिदम-
शास्त्रमिति, अतो न व्याघात इति चेत्; एवं तर्हि
स्वप्रकाशत्वेनासंदिग्धत्वोक्तिः पूर्वपक्षेनुपयुक्ता तद्विरुद्धा च
तदेव हि त्वया पूर्वपक्षसमर्थनार्थमुक्तम्, कश्च कणभुगादिशास्त्रे-
हृतविषयतयानारम्भे शङ्कितुं शक्ये निर्विशेषशास्त्र एव तव पक्षपातः?
ि तत्सर्वं निराकर्तव्यमिति चेत्; इदमपि तथा, अनभि-
शास्त्रान्तरमस्तिचेत्तत्रैव निराकर्तव्यं स्यात्, अनभिमततन्त्राणां
पि स्वातन्त्र्येण पृथक्पृथक्तत्रैव निराकरणात्, तस्मादनिरा-
दवसीयते इदमेव तच्छास्त्रं नान्यदिति, तत्र निर्विशेषस्वरूपस्य
तविषयत्वे सति विचारशास्त्रविषयत्वासम्भवः कुत इति प्रथमाक्षेपः,
दिग्राहिणा साक्षिणा बाधितत्वाद्वेदान्तानां निर्विशेषस्वरूपे प्रामा-
म्भवात्तदवलम्बनेन पूर्वपक्षासम्भवो द्वितीयः, शिष्यस्य श्रवण-
द्वाक्षेपानुपपत्तिस्तृतीयः, वेदान्तानामुपक्रमादिन्यायैर्निर्विशेषस्वरूपपरत्व-
शास्त्रसापेक्षत्वाद्व्याघातश्चतुर्थः। तत्र प्रथमदोषस्तवापि समानः, त्वयैव
कण्ठभाष्यटीकायामुपक्रमादिषड्विधतात्पर्यलिङ्गैरद्वैतवाक्यानां द्वैत-
्यात्प्राबल्येनैव पूर्वपक्षसमर्थनात्, एवन्तत्रापूर्वतयैवाद्वैतस्य वेद-
त्वोपपादनात् कथन्तस्य विचारविषयत्वासम्भवः, प्रामाण्यपर्यन्ता-
तात्पर्यकल्पनमपि पक्षद्वयसाधारणम्, तदनुपपत्तिरपि समाना
... ... नेनप्रामाण्यस्य सिद्धत्वाददद्वैतस्य सर्वथा विषयत्वा

चतुर्थोऽपि दोषस्समानः । नापि द्वितीयः, सुखाद्यनुभवरूपो हि सुख्यहमिति सम्बन्धांशे भ्रम एव, सुखादेरन्तःकरणधर्मत्वात् स्वादिस्वामित्वमपि परमात्मन एव, अतस्सम्बन्धांश इव भ्रमत्वसम्भवाद्वैतान्तैरद्वितीयप्रतिपादनं सम्भवत्येवेति, एवं त्थानसम्भवात् । न तृतीयः, शास्त्रस्यैव वादकथारूपतया द्घातरूपस्यास्य वादकथारूपत्वाभावेन शिष्यकृतशङ्कारूपत्वात्

नीलकण्ठस्तु –

'परीक्ष्ये' त्यादि वाक्यं विषयः, तत्रायं संशयक्रमः— मुमु विचारयोगीति सूत्रकृता समारभ्यमाणमिदं शास्त्रं प्रेक्षावत्कर्तृकार योग्यन्नवेति प्रथमसंशयः, तदर्थमियंचिन्ता – कृतधर्मविचा नुष्ठानविशुद्धचित्तस्य धर्मविचाराधिगतमक्षय्यादिवाक्यानां : समर्पकत्वं प्रबलन्यायान्तरेण प्रतिक्षिप्य ततो विरक्त सम्पन्नस्य नित्यफलप्रेप्सया तत्साधनं ब्रह्मज्ञानमिच्छतोधि विचारेण तज्ज्ञानसिद्ध्यर्थं विचाराङ्गगुरूपसदनं परी विधातुं शक्नोति नवेति, तदर्थमियं चिन्ता - ब्रह्म विच तदर्थमियं चिन्ता - ब्रह्म विषयत्वयोग्यं सप्रयोजनज्ञानं तदर्थमियं चिन्ता - अहमित्यनुभूयमानो जीव एव ब्रह्म संसारदशायामप्रकाशमानं कर्तृत्वभोक्तृत्वादिप्रपंचराहितन्नि अथवा ततोन्यदिति । यदि जीवादन्यत्तदापि ब्रह्म परिच्छ यदा जीव एव ब्रह्म तदा तस्याहमनुभवसिद्धत्वान्न यदि तस्य निर्विशेषं रूपान्तरं ब्रह्म, यदि वा जीवादन्य तदा तस्याशक्यप्रतिपादनत्वान्न विषयत्वयोग्यता,

शास्त्रात्कथंचि

अनादिसंसारस्य दुरपह्नवत्वाच्च; यदा ब्रह्मणो न विषयत्वा-
प्रयोजनज्ञानत्वे; तदा न तस्य विचारार्हता, यदा न तस्य
ार्हता; तदोदाहृतं वाक्यमुक्तमर्थं विधातुन्न शक्नोति, यदा न
ोति; तदा विचारस्याकर्तव्यत्वात्तदर्थमिदं शास्त्रमनारम्भणीयमिति
क्षे फलफलिभावः। यदा जीवादन्यद्ब्रह्म परिच्छेद्यञ्च सप्रयोजन-
ञ्च, तदा विषयप्रयोजनवत्त्वेन ब्रह्मविचारस्य कर्तव्यत्वात् तदर्थ-
शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः। पूर्वपक्षस्तु -
विचारयोग्यन्न भवति, तत्र सन्देहाभावात्; अयमात्मा ब्रह्मेतिश्रुत्य
ा एव ब्रह्मेत्यवगमात्, तस्य चाहमनुभवसिद्धत्वात्; ननु सा श्रुति
वस्याहमनुभवसिद्धेन कर्तृत्वभोक्तृत्वाद्यनेकानर्थव्रातकलुषितेन रूपे
ाभावन्न प्रतिपादयति, नित्यशुद्धत्वादिरूपब्रह्मशब्दार्थानुगमविरोधात
न्तु कर्तृत्वादिकल्पिताकाररहितेन निर्विशेषचैतन्यरूपेण, तत्तु संसा
शायामावृतन्न प्रकाशत इति तत्र सन्देहो घटत इति चेत
च्यते, अयमात्मा ब्रह्मेति श्रुतिर्जीवस्य यावद्रूपमहमनुभवे प्र
ते तावद्युक्तमेव, तदिदंशब्देन परिगृह्य ब्रह्मेत्युपदिशति, तदि
ब्रह्मशब्दार्थस्साकल्येन न सम्भवतिचेत्; यावत् सम्भवति तावन्त
देवब्राह्मणत्वादिरूपमर्थमभिदधत्तत्र वर्तिष्यते, नच 'ध्यायतीवलेलायती
त्यादिश्रुतिभिर्जीवे कर्तृत्वादेरपारमार्थिकत्वप्रतिपादनाद्वस्तुतो निर्विशे
जीवस्वरूपः, तदेव च ब्रह्म प्रतिपाद्यत इति वाच्यम्, करोमि भु
इत्यादिप्रत्यक्षाविरुद्धानां तासां श्रुतीनां जीवस्य कर्माद्यधीनकर्तृ
मत्तया तत्पारतन्त्र्यमात्रपरत्वात्; अस्तुवा निर्विशेषस्वरूपं
तथापि तद्विचारस्य फलन्तद्विषयं ज्ञानम्, ज्ञानञ्च ज्ञेयपरि
वेदान्तविचारजन्यं ज्ञानं ब्रह्म इदमित्थमिति प्रकारविशेषविशि
विषयीकरोति न वा? आद्ये निर्विशेषत्वभङ्गप्रसङ्गः, अन्त्ये य
...ाकाश

जगत्कारणत्वादित्याद्यनुमानप्रभवनिर्णये ब्रह्मण आकाशादिप
ब्रह्मत्वरूपसाध्यविशिष्टतया जगत्कारणत्वहेतुविशिष्टतया च विष
स्यात्। किं बहुना? शब्देनापि प्रतिपादनासम्भवात् ' अयमात्मा ब्र
श्रुत्या सविशेषमेव जीवस्वरूपं ब्रह्मतया प्रतिपाद्यत इति
मनुभवसिद्धस्य न विचारशास्त्रविषयता। नचैवमपि ' अन्नं ब्रह्मे
रपि श्रवणात्किमन्नादिकं मुमुक्षुवेद्यत्वाभिमतं ब्रह्म जीवो वेति
एव स्यान्न निश्चयः, ' तपसा चीयते ब्रह्म ततोऽन्नमभिजायत '
श्रुतिषु ब्रह्मणोऽन्नादिभ्यो भेदश्रवणादुक्तान्नादिकं ब्रह्म न भवति
' य आत्मनि तिष्ठन्नि ' त्यादिश्रुतिषु तस्य जीवादपि भेदश्रवणा
ब्रह्म न स्यादिति वाच्यम्; प्रतिवेदान्तं ' तत्वमसि ' ' अहं ब्र
' अयमात्मा ब्रह्म ' ' प्रज्ञानं ब्रह्मे ' त्यादिजीवब्रह्माभेदवाक्यानां
तात्पर्यलिङ्गोपेततयान्नादिश्रुतिभ्यो जीवब्रह्मभेदश्रुतिभ्यश्च ब
वधारणेन जीव एव ब्रह्मेति ततो निश्चयसम्भवात्। य
भेदश्रवणात् ब्रह्म जीववर्गादन्यत्, तथापि तत्कारणत्वनियन्तृत्वा
मभ्युपगन्तव्यम्, तदा तदपरिच्छेद्यमित्यपि, ' यतो वाचो
अप्राप्य मनसा सह ' ' यद्वाचानभ्युदितं येन वागभ्युद्यते '
श्रवणात्; एवञ्च विचारजन्यज्ञानं ब्रह्म यथावत्परिच्छिद्य
चेत् तस्यापरिच्छेद्यत्वभङ्गप्रसङ्गः, नचेदयमितिगु[illegible]तीता
वर्तिघटवद्यथावन्न प्रकाशेतेति मोक्षजनकत्वाभिमतं ब्रह्मज्ञानन्न
स्यात्; ' भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। तत
त्वतो ज्ञात्वा विशते तदनन्तर ' मिति यथावद्ब्रह्मज्ञानस्यैव
साधनत्वावगमात्। किंच प्रयोजनं च न किंचित्पश्याम
ब्रह्मज्ञानात्किंचित्प्रयोजनमभविष्यत् तदा अहमनुभवरूपाद्वेदा
तद्ज्ञानाज्जायमानन्तदिदानीमद्रक्ष्याम, अतो ज्ञायते न
[illegible] निर्विशेषजीवरूपस्य तदन्यस्य वा ब्रह्मणः परिज्ञ

श्रवणमननानन्तरमुपासनाजन्यतत्साक्षात्कारात् ; न चेदानं
ीति वाच्यम्, तथापि सप्रयोजनत्वानिर्वाहात्; संसारनिवृत्ति
का हि निरतिशयानन्दावाप्तिः प्रयोजनमिहेष्यते, संसारनिवृत्तिश्च
लानर्थव्रातमूलसकलजीवावारकैकद्रव्यरूपमलाख्यानादिसिद्धपाशनिवृत्ति
भ्युपगम्यते; नचानादेर्द्रव्यस्य ज्ञानमात्रान्निवृत्तिस्सर्वजीवगतानर्थ
ानस्यैकपुरुषमोक्षकारणान्निवृत्तिश्च भवति; तस्माद्विषयप्रयोजनाभा
दं शास्त्रमारम्भणीयमिति।

सिद्धान्तस्तु - सर्वथा समारम्भणीयमिदं शास्त्रम्, ब्रह्मणस्सनि
ेन सप्रयोज[illegible]नत्वेन च विचारार्हत्वात्; न च 'अयमात्माब्रह्म
ादिश्रुत्या जीवस्यैव ब्रह्मत्वावेदनात् संशयासम्भवेन विषयत्वम्
यानुपपन्नमिति वाच्यम्, 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'अनी
ात्मा बध्यते भोक्तृभावात्' 'आत्माप्यनीशस्सुखदुःखहेतोः' 'त
यः पिप्पलं स्वाद्वत्ति अन[illegible]ो अभिचाकशीति' - 'य आ
पहतपाप्मा' 'यतो वा इमानि भूतानि जायन्ते' 'तोयेन जी
यससर्ज भूम्या' मित्यादिश्रुत्या जीवब्रह्मणोरत्य[illegible]लक्षण्यप्र
ावेदनेन वचनद्वयतात्पर्यानवधारणदशायां संशयसम्भवात्; ब्रह्म
ीवत्वस्वरूपपर्यालोचनायान्निरस्तसमस्तोपप्लवकळङ्कनिरतिशयानन्दादि
क्तिमाहिमातिशयवत्वरूपतया ब्रह्मत्वस्य जीवत्वस्य त्वनाद्यज्ञानवास
ष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमनव्यापारप
ाशनिस्समतापसहिष्णुत्वरूपतया तयोरत्यन्तविरुद्धधर्मत्वावसायेन उ
ृतश्रुतिद्वैराज्यसत्वेनच संशयावश्यम्भावात्। किंच 'अन्नं ब्र
मनो ब्रह्म' 'विज्ञानं ब्रह्म' 'आदित्योब्रह्मे' त्यादिश्रुत्या 'तत्वम
अहं ब्रह्मास्मी' ति श्रुत्या तत्त्वंपदार्थयोरिवान्नादीनां ब्रह्मणश्चाभेद
नात् किमत्र तत्वमिति संशयस्यावर्जनीयत्वात्। ननु षड्विधता
[illegible] 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' '

नं ब्रह्मे' त्यादिश्रुतय एव तात्विकाभेदपराः, नत्वन्नादिश्रुतयो जीवब्रह्मभेदश्रुतय इति चेत् ; तर्हि प्रतिवेदान्तमुपक्रमोपसंहा स्तात्पर्यानिर्णयो महता विचारेण साध्य इति तदर्थं विच मारम्भणीयमेव स्यात् । यदुक्तम् - ज्ञेयपरिच्छेदरूपत्वात् ज्ञानस्य परिच्छिन्नब्रह्मविषयत्वन्न सम्भवतीति ; तन्न, ईदृगिदमितिब्रह्म च्छेदासम्भवेपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदस ननु ब्रह्मणस्सर्वात्मना परिच्छेद्यत्वाभावे 'वेदान्तविज्ञानसुनिश्चि 'भक्त्या मामभिजानाती' तिश्रुतिस्मृतिभ्यां सर्वात्मना ब्रह्म रूपेण ज्ञानेन प्राप्यतया वर्णितं प्रयोजनं न सिद्ध्येदिति : इतरव्यावृत्तत्वपरिच्छेदमात्रावलम्बनेन श्रवणमननयोः एकैकविधे गुणमात्रावगत्या निदिध्यासनस्य च निवृत्तौ साक्षात्कारकाले परिच्छेद्यत्वसम्भवादपरिच्छेद्यत्वश्रुतीनां 'यतोवाचोनिवर्तन्त' श्रुत्यन्तरानुसारेण मनोवागतीतत्वविषयत्वात् ; न साक्षात्कारका मनसा तद्गुणेयत्तादिप्रतिपादकशब्देन वा परिच्छिद्यते, किन्तु वरणेन सर्वतः प्रसृतेन स्वाभाविकज्ञानेनैव । न च प्रयोज शास्त्रस्यानारम्भणीयता, 'ब्रह्मविदाप्नोति परं' 'ज्ञात्वा शिवं मत्यन्तमेति' 'ईशन्तं ज्ञात्वा अमृता भवन्ति' 'तमक्रतुं वीतशोको धातुः प्रसादान्महिमानमीशम्' 'आत्मानमरणिं कृ वञ्चोत्तरारणिम् । ध्याननिर्मथनादेव पाशं दहति पण्डितः' देवं मुच्यते सर्वपाशैः' इत्यादिश्रुत्यनुसारेण तदुपासन कारिणः पाशविच्छेदलक्षणमोक्षरूपप्रयोजनसत्वात् इदानीं ता पासनाविरहेण तादृशमोक्षानुदयेपि तदनन्तरं तादृशमोक्षोदया अत एवानादिर्ननिवर्तत इति दूषणस्य नावकाशः, निवृर्त्तं सद्भावो हि निवृत्त्यभ्युपगमे तन्त्रम् , न तु सादित्वमनादित्वं वा

गनिवृत्तिश्च न सम्भवतीति ; तन्न , तत्तन्मुच्यमानजीवावरण-
नां मलशक्तीनामेव निवृत्त्यभ्युपगमात् , श्रवणमनननिदिध्यासन-
ात्कारैरुपचीयमानगत्युपबृंहितैः प्रसन्नस्य शिवस्यैव मोचकत्वा-
गमेन तस्य दृढनिवर्तकसम्भवाच्च । नच 'अथातोब्रह्मजिज्ञासे' ति
शास्त्रारम्भणीयत्वप्रयोजकविषयप्रयोजनसद्भावरूपहेत्वनुक्तेः कथन्त-
द्भावेन शास्त्रानारम्भणीयत्वपूर्वपक्षनिरसनमुपपद्यत इति वाच्यम् ,
तस्तादृशहेतुसद्भावानुक्तावपि ब्रह्मणो जिज्ञासाकर्मत्वप्रतिपादकब्रह्म-
ासापदेन तत्सूचनादिति ।

इतरे तु– 'अथातो ब्रह्मजिज्ञासा ।' अथ शब्दोयमारम्भार्थः,
द्धारम्भस्यैव शास्त्रस्य स्वसाध्यार्थसाधकत्वात् । अतश्शब्दो हेतुपरः,
च न्यायवशसन्निहितशास्त्रप्रक्रमप्रयोजकमात्रपरामर्शी । ब्रह्मजिज्ञासा –
ज्ञस्यापि यतस्सर्वदृक्सूत्रमन्तरा न पूर्यते– न फलपर्यवसायिनी, अत
र्थः । ब्रह्मेति तन्त्राभिप्रायम् । ब्रह्मणः - कर्तरि षष्ठी, ब्राह्मणस्य ।
ाणा - करणे तृतीया, सन्यासेन । ब्रह्मणा- पूर्ववत् तृतीया, वेदान्तेन ।
ाणः - कर्मणि षष्ठी, परमात्मनः । ब्रह्मणे - तादर्थ्ये चतुर्थी , ब्रह्म-
तये । ब्रह्मणा - इत्थंभावे तृतीया, स्वस्यैव ब्रह्मत्वेन । जिज्ञासा -
नेच्छा । सा च सर्वार्थैरन्वेति । अत्र ब्रह्मपदे नैकशेषः, एक-
भक्तिपरत्वाभावात् । अतो ब्रह्मजिज्ञासापदानि षडुत्पाद्य वृत्तिविभक्त्या
ह्मजिज्ञासा पदएवैकशेषः । जातावेकवचनं छान्दसम् , पूर्वसवर्णोवा ।
मारभ्यतइत्याकाङ्क्षायां प्रस्तावाद्ब्रह्मसूत्रमित्युपतिष्ठते । तदयं
त्रवाक्यार्थः परिनिष्पन्नः; 'ब्राह्मणस्य प्रवृत्ता वेदान्तेन ब्रह्मप्राप्तये ब्रह्मत्वेन
न्यासेन स्वस्य ब्रह्मकर्मकज्ञानेच्छा यतस्सूत्रं विना न फलपर्यवसायिनी

अत्रेत्थमधिकरणशरीरम् । वेदान्तार्थः किं सूत्रमन्तरेण ज्ञातु शक्यः ? उत नेति संशयः । साङ्गवेदाद्ध्ययनादेवार्थस्य सुज्ञानत्वा सूत्रमन्तरेण वेदान्तार्थो ज्ञातुं शक्य इति पूर्वपक्षः । सिद्धान्तस उक्तव्याकृत्यादिपारगमनस्याल्पिष्ठज्ञानक्रियायुस्तपोयोगवीर्यादिमत्पुरुषमात्रा शक्यत्वात् न्यायेनैव ज्ञातव्यत्वात् सूत्रमन्तरेण वेदान्तार्थो न ज्ञा शक्य इति । ननु- अत्र ब्रह्मेति तन्त्राभिप्रायमित्यनुपपन्नमिवाभाति ब्रह्मपदेनानेकेषामर्थानामुपस्थितौ वाचः क्रमवर्तितया तस्मादनेकार विभक्तीनां युगपदुत्पत्त्यसम्भवात् क्रमेणोत्पत्तौ द्वितीयादेर्विभक्त्यन्त दुत्पत्तिप्रसङ्गाच्च एकस्या एव विभक्तेरुत्पत्तेर्वाच्यतया विभक्त्यन्तर र्थानामिहोपस्थित्यसम्भवात् उत्पन्नविभक्त्यर्थेन तन्त्रितानां सर्वेषामर्थान मन्वयप्रसङ्गात , प्रातिपदिकार्थविभक्त्यर्थत्वयोरविशेषेण युगपत्सर्वविभ क्त्युत्पत्तावपि उक्तदोषानतिवृत्तेश्चेत्याशङ्क्य 'हलन्त्य' मितिसूत्रइवे शब्दतन्त्रता विवक्षिता नार्थतन्त्रतेत्यभिप्रायेणाह 'अतो ब्रह्मजिज्ञास पदानी' ति । शब्दतन्त्रत्वं ह्यनेकशब्दानुकरणरूपता, अन्यानिरुक्तेः अनुकार्यं चानुकरणस्यार्थः । स च वाक्यार्थान्वयी । एवंचेहापि शब्द नामनुकार्याणां वाक्यार्थान्वयप्रसङ्गः । 'हलन्त्य' मित्यत्राप्ययं प्रसङ्ग समान इत्यत्राह 'उत्पाद्ये' ति । उत्पादनमुन्नयनम् । उन्नायकः प्रयोजनगौरवम् । इदमेव शब्दतन्त्रस्थले सर्वत्र विवक्षितम् । इदमे 'हलन्त्य' मित्यत्रापीतिभावः । अत्र ब्रह्मपदे तन्त्रन्यायेनानेकता जिज्ञासापदे तु प्रत्यर्थं शब्दनिवेश इति न्यायेनेति ।

अत्र पक्षचतुष्टयेपि ब्रह्मजिज्ञासापदेन ब्रह्मणो विषयत्वप्रतीते सामर्थ्येनार्थसिद्धान्तन्यायः तत्र विवक्षित इत्युच्यते । स्पष्टमे हेतुभावसमर्पके अतश्शब्दे जाग्रति धर्मिनिर्देशकेन न्यायसूचनं जघ

: पूर्वपक्षराद्धान्तौ वक्तव्यौ । सम्भवति चाधिकारासम्भवादारम्भा-
र्मविचारसमर्पणपरेणाथशब्देनाधिकारसम्भवरूपसिद्धान्तहेतूपस्थापनम्,
वति चाथशब्दोपस्थापितस्य वृत्तस्य हेतुभावोपस्थापकेऽतश्शब्दे
ब्दार्थहेतुभावापेक्षितवेदार्थापातप्रतीतिरूपविशिष्टार्थाधिकारैकदेश —
र्थम्, सम्भवति चापातप्रतीतितात्पर्यके सिद्धेव्युत्पत्तितात्पर्यम्,
ादावेव । अथातो धर्मजिज्ञासेति शास्त्रमात्रं प्रत्यापातप्रतीतेः पूर्ववृत्तत्व-
्, तेनाथशब्देनोत्तरभागासाधारणपूर्ववृत्तमेव निर्दिष्टम्, सङ्गतिप्रद-
र्थञ्च तावन्मात्रनिर्देशः । अतश्शब्देन तु हेतुभावमुपस्थापयता
ेद्धये विशिष्टाधिकारस्सूच्यते । युज्यते च कृत्स्नशास्त्रपूर्ववृत्ततया
्थाया आपातप्रतीतेरतश्शब्देन विवक्षा । यदि कर्मविचारानन्तर्ये-
;, तदानीमपि स्वाभिमतार्थानन्तर्यव्युत्पादनेनाधिकारसमर्थनपरत्व-
ूत्रस्यास्थेयम्, न तु विषयसमर्थनपरत्वम्, अतश्शब्देन तद्धेतो
नात् । वेदान्तेषु कोऽर्थःप्रतिपाद्यते? किमद्वैतम्? उत द्वैतम्? द्वैतेपि
कीदृशम्? तद्ज्ञानस्य च किं फलम्? मोक्षफलकत्वे मोक्षः कीदृशः?
मादिरूपेण परस्परविरुद्धभेदाभेदादिवाक्यश्रवणेन सन्दिहानोऽधिकारी
सते, तदनुजिघृक्षया च शास्त्रारम्भः । एवं च द्वैता-
ेतरादिनिर्णयार्थं प्रवर्तमानमिदं शास्त्रमनारम्भणीयमित्याक्षेप एव
े कर्तुमुचितः, न तु शास्त्रस्यार्थविशेषनिष्ठत्वं सिद्धवत्कृत्याक्षेपः ।
ाद्यपक्षद्वयसाधारणो दोषः ।

तत्र नाद्यः, एवं हि तत्र तात्पर्यम्; प्रत्यग्ब्रह्मैक्यमेव उपनिष-
इति निर्धार्य खलु भवद्भिरद्वैतगोचरमीमांसा प्रवर्त्यते, तदेव
ग्ब्रह्मैक्यमसम्भवि, अत एवमर्था मीमांसा नारम्भणीयैवेति
स्थितं कश्चित्प्रत्यनेन सूत्रेण मीमांसाया आरम्भणीयत्वमाचार्येण

र्यस्य च तात्पर्यासिद्धेः; आत्मपदं विहाय जिज्ञास्यं वस्तु अन
कातिशयासङ्ख्येयकल्याणगुणगणविभूतिवैशिष्ट्यप्रतिपादकेन ब्रह
उपस्थापयन्नाचार्यः जीवब्रह्मभेदस्य ब्रह्मणस्सविशेषत्वस्य च वेदान्त
स्वाभिमततां च स्पष्टमाविष्करोति । किंचाचार्यस्याद्वैततात्पर्यबुः
अद्वैतस्यासम्भवेपि कथं कारणविषयाचिन्तानारम्भः ? ननु
विचार्यमाणं कारणत्वमुपादानत्वम् , तच्च न ब्रह्मणि सम्भवति,
कारत्वात् ; सिद्धे चाद्वैते विवर्ताधिष्ठानत्वरूपोपादानत्वस्य ब्रह्मणि
वात् सद्विद्यादिकारणवाक्येषु किं प्रधानं जगत्कारणतया प्रति
उत ब्रह्मेति विचारप्रवृत्तिस्सम्भवतीति अद्वैतमेवाक्षिप्य समर्थ्यत इति
न, अद्वैतसिद्धावपि विवर्ताधिष्ठानत्वस्य अनुपादानत्वरूपत्वात्
भाषिकोपादानत्वाश्रयणे अद्वैतासिद्धावपि ब्रह्मणो धर्मान्तरमादाः
भाषिकोपादानत्वसम्भवेन पूर्वपक्षस्यानिराकरणीयत्वेन तादृशा
श्रयनस्यानुचितत्वात् । किञ्च- प्रत्यग्ब्रह्मैक्यसत्त्वेऽसत्त्वेपि वा प्रत्यग्ब्र
विचार्यता कथमिह सिद्धवत् क्रियते? ब्रह्मणाश्चिदचिद्भेदस्यैव
प्रतिपिपादयिषितत्वात् ; स तु भेदः स्वाभाविको वा औपाधिको
विवादः ; यद्यैक्यं परमार्थः ; तदा औपाधिकभेदविषयं शास्त्रं
भेदः परमार्थः; तदा स्वाभाविकभेदविषयं शास्त्रमित्येतावदेव, तत
प्रतिपाद्यस्य भेदस्य स्वाभाविकौपाधिकभेदत्वाविचारः पृथगेव
अयं विचारस्तु भेदगोचर एव । प्रयोजनाक्षेपोप्यनुपपन्नः ;
भावेन हेत्वसिद्धेः । ज्ञानेनाज्ञानन्निवृत्तमित्यनुभवो यद्यस्ति,
प्रातिभासिकसुखानुभवपरोक्षसाधारण इति न तेन तत्सिद्धिः,
वपि कुतस्तन्मात्रनिवर्तकता ? न हि निरुक्तोनुभव इतरनिव
मपि विषयीकरोति । अतोयमनुभवो वेदान्तप्रतिपाद्यं ज्ञानाद्व

धितुं क्षमत इति नोक्तरीत्या प्रयोजनाक्षेपो युक्तः। एवं पूर्व-
ायानां आभासत्वात्तन्न्यायाङ्गीकारेण राद्धान्तश्चानुपपन्नः। प्रपञ्च-
त्वस्य सिद्धान्तयुक्तेः केनापि सौत्रपदेनानाघ्राणस्य प्रागेवाभि-
ध। मिथ्यात्वं च वेदान्तविजये निरस्तमेव।

ृतीये सिद्धान्तस्य वृषळोद्वाहमन्त्रता स्पष्टैव, अहमनुभवे कर्तृत्वादे-
े स्वरूपभानस्यावैकल्यात्; अतएवावरणासम्भवाच्च। ननु प्रका-
ेप्यज्ञानावरणमस्त्येव, अत एव प्रत्यक्षेण भासमानेपि चन्द्रे कश्चन्द्र
प्रश्न इति चेत्; तत्राज्ञानावरणं किमर्थं कल्प्यते, किं
थ जिज्ञासाविरोधित्वात् ज्ञानाभावार्थम्? उत ज्ञाने सत्यपि
सोन्मेषाय? नाद्यः, असम्भवादनङ्गीकाराच्च; अस्त्येव ज्ञानम्, तद-
ारणमेव अवधारणाभावः आवरणादेवेति चेत्; एवमप्यनभ्यास-
न्नजलानवधारणे इदं जलमितिवत् चन्द्रानवधारणेनापि अयं चन्द्र
व्यवहारो दुर्निवारः, प्रकृते चाज्ञानेनावधारणस्वरूपनिवृत्तिरनु-
ादृशब्रह्मस्वरूपप्रतिबन्धः अनुत्पन्नानवधारणरूपब्रह्मस्वरूपोत्पादो वा
भवति, ब्रह्मणोऽनाद्यनन्तत्वात्। न द्वितीयः, तत्र ज्ञाने सत्यपि
साहेतुतयाऽदृष्टादिकमेव किञ्चिदङ्गीक्रियताम्; यदि ज्ञानसत्त्वेन
न्धकाभावासिद्ध्या प्रश्नासम्भवात् प्रश्नदर्शनाच्च प्रतिबन्धकाभावबो-
ज्ञानपदेनाप्रसिद्धस्य कस्यचिद्व्यवहारमात्रात् प्रतिबन्धकाभावाधीनं
भवतीत्यभिमानः, तर्ह्यदृष्टादिकमेव सम्प्रतिपन्नं यत्किंचिदज्ञान-
व्यवह्रियताम्। वस्तुतस्तु प्रकृष्टप्रकाशत्वावच्छेदेन चन्द्रपद-
त्वज्ञानवतस्तादृशजिज्ञासाद्यदर्शनात् प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशेन
ग्निर्धारणानन्तरमपि 'कस्सोम' इति प्रश्नदर्शनाच्च प्रकृष्टप्रका-
च्छेदेन चन्द्रशब्दवाच्यताज्ञानाभावाद्वाच्यताविषय एव प्रश्नः।
ाशनायाद्यतीतशुद्धस्वरूपं वेदान्तवेद्यमहंप्रत्ययेन भातीत्यत्र किं

प्रतीतौ स्वरूपं न भातीति ; नाद्यः, स्वरूपस्य ज्ञातत्वादेव संशयप्र
रसमर्थनात् , न हि पुरुषनिश्चये सत्यपि रूपादिज्ञानं तत्र पु
जनयेदिति बुद्धिः कस्यापि सम्भवति । न द्वितीयः, असिद्धेः;
हि विशिष्टप्रतीतिस्वभङ्गः , परस्पराध्यासवर्णनानुपपत्तिश्च । किं
भासते किञ्चिन्न भासत इति त्वदीये निर्विशेषे निरवयवे
शङ्कासम्भवः । ननु - प्रकाशत एव स्वरूपं अतो न भा
ज्ञानावरणमेव विवक्षितमितिचेत् ; किन्ततः ? न हि प्रकाशे
नेपि प्रकाशाभावबोधकपदेन यस्य कस्यचित्पारिभाषिकस्य व्यव
तेन प्रकाशाभावकार्यसम्भवः, तथा सति चतुरङ्गक्रीडोपकरणेषु
पारिभाषामात्रात् तैरेव राज्यपरिपालनादिप्रसङ्गात् । अनाद्य
शस्य प्रतिबन्धनाशयोः करणनिरपेक्षतया तत्सन्निकर्षप्रतिब
श्चासम्भवः स्पष्ट एव । नास्ति न प्रकाशत इति व्यवहारो न
तस्यावरणकार्यत्वस्यैव वाच्यत्वात् । अत एव तद्योग्यताऽऽवरण
इति चेत् ; किं प्रकाशमानेपि नास्ति न प्रकाशत इति
प्रकाशाभावः करणापाटवं विप्रलम्भबुद्धिर्वा आपाद्यते ? तत्रा
वेनेतरयोः परिशेषान्न ताभ्यां संशयोपपादनसम्भवः । प्रका
तत्कार्यप्रतिबन्ध एवावरणमित्यपि न, अहमिति व्यवहारस्य
विषयत्वाभावप्रसङ्गात् । स्वरूपमात्रगोचरव्यवहाररूपं कार्यं
इति चेत् ; न, तत्र पदव्युत्पत्त्यग्रहणादेव व्यवहाराभावोपपत्ते
वरणरूपत्वकल्पनानुपपत्तेः । न च संशयोत्पादनमेवावरणम्
भावादिकोटिस्मरणादिमुखेन संशयोत्पादकत्वस्यासम्भवात् ;
संशयोत्पादकत्वमपि प्रकाशप्रतिरोधमन्तरेण कथमुपपद्यते ? प्रक
संशयोत्पत्तावपि ज्ञानस्य सिद्धत्वे न जिज्ञासासम्भव इति विचा

ादितिचेत् ; कथन्तर्हि जीवस्याशनायाद्यतीत रूपान्तरमित्युच्यते । तत्र षष्ठ्यर्थो मुख्यः, अद्वैतभङ्गात् ; उपचारे च जीवाभिन्न- ्याद्यतीतरूपमितिस्यात् । अस्य स्वरूपस्य जीवाभेदसम्भवे ब्रह्मणः तदसम्भवः ? अपि च - अशनायाद्यतीतत्वं किन्तेषां मिथ्यात्वेन त्ताकत्वाभावात् ? उत मिथ्याभूतैरप्यशनायादिभिरस्पर्शनात् ? नाद्यः, ा रूपान्तरत्वासिद्धेः ; न द्वितीयः, असिद्धेरेव । किञ्च - जीवस्य ायाद्यतीतं रूपं अस्ति न वेति संशयो वाच्यः । तत्र स्वरूपांशे ाभावादशनायाद्यतीतत्वांशे संशयः पर्यवसितः । सोप्यनुपपन्नः, क्षं जीवस्य तत्पारवश्यश्रवणात् । तथा च अशनायादीनां सत्यत्व- ह एवोक्तःस्यादिति प्रपञ्चमिथ्यात्वसन्देह एव पर्यवसानात्तस्यैव जिज्ञा- ा स्यात्, ब्रह्मणि सन्देहाभावान्न तस्य जिज्ञास्यता ।

तृतीयोपि पूर्वपक्षोऽनुपपन्नः । तत्र हि वेदान्तानां जीवब्रह्मैक्य- वं मिथ्यावाद्युक्तरीत्या निश्चित्य शास्त्रानारम्भ उपपादितः ।

तत्राद्वैतस्य सिद्धत्वे न वेदान्तस्य गोचरः ।
सिद्धोपि यदि वेदान्तगोचरस्तर्हि गोचरः ॥
विचारस्य कथन्न स्यादद्वैतेध न सिद्धता ।
नितान्तन्तु विचारस्य गोचरः स्याद्धाविधिः ॥
अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा ।
निष्प्रत्यूहैर्भेदवाक्यैस्तथा भेदस्सुनिष्ठितः ।
अद्वैतं यदि वेदान्तमन्तरेण विचारतः ।
सिद्धचेद्विचारतः प्राग्वत्संशयो न कथं भवेत् ॥

सिद्धान्तोप्यनुपपन्नः । सर्वेषां वेदान्तानां निर्विशेषजीवचैतन्यरू

वाक्यगतब्रह्मशब्दस्त्वया स्थापितः । न चायं सर्वानपि वेदान्तानुप
द्दढन्यायैर्निर्णीतादद्वैततात्पर्यात्प्रच्याववयितुं शक्तः । तस्मादिहाद्वैतिव
पक्रमादिनयेभ्यः प्रबलतरन्यायैस्सर्ववेदान्तानां सगुणे ब्रह्मणि
तात्पर्यं प्रसाध्यते चेत्; एवंकृतपूर्वपक्षनिरासो लभ्यते, न तु ब्रह्म
प्रदर्शनमात्रेण । यदि तथैव क्रियते तदा स्पष्टमेव प्रि
'पृथगुपदेशा' दिति सूत्रे प्राधान्येन जीवब्रह्मभेदसाधनं त्वद
मसंगतं स्यात्कृतकरत्वादिति ।

चतुर्थः पक्षोप्यनुपपन्नः । तत्र भाष्ये परीक्ष्येत्यादिवाक्यं
इत्युक्तम्; इदमसङ्गतम्, विचारकर्तव्यताया एव विषयत्वात्
परीक्ष्येत्याद्युक्तार्थानामपीह विवक्षिततया एतत्सूत्रसमानार्थतया
त्रार्थविचाराङ्गविधायकतया वा विषयतया व्यपदेशो युज्यते, तादृश
वाच्यत्वात्; संशयपूर्वोत्तरपक्षाणां विषयोह्यधिकरणेषु विषय उ
न, विचारकर्तव्यतायां तदङ्गविधानासम्भवात्; तत्कर्तव्यतायाश्च
म्भवात्; अत एव विचारकर्तव्यतासंशयाधीनसंशयस्यापि तत्रा
स एव प्रधानविषयः, तदर्थमेव विचारकर्तव्यता बिचार्यत
वाच्यम्; 'अथातो धर्मजिज्ञासे' ति पदस्य शास्त्रोपक्रमस्थस्य
विचारकर्तव्यताविचार एव प्रधानतात्पर्यात् तस्मादितरचिन्तानामेत
मेवोचितम् न तु विपरीतम्, तस्मादस्य विषयतयोपादानमस
मित्याक्षेपं हृदि निधाय टीकायां विषयत्वसमर्थनार्थं प्रधानभूत
विचारकर्तव्यताचिन्ताशेषतयैव परीक्ष्येत्यादिवाक्यगोचरचिन्तोपन्य
एवं विचारस्य फलं हि तद्विषयं ज्ञानम्, ज्ञानञ्च ज्ञेयपरि
वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति? न वा? यदि परि
नत्ति; तदा परिच्छेदातीतत्वभङ्गप्रसङ्गः, यदि न परिच्छि

त्कं मूले । तत्र ज्ञानं च ज्ञेयपरिच्छेद इत्यत्र ज्ञेयपरिच्छेदो यदि ज्ञेय-
र्थः, तदा यदि परिच्छिनत्ति; तदा परिच्छेदातीतत्वभङ्गप्रसङ्गइत्य-
गतम्, परिच्छेदातीतत्वं ह्यानन्त्यम्, न हि निर्णये तद्भङ्गः, अनन्त-
ब्रह्मनिर्णयतदभावयोः चोद्यासम्भवप्रसङ्गश्च । यदि ज्ञेयपरिच्छेदो
दिभिरिदमेतावदेवेत्यवधारणम्; तदा असम्भवः, न हि सर्वं ज्ञान-
द्गुणकमेवेति परिच्छेदात्मकम्, अयमिति हि परिच्छिन्नो घटो-
यत इति वाक्यविरुद्धं च । न हि घटश्चक्षुषा गृह्यमाणो रूपादि-
विशिष्ट इत्यवगम्यते, रसादेरपि सत्वात्तद्व्यतिरेकग्रहणासामर्थ्याच्च ।
एव यथावन्नप्रकाशेतेत्यप्यसङ्गतम्, यत्किंचित्प्रकारविशिष्टज्ञान-
पे यावत्प्रकाशत्वात्, एवं च श्लेषावलम्बनोयं ग्रन्थ इति भाति,
पुपपन्नम्, दूषणानारोहात्; तस्मादसङ्गतोयं ग्रन्थ इत्याशङ्क्य
यान्निर्विशेषब्रह्मस्वरूपं जीव इति पक्षे जीवाद्भिन्नं ब्रह्मेति पक्षे
त्यायं ग्रन्थो योजितः । तदर्थश्च पूर्वपक्षोपन्यासे-
: । तदिदमस्य जात्यन्धेन यष्टिदानम् । सिद्धान्तकोटीनां
कालिभावदर्शनसमये यदा न शक्नोति तदा विचारस्याकर्तव्यत्वा-
न्नमनारम्भणीयमित्युक्तम् । तदपि न सम्भवति, अङ्गविधानासाम-
य विचाराकर्तव्यतानुपपादकत्वात्, यदा न शक्नोतीतिह्युच्यते,
शक्तिश्च ब्रह्मणो विचारानर्हत्वादेव, ततश्चाङ्गविधानाशक्तिदशायां
ारस्य कर्तव्यता सिद्ध्यत्येवेति चेत्; किन्ततः? न हि तावता
साधनकत्वमात्रेण परस्परोपपाद्योपपादकभावो भवति, तदभावे च
न्तादर्थ्येन संशयः? वस्तुतस्तु पूर्वपक्षेधिकार्याक्षेपेण परीक्ष्य निर्वि-
स्य तद्विज्ञानार्थिताक्षेपस्य सिद्धान्तेधिकारिसमर्थनेन तत्समर्थनस्य
सिद्धेरेव तस्य वाक्यस्य सूत्रविषयता युक्ता, प्राधान्येन तद्वाक्यार्थ-

विचारारम्भमाक्षिपतः , पूर्वपक्षिणः तद्वाक्यार्थ आक्षेप्य इत्येवम
सिद्धेः । तदसिद्धिश्च तथोद्देश एव विचारारम्भाक्षेप इत्यसिद्धेः,
तद्वाक्यास्पर्शेनैवाक्षेपसम्भवात् । न हि वेदान्तमात्रस्यान्यपरतां
पूर्वपक्षिण एतद्वाक्यार्थे विशेषणाक्षेपः कार्यः, फलफलिभावे यदि
निर्विशेषं रूपान्तरं ब्रह्म यदि वा जीवादन्यदप्यपरिच्छेद्यम् , तदा
शक्यप्रतिपादनत्वात् न विषयत्वयोग्यतेत्युक्तम् ; तत्र परिच्छेद
श्लेषः, रूपान्तरपक्षे सप्रकारकनिर्धारणपरः, अन्यत्वपक्षे तु कृत्स्नप्र
निर्धारणपरः, उत्तरग्रन्थानुसारात् ; ततश्च कृत्स्नप्रकारनिर्धारणाभावे
मशक्यप्रतिपादनता ? कृत्स्नप्रकारविशिष्टतया शक्यप्रतिपादनत्वाभा
क्षायां कथं तदभावे विषयत्वयोग्यताविरहः ? कथं च तेन वि
नारम्भः ? विधानाशक्तेः, विचारकर्तव्यतानुपपादकत्वमुक्तमेव । जी
ब्रह्मेति ततो निश्चयसम्भवादिति वदन् पूर्वपक्षी सम्भावनोक्त्या निश्च
कोटिमप्युपस्थापयन् तद्दशायां संशयं स्पष्टमेव समर्थयन् कथं
माक्षिपतीति न विद्मः । अपि च यस्य च यो जायते तस्याप्यन्नादि
भेदश्रुतिभ्यश्च बलवत्त्वनिर्धारणेन निश्चय इत्युक्तम् , तेनोभयश्रुति
स्याभिधानात्संशय एव समर्थितः । सिद्धान्तेपीदमेव मुच्यते । परीक्ष
वाक्यस्य विषयत्वासम्भवः टीकोक्तसंशयप्रमाणाद्यसम्भवः प
भावासम्भवश्च स्थितः । पूर्वपक्षश्चानुपपन्नः । पूर्वपक्षिणो यदि ज
ब्रह्मेत्यवगमः ; तदा चिदचिद्वैलक्षण्यविचारात्मकमिदं शास्त्रमनार
मित्येव पूर्वपक्षस्स्यात् ; न तु सन्देहाभावादनारम्भणीयमिति । यच्च
दूषणमुक्तम् ' अस्तु वा भेदश्रवणा ' दित्यादिना ; तदप्यनुपपन्नम्
च्छेदश्रुतीस्तत्तत्कतिपयगुणविशिष्टोपासनविधायकश्रुतीश्च जान
सारेण ' यावान्यश्चास्मी ' ति स्मृतिवचनात् निर्णयस्यावश्यकत्वान्न
जाग्रतीष्वपि वेदान्तानां षड्विधतात्पर्यलिङ्गैरभेदनिर्णयसमर्थस्य

लम्बनेन पूर्वपक्षश्चानुपपन्नः, अहमितिप्रत्यक्षसिद्धस्य देहब्रह्मकस्य पूर्वत्वासिद्धेः । न च षड्विधतात्पर्यलिङ्गान्तर्गतैः पञ्चभिरेव प्राबल्यनिश्चयो विवक्षित इति वाच्यम्, तेषामप्यसम्भवात् । ते सजातीयविजातीयस्वगतभेदमिथ्यात्वमुपक्रान्तम्, तत्वमसी- उपसंहृतः । एवमद्वैतस्यैवोपक्रमोपसंहाराविति मायिभिरिष्यते, नचाय- पूर्वपक्षिण इष्टः, तेनैव करोमिभुञ्जइत्यादिना सत्यत्वव्यवस्थापनात्, ास्यजगत्कारणत्वमेवोपक्रान्तम्, तदेव च विस्तरेणोपपाद्यत इत्येव त, तथा प्रतीतौ च 'ऐतदात्म्यमिदं सर्व' मिति तच्छरीरत्वपरं मिसी' ति च 'आयुर्घृत' मितिवदिति प्रतीयेत, ततश्च नाभेदोपसंहार- तेः । नाप्यभेदाभ्यासप्रतीतिः । फलस्य च नाद्वैतज्ञानसम्बन्धत्व- तेः, कारणाभावात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा अर्थवादः, ज्ञाने सर्वविज्ञानं च ज्ञातव्यान्तराभावात् इतरस्य सर्वस्यापि ात्वेन ज्ञानाद्वेति तैरुच्यते, इयं च प्रतीतिः पूर्वपक्षिणो नास्त्येव, गुणोपपत्तिपरतया तैर्वर्णिता 'यदा सोम्येद' मिति वाक्यार्थप्रती नास्त्येव । अतः कथं पूर्वपक्षिणो भेदवाक्यादद्वैतवाक्यस्य प्राबल्य ष्षड्विधतात्पर्यलिङ्गैः स्यात्? न च तदुक्तप्रकारातिरेकेण उपक्रमादि मभेदविषये उपपादयितुं शक्यम् । एवञ्चाद्वैतपरत्वेप्यपूर्वत्वाभावेन चेदर्थवादत्वेन कर्मशेषत्वस्य वाच्यत्वात्ततो वरं भेदस्य जगत्कार देश्चापूर्वतया तत्रैव वेदान्तानां तात्पर्यमित्येव बुद्धिः स्यात् । नन्विद यामेव केनचित्पण्डितंमन्येनोक्तम्; तदज्ञानादेवोक्तम्, मूले ः क्तमेव, अतो मूलस्यायम्भावः; 'अयमात्मा ब्रह्मे' ति अस्मिन् ात्मनि ब्रह्मपदप्रयोगात् अन्यत्रापि श्रूयमाणो ब्रह्मशब्दः तत्समा क इति ; हन्तैवं सति साधु समार्थितस्सन्देहाभावः, भेदश्रुतिषु जाग्र

लिङ्गबलादद्वैतवाक्यं प्रबलमित्युक्तम् डिम्भप्रलोभनार्थम्; डि
खलु किञ्चिदपूर्वं वस्तु दास्यामीत्युक्ते तद्विशेषमनिरूपयन्त एव यत्कि
द्वस्तु भोग्यमेव तदिति बुध्या कुतूहलिनस्तिष्ठन्ति, तद्वदिहापि षड्
तात्पर्यलिङ्गाभिधानकमुक्तशङ्कापरिहारकं किञ्चिद्वस्त्वस्तीत्युक्ते तदुप
केचिद्विप्रलब्धा भविष्यन्तीति बुध्या इदमुक्तम्, तस्यापि परित्यागे
मेकस्यापि विप्रलम्भः? तस्मात्किंचिदद्वैतवाक्यमात्रश्रवणेन पूर्वपक्षो
वाक्यप्रदर्शनेन राद्धान्त इत्येव पर्यवस्यति। यदिदं केभ्यश्चिद्रोचते
ते विदांकुर्वन्तु।

अपि च माध्वपूर्वपक्षनिराकरणे त्वया 'आत्मा ब्रह्मेत्यधीतः' '
न्तानामखण्ड' इति च श्लोकद्वयेनोक्तं दूषणद्वयं तवापि तुल्यमे
तथा च

व्यध्वयोर्ध्वंसनेनैव व्यध्वविध्वसनं मतम्।
व्यध्वस्य ध्वंसनेनैव व्यध्वविध्वसनं न तु॥

राद्धान्तश्चानुपन्नः। भेदं प्रसाध्य भिन्नत्वात्तस्य ज्ञानाभावात् 
स्सम्भवतीत्येव सिद्धान्ते संशयस्समर्थ्यते? उत तदसमर्थनेनैव भेदे
देपि संशयस्सम्भवतीति? नाद्यः; सर्वथेत्यस्य भेदे अभेदेपि संशय
पद्यत इति टीकोक्ताभिप्रायविरोधात्; किञ्चात्रदुर्मेधसा पूर्वपक्ष्या
कुमतिपरिकल्पितातिजुगुप्सितेन न्यायेनाहंबुद्धिमात्रेण कारणत्वभेदाभे
संशयासम्भवमापादयता जीवस्यैवाशनायाद्यतीतरूपान्तरमपरिज्ञातम
वृषळोद्वाहमन्त्रेणेवाप्रमाणमुखतो वा भेदसमर्थनेपि संशयमुपपादयता
धर्मिकसंशये ब्रह्मकोटिकसंशयेपि धर्मिकोटिज्ञानस्य वाच्यतया तेनैव

भेदसमर्थनं व्यर्थम् । न द्वितीयः; पूर्वपक्षनिराकरणसमर्थसिद्धान्तयु-
ःथनात् । धर्मिज्ञानस्य संशयाविरोधित्वं हि तन्निराकरणसमर्थो न्यायः
नोपन्यस्तः, किन्तु वृथैव शाखाचंक्रमणं कृतम् । ननु धर्मिज्ञानस्य
ाविरोधित्वमेव विवक्षितो न्यायः; स त्वाभिधायिकः, धर्मिज्ञानस्य
ाविरोधेपि किंकोटिकोयं संशयः किन्निबन्धनश्चेति जिज्ञासा-
ये कोटिनिबन्धनयोः प्रदर्शनं क्रियते त्रिषु धामस्वित्यादिनेतिचेत्;
वमपि धर्मिज्ञानस्य संशयाविरोधित्वं कथं समर्थ्यते ? अनुभवबला-
चेत्; किन्त्वया पूर्वपक्षिणोनुभव उत्पाद्यते? उत्पन्नएवानुभवो ज्ञाप्यत
चेत्तर्हि सत्येव तथानुभवे कथं पूर्वपक्षिणः प्रत्यवस्थानसम्भवः? अनुभव-
ादनेनेति चेत्तर्हि तादृशसर्वातिशायिशक्तिमता तेन कृतं प्रच्छादनन्त्वया
छिद्येत? किंच पूर्वपक्षिणा सर्वैरपि जीवाभेदनिश्चयात् संशयाभा-
केवलान्वयित्वमापाद्यते ? उत वस्तुतो जीवब्रह्मणोरभिन्नत्वात् ?
, असिद्धेः; अहमनुभवसिद्धत्वादित्यनेन प्रागुक्तमेव स्थितमितीति
ेन च विरोधाच्च । न द्वितीयः, षड्विधतात्पर्यलिङ्गबलात् बलवत्व-
रणेनाभेदनिश्चयसम्भावनोक्तिविरोधात्, तत्र हि लोके तत्सम्भवः
ाघत इति प्रतीयते । ननु षड्विधलिङ्गबलान्मया तत्वं निर्द्धारितम्;
न संशयसम्भव इत्येव पूर्वपक्षिणस्तात्पर्यमिति चेत्; न, तथा
सिद्धान्ते मीमांसासापेक्षत्वेन तत्परिहारोक्तिविरोधात् । न हि पूर्वपक्षि-
नेर्णयाय शास्त्रारम्भसमर्थनमुपपन्नम्, न हि पूर्वपक्षिणः पूर्वोत्पन्नज्ञा-
शास्त्रारम्भसम्भवः, न च भाविज्ञानार्थम्, पूर्वमेव तस्य ज्ञानोत्पत्त्यैव
ास्थानस्य वाच्यत्वात् । किंच उपक्रमोपसंहारादिन्यायसापेक्षत्वेपि न
ापेक्षा, स च न्यायो लोकत एवावगन्तुं शक्यते । धर्मजिज्ञासासूत्रे पराभि
र्वपक्षे विश्वजितन्यायवदत्रयदुक्तं अत्र नैकमेव वेदान्तवाक्यमुदाहृत्य
य प्रसिद्धमप्रसिद्धं वा रूपं ब्रह्मेति तस्य पूर्वपक्षिणा शास्त्रविषयत्वमापाद

अतस्तद्विचारार्थं शास्त्रारम्भापेक्षा स्यादेव । न च सर्वेषां वेदानां
भेदपरत्वे सार्वत्रिक एको न्यायोस्ति, उपक्रमादीनां श्रुतिलिङ्
परश्शतबाध्यबाधकभावप्रकारशालिनान्तत्र व्यवस्थापितत्वात् । न
सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम् , तथा सति
शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात् , तस्मात्तावतान्न्यायानां
दकमेकं शास्त्रमिहापेक्षितमिति अस्मिन्नेव शास्त्रे पूर्वपक्षिणो व्य
आपतति न धर्ममीमांसापूर्वपक्षिणोपीति । इदं हि निरुक्तप्रकारा
वाक्षिपति । पूर्वपक्षानुत्थानस्यैवानेन सिद्धेः, अत एव व्यध्वा
माध्वपूर्वपक्षानुत्थानहेतुतयेयमेव युक्तिरुपन्यस्ता । अत्र पक्षान्तरोप
न्वितेन क्रमेण उत्तरोत्तरस्य जघन्यत्वं व्यज्यते । पूर्वद्विके सि
मतार्थानुवादेन पूर्वपक्षोत्थापनात्पूर्वपक्षिणस्तदभिमतार्थेन विचारापे
राद्विके सिद्धान्त्यनभिमतार्थस्यैव पूर्वपक्षिणा समर्थनाद्विचारसापेक्ष
न्तेनैव , पूर्वपक्षेऽद्वैतोपपादनाद्वेदान्तविषयत्ववदेव विचारविष
वश्च । प्रथमद्विके प्रथमपक्षे पूर्वपक्षोक्तार्थानङ्गीकारेण सिद्धा
न्न व्याघातः, द्वितीयपक्षे पूर्वपक्षोक्तार्थमङ्गीकृत्य रूपान्तरा
सिद्धान्तकथनात् जीवस्यैव रूपान्तरमित्यत्र षष्ठीमुख्यगौण
घातः, उत्तराद्विकेपि प्रथमपक्षे पूर्वपक्षिणा प्रपञ्चमिथ्यात्वाङ्गीकारात
ज्ञातत्वमवलम्ब्य पूर्वपक्षो युज्यते, द्वितीयपक्षे तु प्रपंचसत
कारात् जीवस्वरूपस्य ज्ञातत्वेपि जीव एव सत्यानां अज्ञातानां वि
सम्भवान्न पूर्वपक्षोत्थानसम्भवः, तस्मात्पापीयांस्तुरीयः पक्ष इति

इतरपक्षे सिद्धारम्भमेव शास्त्रं स्वार्थसाधकमित्यनुपपन्न
रब्धस्य वेदस्यैवार्थसाधकत्वात् , शास्त्रान्तराणाञ्च तदुपजीवनेन
ण्यात् । ननु वेदातिरिक्तं शास्त्रं समर्थितारम्भयोग्यताकमेवार्थस
विवक्षितमिति चेत् ; किन्तर्हि योग्यमिति पदाध्याहारो वि

तर्थानन्वितार्थकता । नहि योग्यमित्युक्ते समुच्चेतुं योग्यमिति वा अथ योग
मित्युक्ते आरम्भयोग्यमिति वा सिद्ध्यति। अथशब्देनैव तावत्पर्यन्तो
स्थापनं विवक्षितमिति चेत्; तर्हि यत इति व्याख्यानमनुपपन्नम्
केश्च सूत्रं विना ज्ञानासम्भवात्सूत्रं कर्तव्यमिति हि राद्धन्तो विवक्षितः
ततश्च सूत्रं कर्तव्यमित्येवार्थो युक्तः, न तु सूत्रं क्रियत इति, सूत्रपाठ
देव सूत्रं क्रियत इति ज्ञातुं शक्यत्वात् । पाठानुपजीवने च न सूत्रपद
ध्याहारसिद्धिः । किञ्च - आनन्तर्ये स्वरसस्य तन्मुखेनाधिकारसमर्थनद्वा
विचारकर्तव्यतासाधकतया सार्थस्याथशब्दस्यास्वरसानन्वयिप्रयोजनविधुर
म्भार्थत्वं कथन्नोपहास्यम्? आरभ्यत इत्युक्तिं विनाप्यारम्भस्य ज्ञा
शक्यत्वात् । नन्वस्य शास्त्रस्य न्यायग्रन्थानात्मकत्वे जिज्ञासासूत्रं
ानम्, अस्य तथात्वे न किंचिन्मानमस्ति; अतोस्याधिकारसमर्थनार्थत
त्वेर्निबन्धनम्, अतो नेदं सूत्रं न्यायग्रन्थात्मकम्; किन्तु शास्त्रस्य न्याय
ग्रन्थानात्मकत्वप्रख्यापनपरम्, तत्र यद्यपि ब्रह्मजिज्ञासेत्येतावदुक्त
जन्मादिसूत्रकरणेपि आद्यसूत्रत्वादेवेदमुत्तरस्याविचारात्मकत्वख्यापनार्थं क्रिय
ति चाध्याहारेण योजनेति च सुगमम्; तथापि मङ्गळार्थप्रयुक्ताथ
शब्देनारम्भार्थेन क्रियत इति पदाध्याहारो व्यज्यते, एतेन धर्मजिज्ञास
सूत्रमपि व्याख्यातम्, इतिचेत्; मैवं, अस्य विचारात्मकत्वे अत इ
तूपन्यासस्यैव मानत्वात्, सम्भवत्यपि स्वारसिकार्थे तत्परित्यागे
कथञ्चिद्वर्णनस्यायुक्तत्वात्; तस्मादथशब्देन हेतुत्वयोग्यार्थोपस्थापनमे
युक्तम्, अतश्शब्दस्य प्रकृतपरामर्श एव स्वारस्यात् । किंच जन्मा
सूत्राणां पूर्वेणैकवाक्यत्वमेव, एकवाक्यता च कर्तव्यपदाध्याहार ए
युक्ता, न्यायैः कर्तव्यतासमर्थनात्, न तु क्रियत इत्यध्याहारे, जन्मादि
सूत्राणां प्रयोजनाभावात्, अतो यथोक्त एवार्थः । एतेन धर्मजिज्ञास
सूत्रमपि व्याख्यातम् । किञ्चाथशब्दस्यानन्तर्यपरत्वेऽतश्शब्दस्य तदु
स्थापितार्थपरामर्शित्वे च सम्भवत्यपि तत् परित्यज्य बह्वध्याहारे

किञ्च तन्त्रत्वे बह्वीनां जिज्ञासानां तत्तदर्थभेदानुसारेणांगीकारे कथञ्च
योग्यतार्थता सूत्रस्य? ब्रह्मकर्तृककामिनीजिज्ञासादीनां सूत्रसापेक्षत्व
भावात्, एकत्वे तन्त्रत्वविरोधः; स्ववचनव्याघातश्च, एकशेषजात्यश
त्वपूर्वसवर्णानामनपेक्षितत्वात्। तथा च न्यायेन विना वेदार्थस्य दुरव
बोधतायास्सूत्रं क्रियत इत्येतावतैव चारितार्थ्यात् किमर्थं जात्याद्यर्था
कीर्तनम्, अपयोगात्कीर्तने नात्रैव तत्समर्थनम्, हेत्वनुपन्यासात्
अनुवादमात्रत्वे न किञ्चित्प्रयोजनम्, कथञ्चित् जिज्ञासोपयोगमात्रेणैष
मर्थानां कीर्तने जननीजनकसुकृतारोग्यादि कुतो न कीर्त्यते? किञ्च जात्य
र्थाङ्गीकारे विरोधः, त्रैवर्णिकाधिकारत्वात् ब्रह्मज्ञानस्य; ब्रह्मत्वेन जिज्ञासे
त्यनेनैव ब्रह्मण इत्यर्थलाभात् कर्मणि षष्ठ्याश्च न प्रयोजनम्, जिज्ञा
सायास्साङ्गवेदाध्ययनमात्रसाध्यतया सन्न्याससाध्यत्वाभावान्न तद्ग्रहण
मपि युक्तम्, अध्ययनसाध्यजिज्ञासाबलादेव वेदान्तेन ब्रह्मणे इत्यपि सि
मिति तद्ग्रहणञ्च व्यर्थम्, ब्रह्मत्वेनेत्यपि न वाच्यम्, तस्य तात्विकत्वे
ब्रह्मगोचरजिज्ञासोक्त्यैव तत्सिद्धेः, अतात्विकत्वे जिज्ञास्यत्वायोगा
अनुपपत्तेश्च, 'पृथगात्मन' मिति श्रुतिविरोधात् 'एङः पदान्तादती' त्य
सारेण अब्रह्मत्वेन जिज्ञासेति तु युज्यते, कस्य भोः? चिदचितोः, कुतः
श्रुतिसूत्राभ्याम्, श्रुतिरुपलक्षिता, सूत्रं च 'ईक्षते' रित्यारभ्य चिद
चितोर्ब्रह्मभेदमेव साधयति, भेदः किं स्वाभाविकः? उतौपाधिकः? वि
त्यः? अथ वा मिथ्या? इत्यन्यदेतत्। यादृशस्तादृशो वास्तु भेदः प्रति
पाद्यमानस्तु स एवेत्यविवादम्।

अत्राथातो वेदान्तार्थजिज्ञासेति वक्तव्ये ब्रह्मजिज्ञासेत्युक्तिस्तत्वल
ब्रह्मण एव वेदान्तार्थत्वात्। तत्र च आत्मजिज्ञासेत्यनुक्त्वा ब्रह्मजिज्ञासे
वदन्नाचार्यो मिथ्यावादिनो निराचष्टे। यदि हि जीव एव ब्रह्म तदानीं
तत्सूचनार्थमात्मजिज्ञासेत्येव वाच्यम्, जीवव्यावृत्तिप्रतिपादकं गुण
वैशिष्टपरं ब्रह्मपदं प्रयुञ्जानस्य जीवब्रह्माभेदनिरसने ब्रह्मणो निर्विशेषत्व

रसनेपि हि तात्पर्यं गम्यते । यदुच्यते निर्विशेषं वस्तु ब्रह्मशब्दार्थं ते ; तत्र किं लोकव्युत्पत्तिबलात्तस्य तादर्थ्यमुच्यते ? उतानुशासनानुरोात् ? उत वैदिकव्युत्पत्तिबलात् ? नाद्यः, असिद्धेः ; अत एव न द्वितीयः, त्र हि वृद्ध्यर्थकबृहिधातोरयं शब्दो व्युत्पाद्यते , वृद्धिश्च न निर्विशेवम् , किन्त्ववधिनिरूप्यो धर्मविशेषः, अत एव तृतीयोपि निरस्तः ; बृहति बृंहयति ' 'बृहन्तो ह्यस्मिन् गुणाः ' ' बृहत्त्वाद्ब्रह्मणत्वाच्च ' त्याना सविशेषस्यैव ब्रह्मशब्दार्थत्वप्रतीतेः, जिज्ञासापदेनापि निर्विशेषत्वं रयति, ब्रह्मशब्दरूढ्या च देवतान्तरस्य वेदान्तार्थत्वनिरासस्सूच्यते । ढिश्च भगवति - 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मि। ब्रह्मशब्दो मुख्यवृत्तो महामुन ' इत्यारभ्य - ' यस्मिन्प्रयुज्यमाने तु योगस्सुपुष्कलः । तत्रैव मुख्यवृत्तोयमन्यत्र ह्युपचारत ' इत्यादिगापुराणादिवचनसिद्धा । अत्रानेन सूत्रेण समानार्थस्य 'परीक्ष्य लोका' तिवाक्यस्य स्मारणात्तत्र पुरुषपदेन भगवत एव सर्वविद्यावेद्यत्वोपदेशात् मुखेनापि देवतान्तरस्य वेदान्तार्थत्वनिरसनं सूच्यते । एवमनेन णानारम्भमिथ्यादेवतान्तरवादिनो भगवान्पराशर्यो विजिग्य इति ।

सूत्रवाक्यार्थस्तु ; पूर्ववृत्तात्कर्माधिगमादनन्तरं विशिष्टाधिकारिलात् ब्रह्मविचारः कर्तव्य इति । तदाह भगवान्बोधायनः 'वृत्तात्कर्माधिादनन्तरं ब्रह्मविविदिषे' ति । विंशतिलक्षण्या ऐकशास्त्र्यं च ,

उपदेशादथोक्त्यादिस्वारस्याद्धर्मयोगतः ।
पूर्णोपदेशतश्चैक्यं पूर्वभागोपजीवनात् ॥

उपदेशस्तावद्भगवतो वेदाचार्यस्यैकव्यवहितप्रशिष्यो भगवान् बोधाः परमर्षिः सम्प्रदायविच्छेदशङ्कागन्धरहितस्वाचार्यपरमाचार्ययोरभि-

षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि ' रिति । संहितमिति स॰
नात् ऐकग्रन्थ्यं च विंशतिलक्षणी । वृत्तिकारो भगवानुप॰
मतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्या
न्थ्यं हि वक्तृसंकल्पाधीनम् , अत एव परस्परविरुद्धनानाशास्त्र
कस्य शाङ्करसर्वसिद्धान्तसंग्रहादेरैकग्रन्थ्यसिद्धिः । वक्
' संहित ' मित्यादितदीयसच्छिष्यसूक्त्यैव ज्ञायते । यदि स॰
द्रियते, तदा वेदे स्वरवर्णपदवाक्यपादगीतिविभागानुपूर्व्यादौ क॰
तस्मान्न्यायमुखेन कस्यचिदर्थस्य मुनिभिः प्रतिपादने सो
स्वतो ग्राह्यः, तैरेवोपदेशेन प्रतिपादने उपदेशबलादेवार्थो ग्र॰
एव वेदाचार्यवक्तृकत्वाविशेषेपि सौत्रार्था न्यायत एव गृह्य॰
तार्थास्तूपदेशादेव । ऐकग्रन्थ्यन्तु तदज्ञोपदेशादेव ग्राह्य॰
शङ्करोप्यैकग्रन्थ्यमङ्गीचकार । अत एव तेन ' एक आत्मनश्श॰
दित्येतत्भाष्ये देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे ॰
अत्र तद्व्यवस्थापनं पुनरुक्तमित्याशङ्क्य शबरस्वामिना तत्र
तत्सूत्रारूढमिति समाहितम् । अत एव ब्रह्मजिज्ञासासूत्रे भाम॰
ज्ञासासूत्रस्थस्य धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वमुक्तम् ।
णिकानान्दुरपह्नवमैकशास्त्र्यम् ।

अथशब्दश्च शब्देन प्रकृतमपेक्ष्यानन्तर्यबोधन ए॰
लोके काप्यनेवंविधस्थले अथ शब्दस्य प्रयोगादर्शनात् ; ॰
योग्यतया बुद्धिस्थानन्तर्यं क्वचित् अथातो धर्मजिज्ञासेत्य॰
न्मात्रगतेरप्यभावे स्वारसिकमानन्तर्यार्थत्वमपि परित्यज्यार॰
क्रियते क्वचिदथशब्दानुशासनमित्यादौ, अतोथशब्दस्वारस्या
ग्रन्थ्यमवर्जनीयम् । तथा शारीरके 'तदुक्तम्' ' तदुक्तम् ' ' अ॰

इमर्थ्ये ' मितिवन्निरुपपदेनैव जैमिनीयग्रन्थार्थः परामृश्यते । यत्र पूर्व-
सूत्रानुपन्यस्तजैमिन्युक्तार्थःपरामृश्यते, तत्र जैमिनिग्रहणमेव क्रियते ।
योर्भिन्नग्रन्थता स्यात् , तदा वक्तृनिर्देशोवास्यादधिकरणानिर्देशो वा ।
यविधुरोयं निर्देशो विंशतिलक्षण्या एकतामेवावगमयति। यद्यपि स्वोप-
यश्रुतिस्मृतिगतार्थपरामर्शेपि निर्देशोयमुपपन्नः, न चायन्तादृशः । ननु
मित्यादिना परामृष्टानां अर्थानां जैमिनीयसूत्रेषु सत्वेपि सर्वैरपि
कारैस्तथाव्याख्यानेपि न तद्ग्रन्थोपजीवनेन तदर्थपरामर्शः, अपि
न्यत्रैव यत्र क्वचन वर्तमानानां तेषामर्थानां परामर्श इति; अहो
ऽ एवं वदन् सिद्धमन्नं परित्यज्य भिक्षामटतिदुर्मतिः, तस्मादुक्त
वारस्यादप्यैकशास्त्रचन्दुरपह्नवम् । आदिपदेन हेतुत्रयं संगृह्यते ।
ग्रहणन्तावत् दृश्यते, ' सर्ववेदान्तप्रत्ययञ्चोदनाद्यविशेषात् ' ' श्रुत्यादि
त्वाच्च न बाध ' इति । न ह्यत्र व्याकरण इव गणपाठोस्ति; न च
चोदनादीनां पाठो दृश्यते, येन 'एष भूतपतिरेष भूतपाल एष सेतुर्वि-
' ' यस्मिन् द्यौः पृथिवी चान्तरिक्ष ' मित्यादिषु पठितानां 'पत्यादि-
ग्रः' 'द्युभ्वाद्यायतनं स्वशब्दा' दित्यादिष्विवादिशब्देन ग्रहणं
, तस्मादादिग्रहणमेकग्रन्थत्वेन सन्निहितानां संयोगरूपादीनामेव
विष्यतीत्यभिप्रायमिति खरसतोऽवगम्यते । किञ्च- ' सर्ववेदान्त-
मित्यत्र साध्यानुपादानादधिकाशङ्कानिराकरणेन सूत्रस्य शाखा-
करणन्यायविषयत्वोपपादकतया तदीयमेव साध्यं लप्स्यत इत्यभि-
, तदप्यैकग्रन्थ्यएवाञ्जसा भवति । किञ्च ' भेदादिति चे ' दित्यत्र
न्यस्तः पूर्वकांडोक्तहेतूनामन्वयो भविष्यतीत्यभिप्रायेण, तदप्यैक-
ग्रमञ्जसं भवति । धर्मयोगः - ' अथातो धर्मजिज्ञासे ' ति सूत्रम् ।

जिज्ञासावृत्तयुक्तीनां तथैवाक्षरलक्ष्मणोः ।

ज्ञाता शक्तिविशेष; ...

प्रतीतिसमुत्थतदर्थजिज्ञासायाः पूर्वोत्तरभागयोरपक्षपातात्, अतस्तद
जिघृक्षया प्रवर्त्यमानग्रन्थस्य पूर्वोत्तरभागोभयविषयत्वौचित्यात् तत्कर्तव्यत
प्रतिपादकमिदं सूत्रं विंशतिलक्षणीविषयमेव युक्तम्। क्रमसङ्गत्यैकव्य
ख्यानरूपताभिरनपवादाभिरेकग्रन्थत्वञ्च युक्तमेव। कर्तृभेदात् परं शङ्क
शङ्कावकाशः, तमपि विचारयामः। किं जैमिनेर्ब्रह्ममीमांसाग्रन्थाकरण
तदर्थापरिज्ञानात्? उतानुग्रहविरहात्? नाद्यः, भगवद्बादरायणशिष्यस्य
तदयोगात्, तस्य ब्रह्मविदग्रेसरत्वस्य भगवतैव 'परं जैमिनिर्मुख्यत्वा
देत्यादिभिः ख्यापनाच्च। न द्वितीयः, पूर्वमीमांसाग्रन्थस्याप्यकरणप्रस
ङ्गात्, परमपुरुषार्थाभ्यर्थिजनेष्वनुजिघृक्षाविरहस्तु ब्रह्मप्राप्तेरपुरुषार्थत्वा
दर्थापरिज्ञानाद्वा स्यात्, न च तदुभयं शङ्कामप्यर्हति। एवमाचार्यबादर
ायणस्य ब्रह्मज्ञानाङ्गत्वेऽपि कर्मणोऽनिरूपणं न तदज्ञानान्नाप्यनुजिघृक्षावि
रहात्। तस्मादाचार्यान्तेवासिनोर्जगदनुग्रहप्रवणयोरन्यतरभागाकरणमन्यो
न्यसमयेनैकैकभागकरणादित्यनाग्रहचित्तैरभ्युपगन्तव्यम्। प्रमेयगौरवानुस
ारादाचार्यान्तेवासिनोर्भागव्यवस्था। अत एव हि 'आचार्यस्तु ते गति
वक्ते' त्युक्तमग्निभिः। तत्र यथाचार्यस्तु ते गतिं वक्तेति वाक्या
नुसारात् भिन्नवक्तृकयोरप्येकवाक्यत्वम्, तथा पूर्वोक्तन्यायसहकृतवृत्तिकार
वचनात् पूर्वोत्तरमीमांसयोरेकवाक्यत्वमनुसन्धेयम्। आचार्यस्य शिष्यमुखे
पूर्वभागकारणं शिष्यस्यानुग्रहशीलताप्रदर्शनार्थम्, स्वानुग्रहपात्रताख्यापना
र्थं। तस्मात्स्वतःप्राप्तसर्वविषयत्वबाधकाभावात् प्रतिज्ञा कृत्स्नविषयैव। नचैवं
कृत्स्नस्यापि जैमिनिनैव करणापत्तिः। नह्ययमथशब्दः - 'अथ शब्दानु
शासन' मित्यादिवदारम्भार्थकस्सन् स्वकर्तव्यप्रतिज्ञापरः, किन्त्वध्यय
नानन्तर्यपरस्सन् धर्मविचारकर्तव्यताप्रसाधनपरः। यद्यपि विचारकर्तव्यता
साधनस्य स्वकृतिवैयर्थ्यपरिहारार्थत्वात् साधितकर्तव्यभावस्य विचारस्य
स्वकर्तव्यत्वम् सिद्ध्यति, तथापि न कृत्स्नस्यापि स्वकर्तव्यता। एवञ्च
ाभ्यां सम्भूय चिकीर्षितस्य ग्रन्थस्यादौ कृत्स्नशास्त्रकर्तव्यता प्रसाधितेति

र्। यद्युक्तार्थाननुगुणं सूत्रं तदा नोक्तार्थसम्भवः, नच लेशतोप्यननु-
श्यते, किन्तु आनुगुण्यमेव । तथाहि– पूर्ववृत्तं तावत्समानम्,
ानानन्तर्यमथशब्दार्थः, अध्ययनन्तदधीनमापातज्ञानञ्च भाग
ारणमेव, न कर्मविचारासाधारणं पूर्ववृत्तं निर्दिष्टम्। युक्तिश्च समा
ययनविधेरक्षरग्रहणपर्यन्तत्वात्। अर्थज्ञानपर्यन्तत्वाभावेन स्वाध्या-
ाविक्षितार्थत्वे मानाभावान्मीमांसा नारम्भणीयेति पूर्वपक्षे युक्तेः– अर्थ
: स्वतःप्राप्तस्याध्ययनविधावपि बाधकाभावेन स्वाध्यायस्य विवक्षिता
ीमांसा आरम्भणीयेति राद्धान्तयुक्तेः- अध्ययनस्य स्वर्गार्थतया
ाध्यायस्याविवक्षितार्थत्वमिति पराभिमतपूर्वपक्षयुक्तेः - अध्येतव्य
ग्रहणपरम्परया जायमानवाक्यार्थज्ञानार्थनियमविधेर्विवक्षितार्थत्वमिति
तयुक्तेश्च समानत्वात्। अक्षराणि च समानानि, धर्मजिज्ञासेति धर्म
ासनेपि वृत्तेः। यदि साक्षात्फलसाधनमपूर्वं धर्मस्तदेहाप्युपासनासाध्यं
धर्मः । यद्युत्तरविचारोपि धर्मविचारः, तर्हि तत्र
प्राधान्यं भज्येतेति चेत्? न, भगवदाराधनस्यैव कर्मज्ञा-
ास्य विचारद्वयेनापि प्रतिपादनेनोभयत्रापि ब्रह्मण एव प्राधान्यात्।
। 'अथातो ब्रह्मजिज्ञासे' ति ब्रह्मणो विशेषेण प्राधान्यं प्रतीयत
ात्? सत्यम्, सिद्धरूपस्य ब्रह्मणो वेदान्तैः प्रतिपादनासम्भवशङ्का-
ार्थं तथा निर्देशात्। तथा च कर्मविचारस्य ब्रह्मनिरूपणानिरपेक्ष-
ापेक्षोपासनफलविशिष्टं ब्रह्म विचार्यतया पुनः प्रतिज्ञायते पूर्व-
ङ्कानिराकरणाय । लक्षणञ्च समानम्; उपासनस्यापि चोदना-
वात । यद्यप्यथातोब्रह्मजिज्ञासेति सपरिकरब्रह्मविचारं प्रतिज्ञाय उपा-
भूतकर्मणश्शारीरकतृतीयाध्याये निरूपणमुचितम्, तथापि कर्म-
स्य बहुग्रन्थसाध्यत्वात् त्रैवर्गिकसाधारण्यात्तेषां ब्रह्मज्ञानापेक्षाविर-
तृतीयाध्यायानिवेशः । त्रैवर्गिकाणां मुमुक्षूणाञ्च साधारणत्वात्त्रिवर्गे
[illegible]

मनुष्ठेयत्वात्पाठक्रमानुसाराच्च कर्मविचारः प्राङ्निवेशितः । य
वेदान्तजिज्ञासेत्येव वक्तुमुचितम् , तथापि रागादेव विचारे
सिद्धान्तयुक्तिख्यापनाय श्रेयस्साधनत्वं बोधयितुं धर्मजिज्ञासे
आपाततः श्रेयस्साधनत्वबोधे हि तन्निरूपणाय रागात्प्रवर्त्तेरन्
प्रवर्तकाभावादप्रवृत्तिपूर्वपक्षे रागात्प्रवृत्तिरिति सिद्धान्त इत्यधि
सूचितं भवति । अर्थज्ञानकामाधिकारिकस्वाध्यायकरणकाध्यय
स्वफलसिद्धये विचारे प्रवर्त्यते पुरुष इति त्वनुपपन्नम् , अर्थज्ञान
पदाभावात् , विधेः स्वफलसिद्धये विधेयतदङ्गातिरिक्तानुष्ठापक
अर्थज्ञानजनकतायाः प्रत्यक्षसिद्धत्वेन विधानासम्भवात् , स्वाध्य
इति प्रतीयमानगुणकर्मत्वविरोधाच्च ।

एतेनार्थज्ञानकामाधिकारिकस्वाध्यायकरणकाध्ययननि
निरस्तः । नाप्यर्थज्ञानफलकगुणकर्माध्ययन नियमविधिः ,
फलताया अश्रवणादेव । नचार्थज्ञानस्य विध्यस्पर्शे
यस्यापि विवक्षितार्थत्वप्रसङ्गः , स्वाध्यायाध्ययनविधिवदेवे
ननु अङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वमवश्याश्रयणीयम् ,
अध्ययनसंस्कृतवेदजन्यार्थज्ञानोपयोगित्वासम्भवेन वेदाङ्गत्व
ततश्चाङ्गाध्ययनवद्वेदाध्ययनमप्यर्थज्ञानपर्यन्तं स्यात् , तव्य
स्यातिलङ्घनमपि 'वेदांगानि समस्तानि कृष्णपक्षे तु सम्पठे
द्वितीयाविभक्तिस्वारस्यातिलङ्घनवदेव स्यादिति चेन्न; —
जशेषेण हवींष्यभिघारयती " त्यत्र प्रयाजशेषप्रातिपदिकानुस
याविभक्त्यवगतगुणभावस्येव वेदांगानीति स्मृतावङ्गप्रातिपा
तृतीयाविभक्त्यवगतप्राधान्यस्य त्यागेपि स्वाध्यायविधिव
प्रत्ययस्वारस्यत्यागे कारणाभावात् । तस्मात्तव्यप्रत्ययेन
भाव्यत्वावगमेन स्वपदेनैव भावनाया भाव्याकाङ्क्षाशान्त

ानभिधानान्निमित्तः कर्मबोधनार्थस्तव्यप्रत्ययस्तस्य प्रथमान्तस्वाध्या
देनोपस्थापनान्निवृत्ता ।

एतेन "स्वाध्यायोऽध्येतव्य" इत्यत्राध्ययनानुष्ठानसिद्ध्यर्थं विधि
रत्वाश्रयणस्यावश्यकत्वेन कर्मपरत्वस्याप्याश्रयणे वाक्यभेदप्रसङ्गादिर्नि
रस्तम्, वाक्यभेदापादकासिद्धेः ।

यत्तु कैश्चिदुक्तम् – स्वाध्यायमध्ययनेन भावयेदिति विध्यर्थः
अध्ययनभावना च दृष्टं समीहितं भाव्यमपेक्षमाणा समानपदोपात्त
ाध्ययनं सन्निहितं च स्वाध्यायमसमीहितत्वादुपेक्ष्याक्षरावाप्तिप्रभृत्यर्था
ोधपर्यन्तं यद्यदध्ययनसाध्यन्दृष्टं पुरुषस्य समीहितन्तत्सर्वं भाव्यतः
वीकरोति, नत्वक्षरावाप्तिमात्रम्, अश्रुतगौणफलत्वाविशेषात्, संको
ाभावाच्च । नन्वक्षरावाप्तेरश्रुतत्वेपि प्रथमोपस्थितत्वादावश्यकत्वादर्थ
हेतस्वाध्यायभागे फलत्वेन क्लृप्तत्वात् सर्वस्वाध्यायानुगतत्वाच्च तस्
एव भाव्यत्वेनान्वये निवृत्तभाव्याकाङ्क्षा भावना नार्थावबोधपर्यन्तं धावती
चेन्न ;- "स्थाणुरयं भारहारःकिलाभूदधीत्य वेदन्न विजानाति योर्थं" ।
त्यादिश्रुत्या ऽर्थज्ञानपर्यन्तत्वरहिताध्ययनस्य विफलत्वप्रतिपादनेन निः
नादध्ययनस्यार्थावबोधपर्यन्तताया एवावश्याश्रयणीयत्वात् । किंचा
रावाप्तिः ग्रामाद्यवाप्तिवन्न संयोगादिरूपा, अनभ्युपगमात्, अननुभवा
किन्तु स्वमात्राधीनोच्चारणानुकूलस्मृत्यनुकूलस्मृत्यनुभवसाधारणस्वाध्य
क्षरावधारणरूपैव, अन्यानिरुक्तेः; नच तादृशोच्चारणानुकूलज्ञानजन
स्वाध्यायगोचरदृढतरसंस्कारप्रचयरूपत्वेन सा निर्वक्तुं शक्येति वाच्यम्
तादृशसंस्कारप्रचयस्य तादृशाक्षरावधारणं विनानुत्पत्तेः, ज्ञानमनुत्पा
च्चारणं प्रति हेतुत्वानिर्वाहाच्च, स्वरूपे फले चापेक्षणीयतया स
ध्यायावधारणस्यैव तत्प्राप्तिरूपत्वौचित्यात् । नच तदवधारणस्याप्य
भवरूपस्य व्यवहिततया संस्कारमनुत्पाद्योच्चारणहेतुत्वानिर्वाहेण स्म

भूततदवधारणेपि तत्स्वरूपे स्मरणे तत्फले उच्चारणे च तादृश
रप्रचयस्यावश्यापेक्षणीयतया तादृशस्वाध्यायावधारणमेव तदवासिः
तादृशसंस्कारप्रचय इत्यत्र किं विनिगमकमिति वाच्यम्, यत्र स्व
वधारणात्प्रागेव स्वस्वव्यासेतरस्वोच्चारणानुकूलयावत्समवधानं तत्र त
वधारणस्य संस्कारोत्पत्तिक्षण एव उच्चारणहेतुत्वसम्भवेन सर्वत्रै
तस्य संस्कारनिरपेक्षताया एव विनिगमकत्वात्। तथाच ताद
ध्यायाक्षरावधारणात्मिकायास्तदवाप्तेर्न तत्त्वेन भावनाभाव्यत्वं शब
पगमम्, तस्य लिखितपाठादिजन्यतादृशावधारणसाधारणतया ऽति
त्वेनाध्ययनभावनाभाव्यत्वानवच्छेदकत्वात्, तादृशावधारणरू
अध्ययननियमासम्भवाच्च; किन्त्वलौकिकश्रेयस्साधनस्वाध्यायाक्षराव
त्वेन, तत्र स्वाध्यायाक्षरांशस्य गौरवग्रस्तत्वेनालौकिकश्रेयस्साधः
रणत्वमेव लाघवात्सामान्यरूपत्वाच्च तदवच्छेदकं वाच्यम्,
तदर्थावधारणेप्यविशिष्टमिति कथमध्ययनविधेरर्थज्ञानपर्यन्तत्वसि
ननु उक्तावधारणत्वस्य स्मृतिपुराणादिसाध्यार्थावधारणादिसाधा
तिप्रसक्तत्वेनाध्ययनभावनाभाव्यतावच्छेदकत्वनिर्वाहाय तादृशाव
स्वाध्यायाक्षरांशप्रवेश आवश्यकः, एवञ्च नार्थावधारणसंग्रह
चेन्न;— विध्यन्तरापेक्षितस्वाध्यायसाध्यावधारणत्वस्यापूर्वीयस्वाध्या
वधारणत्वस्यवानुगताननतिप्रसक्तस्य पराभिमतस्वमात्राधीनोच्चारण
स्वाध्यायगोचरदृढतरसंस्कारप्रचयरूपावाप्तित्वापेक्षया वा स्वमा
च्चारणानुकूलस्मृत्यनुभवसाधारणस्वाध्यायाक्षरावधारणत्वापेक्षया व
भूतस्यैवाध्ययनभावनाभाव्यतावच्छेदकत्वेन विवक्षितत्वादिति।

अत्रोच्यते। स्वारसिकवाक्यार्थस्याभिधानादेवायन्न वाच
तव्यप्रत्ययमनादृत्यार्थकर्मत्वांगीकारेपि नैवं वाक्यार्थस्सम्भवति,
ध्ययनेन स्वाध्यायं भावयेदित्यर्थः स्यात्, नहि भावनायां भाव

च्छेदकतयान्वयो युक्तः, स्वाध्यायस्याध्ययनभावनाभाव्यत्वेनान्वये तत्साध्यताया आप्यत्वविशेषनिबन्धनत्वात्तादृशस्वाध्यायसाध्यताया अध्य वच्छेदकत्वं विना अनुपपत्तेः स्वाध्यायाध्ययनेन स्वाध्यायं भावये पर्यवस्यति । अस्तु वा स्वरूपेण साध्यस्यैव भाव्यत्वम्, अ स्वाध्यायावाप्तिरेव भाव्या स्यात्, समानपदोपात्तस्वाध्यायनिष्ठत्व अध्ययनभावनां प्रति अर्थज्ञानापेक्षया सन्निहितत्वात्, दृष्टादिव्या त्वात्, तत्र फलतया क्लृप्तत्वाच्च; एवंच स्वाध्यायाध्ययनेन स्वाध भावयेदिति वाक्यार्थः । नचाक्षरावाप्तेरसमीहितत्वम्, अर्थज्ञानेपि त्वात्; सामान्यावच्छेदकं वदद्भिस्तैरेव स्वाध्यायावाप्तेस्समीहितत्वाभि नाच्च । अध्ययनाकरणे प्रत्यवायश्रवणात्प्रत्यवायपरिहारो वा भाव्यस्स्य 'स्थाणुरय' मित्यादिवाक्यञ्चाध्ययनविधेर्नार्थज्ञानाधिकारिकत्वमवगम शक्नोति, परन्तु फलपर्यवसाय्यध्ययननिन्दति फलौ प्ररो चयितुम् ।

यदुक्तम्—स्वाध्यायावाप्तिस्स्वाध्यायावधारणम्, स्वाध्यायावधारण नाध्ययनजन्यतावच्छेदकमिति; अस्त्वेवम्, अनवच्छेदकत्वे दो वात्, अवच्छेदकतापुरस्कारेणैव साध्यतावगमे सति विधिवैयर्थ्य हारायाध्ययनजन्यावाप्तेरेव नियमादृष्टानुविद्धायाः क्रतूपयोग्यर्थज्ञान कल्पनात् । अस्तुवा ऽलौकिकश्रेयस्साधनस्वाध्यायावधारणमध्ययनेन येदिति कार्यतावच्छेदकान्तर्भावेन वाक्यार्थः ।

यच्चोक्तम् - विध्यन्तरापेक्षितस्वाध्यायसाध्यावधारणत्वमपूर्वी ध्यायसाध्यावधारणत्वं वा लब्धिरिति; तन्न; स्वाध्यायसाध्यत्वं स्वाध्यायेन जन्यता, अर्थज्ञाने तदसिद्धेः; तस्य पदज्ञानजन्य किन्तु प्रयोज्यत्वमात्रम्, तथाच प्रायश्चित्तविध्यपेक्षितं यल्लिपिमूलो धीनं स्वाध्यायावधारणं तस्याप्यध्ययनसाध्यत्वप्रसङ्गः, स्व

शतानां सहस्राणां वा सम्भवात्तेषां नियमाद्दृष्टानुवेधः कल्पनीय इति गौरवम्, एवंच स्वतात्पर्यमावेदयन्तीं श्रुतिमनादृत्य स्वा नर्थबोधनाय श्रुतिपीडने तच्छ्रुतिद्रोहादनर्थपरम्परातश्च न कदा मुक्तिः। तस्माद्यथाश्रुति विधिकर्मत्वबोधनमेवेष्टव्यम्।

नन्वेकस्य शब्दस्य एकस्मिन्प्रयोगे वृत्तिद्वयेन युगपद्बो मक्षादिपक्षेषु न दृष्टमिति चेत्? किमतः, पुष्पवच्छब्दे तद्दर्श यथादर्शनन्तत्र शक्तिद्वयं युगपद्बोधकमिति यदि तदेहापि तद्व युगपद्बोधनमेष्टव्यम्। इयांस्तु विशेषः, पुष्पवत्पदे दिवाकरनि शक्त्योः परस्पराव्यभिचारो दर्शनादेव, इह तु भावकर्मान्यतर व्यभिचारेण विधिशक्तेर्बोधकत्वदर्शनेपि क्वचित्तच्छक्त्योर्विधिव्यभि बोधकत्वं दर्शनादेवेष्टव्यम्। "विष्णुरुपांशु यष्टव्यः" " मन्तव्य" इत्यादौ यदि तत्रार्हार्थस्तव्यः, तर्हि तच्छक्तेर्व्यभिचा शक्तिव्यभिचार एव दर्शनात् स्वभाव इति न काचिदनुपपत्तिः रध्ययनान्वयित्वात्कर्मत्वस्यान्यान्वयित्वात् कथं व्यधिकरणयो धानमिति कथन्ता तु निर्निबन्धना, दृश्यते हि यजेतेति य विधेः कर्त्रन्वयिसङ्ख्यायाश्चैकेनाभिधानम्।

यच्चोक्तं साङ्गाध्ययनसम्पादितमेवार्थज्ञानं फलवदुत्तरक स्यासिद्धौ तादृशार्थज्ञानरूपविद्याविरहाच्च शूद्राणां क्रत्वधिकार द्व्यधिकरणविरोधापातः, शूद्राधिकारस्यापि तथासति दुर्वारत्व ननु "न शूद्राय मतिन्दद्यात्" "न चास्योपदिशेद्धर्मन्न च मादिशेत्" "पद्युवा एतत् श्मशानं यच्छूद्रः, तस्मा नाध्येतव्यम्"। "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां परणं धारणे शरीरभेदः उदाहरणे जिह्वाच्छेद" इत्यादि

रेवाभावाञ्च विरोध इति चेन्न; — अध्ययनविधेरर्थज्ञानपर्यन्तनियमवि-
ावपक्षे शूद्रानुष्ठितवैदिककर्मणान्निष्फलत्वे मानाभावेन निषिद्धाग-
ामनादौ रागिण इव निषिद्धाध्ययनविचारादौ रागिणश्शूद्रस्य प्रवृत्ति
विन तदनुष्ठानप्रसक्तेः तदनुष्ठितयागादेरपि तस्मिन् स्वर्गादिफल
ादनप्रसङ्गात्; निषेधस्यानिष्टफलत्वप्रतिपादनपरत्वेपि तदनुष्ठितनिष्ठित
विफलत्वप्रतिपादनपरत्वासिद्धेः; यद्यपि "तस्माच्छूद्रो यज्ञेनवक्लृप्त"
शूद्रस्यानधिकारः श्रूयते, तथापि "यज्ञेनवक्लृप्त" इति वैदिक-
विशेष एव स श्रूयते, नतु वैदिककर्ममात्रे; किंच तथाविध-
ास्मृत्योश्चोपनयनाधानादिकारणान्तराभावमादायापि प्रवृत्तत्वसम्भवेन
ास्त्रस्य तन्निषेधकत्वायोगः, "गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैका
षु राजन्यं गर्भद्वादशेषु वैश्यम्," "वसन्ते ब्राह्मणोऽग्नीनाद-
ा ग्रीष्मे राजन्यश्शरदि वैश्य" इत्यादावुपनयनाग्न्याधानादौ राज-
राजत्वस्यैव ब्राह्मणत्वादीनां कारणत्वेनोपादानेन शूद्रे च तदभावेन
कारणकोपनयनादीनामभावोन्नयनात्तन्मूलत्वाच्च निषेधस्मृतेः; तथाचा
ावाप्तिपर्यन्तत्वपक्षे उपनयनादेराधानादेश्च त्रैवर्णिकाध्ययनतदनुष्ठेय-
ंस्यैव कारणत्वेनान्यथासिद्धतया शूद्राधिकारनिषेधस्मृतिर्न तदधिकार
धपर्यवसायिनी; नन्वध्ययनविधेरर्थावबोधपर्यन्तत्वनियमविधित्वपक्षेपि
प्रमुक्तातिप्रसङ्गो न स्यादितिचेत्? उच्यते, उक्तरीत्या अध्ययनसम्पा-
तमेवार्थज्ञानं फलवदुत्तरकर्माङ्गज्ञानन्यादृशामित्यस्मिन्पक्षे नियमशरीर
वसानेन शूद्रस्य चोपनयनादिसंस्कारविरहादुपनयनाङ्गकनियमाध्ययन
म्पादितस्वाध्यायार्थज्ञानाभावेन तादृशस्यैव स्वाध्यायार्थज्ञानस्य फल
दुत्तरकर्माङ्गत्वेनान्यादृशस्य तस्यातथात्वेनोक्तातिप्रसङ्गानवकाश इति;
स्मादध्ययनविधिरर्थज्ञानपर्यन्त इति स्थिते विधिमात्रस्यानुष्ठेयभावना-
त्वादंशत्रयवत्या एव भावनाया अनुष्ठेयत्वादत्रेतिकर्तव्यतारूपांशस्य

वेन योग्यता। मीमांसापरपर्यायो विचार एवेतिकर्तव्यतात्वमहं
एवेतिकर्तव्यतात्वेनाध्ययनविधिना शेषरूपेणाक्षिप्यत इति तस्य
मकामेनापि स्वीकार्यमिति ।

अत्रोच्यते । यदुक्तमध्ययनसम्पादितमेवार्थज्ञानं फलवदु
न्नान्यादृशमिति स्वपक्षे नियमपर्यवसानमिति; तत्स्वपदमनुपदमे
विस्मृत्योक्तम् , स्वाध्यायसाध्यावधारणत्वं क्रत्वन्तरोपयोगित
कार्यतावच्छेदकमिति ह्युपन्यस्तम् , तत् कथं क्रत्वधिकारे
सिद्धिः ? क्रतूपयोग्यवधारणत्वं कार्यतावच्छेदकमित्युक्तौ क्र
शाखातदर्थावधारणयोरपि स्वाध्यायाध्ययनसाध्यत्वप्रसङ्गः
प्रमाणानुरोधीहि प्रमेयनिश्चयः, नतु स्वाभीष्टनिर्णयानुरोधि
ततश्चास्य स्वाध्यायविधेरपशूद्रत्वे प्रामाण्याभावे सिद्धे यदि
णान्तरं न स्यात् तस्य तदा सशूद्रत्वमेव स्यात् , अ
प्रामाण्यं स्यात् ; नन्वत्र क्रतूपयोग्यवधारणत्वन्नावच्छेदकम्
कार्यतावच्छेदकापुरस्कारेणैवार्थज्ञानार्थतया अध्ययनन्नियम्यत
एवमपि नापशूद्राधिकारः, स्वाध्यायाध्ययनस्य तदर्थज्ञ
नियाम्यत्वात् ; वस्तुतस्तु अपशूद्रत्वे आचार्याननुग्रह
आचार्याः खलु शूद्राणामनधिकारप्रयुक्तो यज्ञदानादिनिषे
प्रायेण प्रथमं " नशूद्रायेत्यनुजगृहुः , निरुक्ताशयस्पष्टीक
"पद्युहवे" त्याद्यनुजगृहुः। अत्र शूद्रस्य हेयत्ववचनमनाधिकारि
हृदयम्। अनधिकारप्रयुक्त एव दण्डविधिरित्यभिप्रायेण अनन्त
त्यादिकमनुजगृहुः। यदि स्वर्गसाधनमेव शूद्रानुष्ठितोपि याग
पुण्यकृत्वान्न तन्निमित्तदण्डविधिर्युज्यते, अतोनधिकार

वस्तुतस्तु नात्रापशूद्रनयविरोधशङ्कावकाशः ; तथाहि - इत्थं हि
धिकरणशरीरम् , किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः ,
पशूद्राणां त्रयाणामिति । तदर्थमिदं विचार्यते - किं कामश्रुतिप्रयुक्तं
ार्जनम् , उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति ।
चात्र पूर्वपक्षः, एकस्तावत् स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानौप-
तया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते, क्रतवश्चा
षेण चातुर्वर्ण्यमधिकुर्वाणाः चतुर्णामध्ययनं प्रयुंजते, तत्र त्रयाणां
न्ते ब्राह्मणमुपनयी' तेत्यादिभिरुपनयनसंस्कारोध्ययनांगत्वेन विहितः,
र्द्रस्तु विध्यभावादनुपनीत एव अधीत्य विद्यां लब्ध्वाधिकरोतीति ;
यस्तु न क्रत्वंगमध्ययनम् , श्रुत्याद्यभावात् , अक्षरग्रहणादिदृष्ट
परम्परया वाक्यार्थज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्ते
वाध्ययनं स्वविधिना विनियुज्यते, न तद्द्वारेण क्रतौ, तेनाधानादी
यङ्गं ज्ञानांगमध्ययनन्न क्रत्वंगम् , अतस्तेन विनापि क्रतूनामवैगुण्या
ीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नाधिकरोति । क्रतवोह्यविशे
चतुरोप्यधिकुर्वन्तस्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनन्नप्रयुञ्जते,
य त्वन्यतस्सिद्धविद्यात्वाभावात्तदार्जनमपि प्रयुञ्जते, अतो यद्यपि
यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्
र्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान् ब्राह्मणा-
कर्तृत्वेन स्वीकुर्वन् तेषामेवाध्ययनं विधत्ते, न शूद्रस्य, तथाप्य
नैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाधिक्रियेतेति ।

सिद्धान्तस्तु- क्रतुविधयोह्यन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति , यदा
ाध्यायविधिविहिताध्ययनोपात्तविद्यान्द्विजन्मनो लभन्ते तदा तैरेव
त्मानोनुपपत्तिक्षयान्न चतुर्थस्य विद्यामाक्षिपन्ति, मन्त्रवत्सु चानधीत
कुतोधिकारः, कुतस्तराञ्चानग्नेरग्निसाध्येषु ? तस्मात्त्रयाणा-

यदा चैवं विहितोपायसिद्धज्ञानवत एव विषयोधिकुर्वन्ति तद
ज्ज्ञानमकर्मकालोपात्तमप्यभिवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वा
विद्यामार्जयतोपि न सिद्धयत्यधिकारः ।

अत्राधिकारनिरविशेषपर्यवसानसापेक्षाः क्रतुविधयः स्व
विद्याप्रयुक्तिलाघवमपेक्षमाणाश्शूद्रस्याप्यधिकारे तत्र विद्याप्रयुक्ति
भियाताननधिकुर्वन्तः परशास्त्राधीनविद्याप्रयुक्तावपि स्वशास्त्राधीन
[ विद्यया ] अन्यथासिद्धत्वेन तत्र प्रयुक्त्यपेक्षाविरहात् त्रैवर्णिकेषु
लाघवं पश्यन्तः तानेवाधिकुर्वन्तीति न्यायनिष्कर्षः । तथाच स
त्रैवर्णिको यजेतेति क्रतुविधितात्पर्यं पर्यवसितम् । एवञ्च
शूद्रत्वासिद्धिः ।

नन्वर्थज्ञानोद्देशेन विधानाभावे कथं क्रतुविधिना विद्यायाः प्रयुक्ति
इति चेत्? तथासति वा कथं प्रयुक्त्यभावः? नहि स्वाध्यायाध्ययन
प्रयुक्तिसम्भवः, फलस्याप्रयोज्यत्वात ; तथाचाध्ययनविधिप्रयुक्ताध्य
तस्वाध्यायस्वभावलभ्या विद्या न केनापि प्रयोज्या, प्रवृत्तिं विनैव
द्धेरिति हि वाच्यम् , तथाच गुणकर्मत्वपक्षे अर्थकर्मत्वपक्षे न
नमेव प्रयुक्तिलाघवमिति सिद्धं पक्षद्वये प्यपशूद्रत्वमिति ।
नार्थज्ञानोद्देशेन स्वाध्यायावच्छिन्नाध्ययनविधिः, किन्तु तव्यप्र
साराात् स्वाध्यायोद्देशेनैवाध्ययनविधिः, स्वाध्यायस्य कर्मतया
त्वेन भाव्यत्वोपपत्तेरिति । अपिचानध्ययने प्रत्यवायश्रवणे
विधेर्जीवनाधिकारत्वाच्छान्ताधिकाराकाङ्क्षस्य नार्थज्ञानाधिकारव
काशः । अर्थज्ञानोद्देशेन विधावपि नाध्ययनविधिर्विचारं प्र
साध्यं हि साधनेन विनानुपपद्यमानं स्वगोचराकाङ्क्षामुखेन
न्यथासिद्धे चिकीर्षामुत्पाद्य तत्प्रयुङ्क्ते , यथा – स्वर्गः
परमापूर्वं यागम् , इत्यादिलोकसिद्ध एव चायमर्थः । ततश्चाध

काङ्क्षिणोऽर्थज्ञानजपमुखेनादृष्टोपयोग इष्यते । अस्यच नियमवि
पाठादिकं व्यावर्त्यते । एवञ्चानधीतस्वाध्यायजन्यार्थज्ञानादि
योगीति सिद्ध्यति ।

नन्वेवं सति विचारनिर्वृत्तेः प्राक् स्वशाखोक्तक
स्यात्, व्यर्थत्वात्, इति चेन्न ;— शिष्टाः खलु बाल
नैमित्तिकान्यनुष्ठापयन्ति, अतो नित्यनैमित्तिकेषु स्वाध्या
धीतस्वाध्यायजन्यार्थज्ञानापेक्षेति वा अधीतस्वाध्यायजन्यार्थ
कर्मणामनुकल्पत्वं वा कल्प्यताम् । वस्तुतस्तु नाध्यय
ध्ययनजन्यस्यैव विहितकर्मानुष्ठानोपयोगित्वात् तन्मुखेन
साथि, अपितु ब्रह्मयज्ञजपादिमुखेनैव, भाव्युपयोगमाकाङ्क्षमा
स्वाध्यायस्य होमादिव्यापकेन तेनैवाकाङ्क्षाशान्तेः। अतो ध
दुपपन्नत्वाच्च रागात्प्रवृत्तिरित्येव राद्धान्तवर्णनमुचितम् ।

ननु धर्मजिज्ञासा न कर्तव्येति पूर्वपक्षिणोक्ते
गृहीत्वा तेन धर्मिणन्निर्दिश्य कर्तव्यत्वप्रतिज्ञायां कथं
हेतुसूचनसम्भवः ? उच्यते, पूर्वपक्षिणा वेदार्थविचारो न
च्यते, कृत्स्नस्वाध्यायस्याविवक्षितार्थत्ववादिनस्तस्य वि
प्रयोजनाभावात् ; सिद्धान्तिना तु राद्धान्तयुक्तिसूच
कृतमिति । लक्षणस्य कर्मोपासनसाधारण्यं स्पष्टम् । अथ
विचार्यत्वाद्धर्मपदं वेदार्थमात्रोपलक्षणम्, धर्मपदेनोपल
सिद्धान्तयुक्तिसूचनं प्रयोजनम्, एवं कर्मब्रह्मोभयसङ्ग्र
लक्षणमपि समानम्, ब्रह्मणोपि चोदनाप्रमाणकत्वात्
विधिवाक्यं यागादिरूपाराधनतात्पर्यकन्तत्फलप्रदानित्या
अर्वाचीनदेवतानां प्रळयकालास्थायिनीनां सर्गाद्यफलप्र

भगवत्येव क्वचिद्देवतान्तरकञ्चुकिते क्वचिच्च तदकञ्चुकिते चा
तात्पर्यम् । अत एव स्मरन्ति — "ये यजन्ति पितॄन् देवान्
णान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति
"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभि
त्त्वेनातश्च्यवन्तिते" ॥ "यो यो यां यां तनुं भक्तः श्रद्धय
मिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्" ॥
श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव वि
तान् ॥" इति । अत्रच ब्रह्ममीमांसाया इव कर्ममीमांसाया
रण्येन कर्तव्यत्वविषयपूर्वपक्षानुत्थानात् अथातो धर्मजिज्ञासेति
प्रतिज्ञालक्षणतन्निरूपणानन्तरं कर्मविचारासाधारणप्रतिज्ञाया
भिति मन्तव्यम् । तस्मादथातोधर्मजिज्ञासेति शास्त्रादावेव ब्र
साया अपि प्रतिज्ञातत्वादैकग्रन्थ्यसिद्धिः । ऐकग्रन्थ्ये सत्यस्य
पूर्वोपदेशतासिद्धिश्च भवति । एतच्छास्त्रप्रतिपाद्यभगवदुपास
"विविदिषन्ति यज्ञेन दानेन तपसानाशकेने" ति कर्माणि विध
अतस्तन्निरूपणमप्यत्रैव कार्यम् । असिना जिघांसति अश्वेन
तीत्यादाविवात्र यज्ञादीनां प्रकृत्यर्थवेदनसाधनतयैवान्वयः, नतु
साधनतया, "क्रियावानेष ब्रह्मविदां वरिष्ठः" । "कर्मणैव हि सं
स्थिता जनकादयः" । "पुण्यं ज्ञानं वर्धयति क्रियमाणं पुनः
"कषायपक्तिः कर्माणि ज्ञानन्तु परमागतिः' । 'कषाये
पक्वे ततो ज्ञानं प्रवर्तते" । इत्यादिश्रुतिस्मृत्यनुसारात् । वे
त्यर्थप्राधान्येनैव सनन्तप्रयोगो भूयान् - "तद्विजिज्ञासस्व"
सितव्यः' 'विजिज्ञासितव्यः' इत्यादिः । किञ्च विविदि
सन्निधौ 'मनसैवानुद्रष्टव्य' मिति विशदवेदनं विहितम् ।
विदित्वा मुनिर्भवतीति स्तुतम् । अतो विधिस्तुतिविषयस्यै
तस्य निष्यन्नाकांक्षा, नतु तदुभयरहिताया विविदिषाया

ग्रन्थद्वयस्य परस्पराकांक्षितार्थप्रतिपादकता न स्यात्तदानीं कथ
ग्रन्थ्यमिति शंक्येतापि । उपजीवनप्रकारश्च दर्शितः । इतोन्ये प्र
भेदा अपि भूयांसः स्पष्टाश्च ।

ननु जैमिनीयग्रन्थे ईश्वरस्य निराकरणात्तद्विरोधाद्वेदाचार्यग्रन्
कथमनयोरेकग्रन्थ्यम् ? उच्यते, किं जैमिनेर्ब्रह्म नाभिमतमिति
जैमिनिर्विप्रलम्भक इति वा भ्रान्तस्येयं शङ्का, उत तस्मिन् तद्ब्र
विधुरस्य ? आद्ये तस्य ब्रह्मविदग्रेसरतया भगवतैव दर्शितत्वा
त्तस्मिन् भ्रमविप्रलम्भौ भवत इत्युत्तरम् । द्वितीयेपि किमैकग्र
माक्षिप्यते ; उत विरुद्धतया भगवद्द्रोहिभिर्व्याख्यातानां सूत्राण
चार्यजैमिन्यभिमतोर्थः क इति जिज्ञास्यते ? आद्यस्तु न सम्भ
ब्रह्मानवबोधविप्रलम्भयोर्निरसनेन विरुद्धसूत्रकरणासम्भवात् । अपिच
परोक्तरीत्या देवताभावनिमित्त एव तन्नयायः, कथन्तर्हि अनु
ब्रह्माङ्गीकारयोरविरोधः । अतो ब्रह्मसिद्ध्यविरोध्येव तत्र न्यायोभिप्रेत
सर्वैरपि ब्रह्मवादिभिरास्थेयम् । जिज्ञासा तु वेदान्तविजये निरूपितास्माभि

ननु कथं तर्हि वेदाचार्येण केषाञ्चिदर्थानां जैमिनिमतत्वे
न्यासस्तन्निरासश्च क्रियते ? श्रवणकाले जैमिनिना शङ्कितानामर्थानां त
द्विप्रचिख्यापयिषया तथोपन्यस्य निरास इति ब्रूमः ।

ननु कर्मब्रह्ममीमांसयोरैकशास्त्र्यनिरूपणे किं प्रयोजनमिति चे
तन्निरसने वा तव किं प्रयोजनमध्यवसितमायुष्मतेत्युत्तरम् । वस्तु
अथशब्दस्यारम्भार्थत्वासम्भवः, तत्स्वारस्यलाभः, उत्तरत्र उक्तमि
स्वारस्यम्, एतन्निरूप्यार्थापेक्षितनिरूप्यार्थान्तराणामपीहैव ग्रन्थे नि
णात् पूर्णोपदेशत्वम्, अविच्छिन्नसम्प्रदायाभियुक्तोपदेशाद्ग्रहश्चेति
प्रयोजनानीत्युक्तप्रायमेव । अत एव सुस्थं पूर्वनिरूपितकर्माधिग

ननु केन विचारावगमः ? जिज्ञासापदेनेति ब्रूमः । अत्र केचित
ज्ञासाशब्दो न विचारपरः, लक्षणाप्रसङ्गात्; किन्तु ज्ञानेच्छापरः
तो भवतीत्येवाध्याहार इत्याहुः ; तन्न, साङ्गवेदाध्ययनादेवापातप्रतीत्य
र्वोत्तरभागसाधारण्येन जिज्ञासोदयेन तस्याः कर्मविचारानन्तर्यस्य साधन
तुष्टयानन्तर्यस्य चासम्भवात्; अतो लक्षणापि न दोषाय । वस्तुतस्तु
लक्षणा, सविशेषणे हीति न्यायेन ज्ञान एव कर्तव्यतान्वयात्
न्तु विशेषणान्वयो ऽस्वरस इत्येतावत्, तच्च स्वरसार्थान्तराभाव
ङ्गीकार्यम् । नचास्वारस्यमपि, जिज्ञासानिदिध्यासनादिपदानां प्रवृ
र्थप्राधान्येनैव बहुशः प्रयोगात् । जिज्ञास्यलक्षणपरजन्मादिसूत्रविषय
क्ये जिज्ञास्यलक्षणसमर्पके तद्विजिज्ञासस्वेति ज्ञानप्राधान्यदर्शनादिहापि
ानप्राधान्यमेव युक्तम् । कर्तव्य इत्यत्राहार्थस्तव्यः, भवतिक्रियाध्याहा
ादिनापि विचारकर्तव्यतासमर्थन एव सूत्रतात्पर्यमिष्यते, तस्यैव
ाब्दत्वे सम्भवति तत्परित्यागो न न्याय्य इति ।

अत्र नीलकण्ठमतानुसारिण आहुः — कर्मविचारानन्तर्य
वाथशब्दार्थः, कर्मविचारस्य तदनुष्ठानचित्तशुद्धिद्वारा कर्मफ
ित्यत्वानित्यत्वविचारप्रवर्तनेन कर्मफलानित्यत्वविवेकवैराग्य शमदमा
मुक्षाजिज्ञासाहेतुतया ब्रह्मविचारोपयुक्तत्वात् पूर्ववृत्तत्वम्, विशुद्ध
चेत्तस्य च "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्
चेतो लोकः क्षीयते" — "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह क
यम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इत्यादिश्रुतिभि
र्मफलानित्यत्वव्याप्तिज्ञापनादिलक्षणोपपत्त्यादितात्पर्योपबृंहिताभिस्सर्गप्रळय
र्थवादसहिताभिस्स्वर्गाद्यनित्यत्वसिद्धेर्नित्यत्वावबोधिमन्त्रार्थवादानां प्रशंस
ात्रपरत्वसिद्धेः कर्मफलानित्यत्वनिश्चय उपपद्यते, अतो वैराग्यादि

नापेक्षा ? किञ्च कर्मतत्फलविचारात् कर्मफलानित्यत्ववि शुद्धिसापेक्षत्वप्रयोजकं वैलक्षण्यं किमपि न पश्याम कर्मप्रतिपादकवाक्यार्थज्ञानात् कर्मफलानित्यत्वप्रतिपादकवाक्या देहात्मभ्रमादिदार्ढ्येन तद्विवेकादिज्ञानस्येव कर्मफलस्यानित मेन पश्यतो यागादिफलनित्यत्वे विचिकित्सावतस्तदनित्यत्वग्रहे पेक्षा, अनुष्ठितकर्मणामपि तद्यथेहेत्यादिवाक्ये आवृत्तिविधा कारभावेन नहिनिन्दान्यायेन ब्रह्मज्ञानार्थवादताप्रतीतिस्साम चातुर्मास्यफलस्वर्गान्यविषयताप्रतीतिश्च न निवारयितुं शक्य स्तन्निवारकत्वे न्यायापेक्षापि न स्यात् । न्यायस्फुरण ए रुपयोग इति चेत् ? कर्मविचारेपि तदपेक्षाप्रसङ्गात् । तदपेक्षत्वे कर्मविचार एव तदपेक्षा स्यात् , तन्न्याया त्वात् । फलानित्यत्वव्याप्तिस्तु लोके सर्वैरपि स्पष्टमेवावगम्‍ वशादेवहि नित्यत्वशङ्का । साच वेदान्तन्यायेषु वाक्यनि शङ्कावन्नाशुद्धिसापेक्षा, तत्रापि अशुद्ध्यपेक्षाङ्गीकारे ब्रह्मवि नुष्ठानापेक्षा भज्येत ।

यत्तु तेनैवोक्तम् , चित्तशुद्धिरहिताः प्रथमं धर्मविच सादक्षय्यादिवाक्यमपि रात्रिसत्रादिन्यायैः फलपरं मन्यमा न्यायश्च तत्राव्युत्पादितं परामृष्टुमक्षमाः स्वयमेव ब्रह्मजि न प्रवर्तन्ते, येतु प्राग्जन्मानुष्ठितैरेव तथाभूतैः कर्मभिः शुद्धयस्त एवैतत्सूत्रपरिज्ञाने प्रवर्तन्ते, अनन्तरमेतत्सूत्रपाठ नित्यविवेकं लब्ध्वा तन्मूलमैहिकामुष्मिकफलेभ्यो वैराग्यं साधनं मुमुक्षुत्वञ्च प्राप्य सहजसिद्धायाश्शिवभक्तेरतिश जन्मादिसूत्रमारभ्य प्रवर्तिष्यमाणब्रह्मविचारे प्रवर्तन्त इति ।

: प्रथमसूत्रप्रवृत्तिहेतुत्वे न किञ्चिदपि श्रुत्यादिकं प्रमाणं पश्यामः।
शुद्ध्यभावे चित्तस्य विषयाकर्षात् प्रत्यग्विचारे न प्रवर्तत इति
, तदा चित्तशुद्धिश्शास्त्रप्रवृत्तावेव हेतुः, न प्रथमसूत्रे, जन्मादिसूत्र
म्य हि शास्त्रं परेषां मते । एकसूत्रपाठेन नित्यानित्यवस्तुविवेक
न्यसङ्गतम् , न तावदिदं सूत्रं उपदेशरूपेण तदुत्पादकम् ,
ानिबन्धनत्वात् , तत्समर्थपदादर्शनाच्च ; नापि न्यायप्रदर्शनमुखेन,
ये संशयपूर्वपक्षराद्धान्तोपन्यासे प्रधानतया तदर्थतया वास्यार्थस्य
ायित्वानुक्तेः । किञ्चास्मिन् सूत्रे यदि स न्यायो व्युत्पाद्यस्तदा एवं
ान्निवेशोसङ्गतः, कर्मविचारानन्तर्यब्रह्मजिज्ञासयोरवक्तव्यत्वात् । नित्या
ान्यायप्रतिपादकसन्दर्भेण हि भवितव्यम् । किंच विषयप्रयोजन
न्धाधिकारिरूपानुबन्धिचतुष्टयप्रदर्शनपरमिदं सूत्रमिति हि सर्वैरिष्यते,
तदुत्पादकमिति । धर्मविचारानन्तरं तदाराधनरूपधर्मानुष्ठानशुद्ध
स्य विवेकादिसम्पत्त्या ब्रह्मज्ञानेच्छा भवतीत्येतावान् सूत्रवाक्यस्य
ार्थ इति ह्युक्तम् । तत्रान्यतस्सिद्धचित्तशुद्धेः हेतुतयानुवादवत
ानित्यविवेकस्याप्यन्यतस्सिद्धस्यैवेहानुवादो युक्तः । यदि शुद्धचित्तस्यै
त्रप्रवृत्तस्यानेन सूत्रेण नित्यानित्यविवेकादिसम्पत्त्या ब्रह्मज्ञानेच्छा
ीति सूत्रवाक्यार्थः, तदा नित्यानित्यविवेकार्थन्यायो विवक्षित
वक्तुं शक्येतापि, नचैवं वाक्यार्थः कस्मैचिद्रोचते । किंच "तद्य-
कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते "
वाक्ये व्याप्तिप्रदर्शनेनोपपत्तिरूपतात्पर्यलिङ्गावगमात् ब्रह्मज्ञानानन्त
ःफलत्वे तात्पर्यनिर्णयान्नित्यानित्यविवेको भवति , अयंच न्यायो-
शब्देनोच्यते, अतोऽनेनैव सूत्रेण नित्यानित्यविवेकसिद्धिरिति ह्युच्यते,
ुपपन्नम् , स्पष्टतात्पर्यस्य वाक्यस्य सत्वशुद्धिविरहात् ज्ञानाला-
कर्मानुष्ठाने तत्सिद्धौ सुखेनैव ज्ञानलाभात् तल्लब्धये कुतस्सूत्

वबोधो न सिद्ध्यतीत्युच्यते, कथं तर्हि अथ इत्येतावन्मात्रेण तत्सिद्धि तथासति अत इदमेवमित्येतावन्मात्रेणैव सर्वार्थसिद्धौ विंशतिलक्ष सूत्राणामपि वैयर्थ्यमेव ।

सिद्धान्तस्तु नैतद्दोषगन्धवार्तामपि सहते, ' अथातश्शेषलक्षण अ थातःक्रत्वर्थपुरुषार्थयोर्जिज्ञासे ' त्यादावथशब्देन पूर्वग्रन्थसिद्धार्थ परामर्शात्तद्धेतुभाव एवातश्शब्दस्य तात्पर्येण तद्धेतुभावोपपादकेपि श्शब्दस्य तात्पर्यसम्भवात् । परपक्षेप्येवं कर्मविचारस्य हेतुभाव पादके तात्पर्याङ्गीकारे कर्मविचारानन्तरं ततएव हेतोः कर्मानुष्ठा विशुद्धचित्तस्य न्यायप्रतिसन्धानेन नित्यानित्यविवेकात् ब्रह्मजिज्ञ भवतीत्येतावल्लभ्येत, नत्वत्र तन्न्यायव्युत्पादनम् ।

केचित्तु — साधनचतुष्टयानन्तर्यमथशब्दार्थमाहुः; तत्र विवरण तानुसारिणस्त्वाहुः — मुमुक्षाधिकारिविशेषणम्, तत्र हेतुश्शमदमा तत्र इहामुत्रार्थफलभोगविरागः, तत्र नित्यानित्यवस्तुविवेक इति; त अधीतवेदान्तार्थस्य विचारात्प्रागनिर्णयेन मुमुक्षाया असम्भवात् ।

अत्राह नवीनः — न तावन्नित्यानित्यवस्तुविवेकासम्भवः, आ प्यादाब्रह्मलोकं कर्म कार्यम्, कार्यञ्च सर्वमनित्यं घटादिवदिति न्या गृहीतया " तद्यथेह कर्मचितो लोकः क्षीयते " इति स्पष्टश्रु विचारात् प्रागेव कर्मफलस्यानित्यत्वावधारणसम्भवात् । आत्माच नि इत्यवगम्यते, अन्यथा कस्यापि मते मोक्षाय प्रवृत्त्यसम्भवात्; त नन्दरूपत्वमपि परमप्रेमास्पदत्वात् " आनन्दाद्ध्येव खल्विमानीत्य दिवाक्याच्च निश्चीयते । नचैवं विचारानारम्भप्रसङ्गः, अन्यस्या निश्चेतुं शक्यत्वादिति वाच्यम्; यत्र मानान्तरविरोधो त तद्धि शब्दश्रवणमात्रान्न निश्चेतुं शक्यते. अद्वैतसमन्वयश्च नत्त

ान्यायमानान्तरादिना प्रथमं विरुद्धतया प्रतीयत इति न वाक्य-
त्रान्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दरूपत्वन्तु न तथेति तच्छब्दा
ा निश्चेतुं शक्यते । नहि परमात्मनः सुखाभेदे प्रत्यक्षविरोधोस्ति ।
ग्रानित्यसुखस्य नित्यार्थभेदविरोधः, अनुकूलतर्काभावेन सुखमात्रे
नित्यत्वावधारणायोगात् । सौषुप्तिकसुखावमर्शदर्शनेन जीवसुखस्यापि
त्यतया तद्विनाशबुद्धेरन्यविषयत्वावधारणसम्भवात् । किञ्च येन
ेकं न्यायेन निश्चितं तेन इतरदपि न्यायेन निश्चेतव्यमिति न
यमः, पुरुषाणां विचित्रबुद्धितया न्यायानां चालौकिकविषयतयातिसूक्ष्म
ात्तान्नियमानुपपत्तेः । अन्यथा धूमाग्न्योर्व्याप्तिस्सर्वैरेव गृहीतेति सर्वापि
ाप्तिरेवं ग्राह्येति वैशेषिकादिग्रन्थान्तरारम्भो व्यर्थ एव स्यात् । एतादृश
ा पुरुषोस्मिंच्छास्त्रेधिकारी, तदुक्तम् - "नात्यन्तमज्ञो नोतज्ञस्सोस्मि
स्त्रे ऽधिकारवान्" इति । एवंच ब्रह्मसुखस्य जीवसुखस्य च
त्यत्वं तदितरभोगानाञ्चानित्यत्वं सुनिरूपणम् । ततो वैराग्यम्, तत
ारीरेन्द्रियचेष्टाया मनोवृत्तेश्च निमित्ताभावाच्चित्तेन्द्रिययोर्व्यापारोपरम
पौ शमदमौ भवतः, ताभ्यांच तितिक्षादिः, ततश्चाविक्षिप्तचित्त
रस्तानर्थप्रतानानतिशयानन्दगळिताखिलभेदमात्मानं वेदान्तवाक्येभ्योधि
न्य मुमुक्षुर्भवति, ततो "ब्रह्मविदाप्नोति परं" "तरतिशोक"
त्यादिश्रुतितो ज्ञानस्य मोक्षहेतुतान्निश्चित्य जिज्ञासत इति ।

अत्रोच्यते- यदि न्यायोपबृंहितवाक्येन नित्यानित्यवस्तुविवेकः,
दा ज्ञातव्यान्तरपरिशेषाभावप्रसङ्गाद्विचारविधेरेवोच्छेदप्रसङ्गः । तथाहि-
मुक्षासिद्धये हि नित्यानित्यवस्तुविवेकादेः पूर्ववृत्तत्वमिष्यते, अत्र यद्य
ानिश्चयाभावेपि मुमुक्षा जायते, तर्ह्यानन्दत्वनित्यत्वयोर्निर्धारणं किमर्थ
ेक्ष्यते ? नित्यपुरुषार्थनिर्धारणाभावे अनित्यसुखवैराग्याभावेन कथं
मुक्षेति यदि, तदा प्राप्तियोग्यताज्ञानाभावे कथं सा ? कथंचाद्वितीयत्व

द्वैतनिश्चयो विचारात्प्राङ्नास्तीत्यभिमतम्, तदा परमप्रेमास्पदत्वेन
रूपताज्ञानं ब्रह्मणि कथमुपपाद्यते । ननु जीव एव तदुपपाद्यत
चेत्? किन्तस्य प्रयोजनम्? तत्स्वरूपस्य पुरुषार्थताबुद्धिरिति
तर्हि तत्स्वरूपस्य सिद्धताज्ञानादेव न साध्यताबुद्धिरिति न ता
विचारप्रवृत्तिसम्भवः । किञ्च स्वयमेव "ब्रह्मविदाप्नोति परमि
ज्ञानस्य मोक्षसाधनताज्ञानमानन्दरूपताज्ञानञ्च उपपादयता पर
एव प्राप्यताबुध्द्युपपादनात् ब्रह्मणा सह स्वस्याभेदज्ञानाभावे
रूपस्यानन्दरूपताबुद्धेः क उपयोगः? किञ्चाभेदबुद्ध्यभावे काय
ताज्ञानवतो नित्यापुरुषार्थज्ञानमसम्भवि । यच्च सूक्ष्मत्वादनिर्धारणमुक्त
तदनुपपन्नम्, सुखीस्यामित्येवं सुखे प्रेमदर्शनेन प्रेमास्पदता
सुखरूपतासाधकत्वं कस्यापि बुद्धिमनधिरूढम्; कार्यं सर्वमनित्य
बुद्धौ विद्यमानायामपि अभेदमबुद्ध्वापि नित्यसुखस्य साध्यतां
विनाशप्रत्यक्षस्यान्यविषयतां कृत्स्नसुखस्याप्येकतां जगत्कारणे
पुरुषसन्देहे विद्यमान एवानन्दरूपताञ्च परमसूक्ष्मैरतिदुर्भगैरप
पश्यतो दुर्मेधसः कुबुद्ध्यगोचरं किमपि सौक्ष्म्यं जलचन्द्रघटाक
न्यायेष्वभेदसाधकतयाऽभिमतेषु लेशतोपि न पश्यामः । मा
विरोधस्सुखनित्यत्वेपि तुल्यः । तस्माद्यदनिर्धारितमित्युक्तं तन्निर्धा
र्जनीयमेव । यन्निर्धारितमित्युच्यते तदेवतु सन्दिग्धम् । तत्र
आनन्दत्वन्तावत् जगत्कारणे सन्दिग्धम्, कारणत्वस्य प्रधानचेतन
सन्देहेनानन्दपदस्यापि मुख्यगौणार्थत्वसन्देहात्, "अशरीरं वा वस
प्रियाप्रिये स्पृशत" इति मोक्षदशायां आनन्दाभावप्रतीतेर्मुक्ति
प्राप्यतया विद्यमानस्य तस्यानन्दस्वरूपत्वासम्भावनयाच "आनन्दाद
ति वाक्यार्थनिर्णयाभावात् । परमप्रेमास्पदत्वेनानन्दरूपतानिर्धारणर
प्यहन्त्वस्यैवाहमर्थे प्रेम्णि प्रयोजकत्वात् । सुखत्वस्य प्रेमप्रयो

तया ज्ञाते निरुपाधिकेच्छाया अदर्शनात् । शत्रुगततया ज्ञाते द्वेष
नात्, कुत्राप्यसमवेतो निरतिशयानन्दः कश्चिदस्तीति केनचि
सिद्धताज्ञानविरहदशायामपीच्छाया अदर्शनाच्च । तस्मादहन्त्वमपि
प्रयोजकमेव । अथवा - अहं सुखीस्यामिति प्रेम्णो दर्शनात् सुख
ष्यात्मन्येव प्रेम, न स्वात्ममात्रे, नापि सुखमात्रे, अहं स्यामि
प्रेम चन्दनादाविव सुखसाधनताप्रयुक्तम् । वस्तुतस्तु सुखवदहम
परमप्रेमास्पदमेव, तत्त्वञ्च तत्त्वादेव, तथैवानुभवात्, अहं स्या
ह्यनुभवः । नच तस्य तत्त्वमानन्दात्मकचैतन्याभेदाध्यासादेवेति वाच्य
तथासति विश्वमेव परमप्रेमास्पदं स्यात् । तदङ्गीकारेच वस्तुत
विश्वस्य परमप्रेमास्पदत्वम्, नतु चैतन्याभेदादिति स्यात् । कि
त्वदभिमतसुखस्य निरुपाधिकप्रेमास्पदत्वं यदि कचिद्दृश्येत तदा
तदभेदाध्यासादन्यत्र तदिति स्यात्, नचैवमस्ति, लोके हि सुख
सम्प्रतिपन्ने तरतमभावमुपगते वस्तुन्येव प्रेमास्पदता दृश्यते । त
भावो वृत्तिगत एव, नतु स्वरूपगतः, व्यक्त्यैक्यात्, तरतम
प्रेमतारतम्यदर्शनादपि प्रेम्णस्तादृशवस्त्वेव विषयः । तस्माद्यदि चै
स्वरूपस्य तरतमभावापन्नवस्तुना वृत्तिरिति त्वदभिमतेनैक्याध्यास
तदा तद्वस्त्वभेदाध्यासनिबन्धनमेव चैतन्यस्य प्रेमास्पदत्वमिति स
यदि तेन नैक्याध्यासः, तदा चैतन्यस्य न प्रेमास्पदतागन्धोपीति स
तस्मादहमर्थस्य प्रेमास्पदत्वन्निरुपाधिकमेव । तस्मादनुभवबलादह
नन्दत्वरूपप्रेमास्पदतावच्छेदकद्वयाङ्गीकारो न दोषः । एतेन सुखा
निबन्धनमेवाहमर्थस्य प्रेमास्पदत्वम्, न तत्स्वरूपनिबन्धनमिति प्रत्यु
सुखप्रतिसन्धानं विनैव स्वस्मिन्निरुपाधिकप्रेमास्पदत्वदर्शनात् ।
नित्यत्वमपि सन्दिग्धमेव, "नात्माश्रुतेरि" त्यादिना तस्यापि विच
"विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती" त्य
[illegible]

वियोगानन्तरमपि स्थायित्वनिश्चयान्नित्यत्वं निश्चितमेवेति वाच्यम्, स
भूतमोक्षानन्तरस्थायित्वस्यानिश्चयादेतच्छरीरानन्तरं शरीरान्तरसम्बन्धस्यै
ग्रहात् । यदुक्तम् - आत्माच नित्य इत्यवगम्यते, अन्यथा कस्या
मते मोक्षाय प्रवृत्तिर्न स्यादिति; तत्र किन्नित्यत्वं स्वप्रकाशसिद्धमित्यभिमतम्
उत शास्त्रेण ज्ञातव्यमिति ? आद्यमुपहास्यम् । द्वितीये तत्तच्छास्त्रे
तत्वहितपुरुषार्थान्निश्चित्य स्वहिते प्रवर्तत इति तत्तच्छास्त्रश्रवणात्प्रागात
नित्यत्वज्ञानाभावे तवैव न कस्यापि मते दोषः । यच्च नित्यत्वप्रत
युपपादनम्, तद्यदि जीवानन्दविषये, ब्रह्मज्ञानस्य कुतो नित्यताव
गमोपपादनम् । आत्मत्वहेतुना तत्रापि नित्यत्वावगमविवक्षायामीक्षत्य
धिकरणं दत्तजलांजलि स्यात् । किञ्चैवं नित्यानन्दब्रह्मनिर्धारणाभाव
न्मूलवैराग्यमसम्भावितम् । तन्निश्चयेपि न वैराग्यसम्भवः, त्वयैव प्रति
षेद्धत्वात । सौषुप्तिकपरामर्शानुसारात् जीवसुखस्यापि नित्यत्वं ह्यवोचः
नेनाशबुद्धेरन्यविषयत्वोपपादनेन सर्वं सुखं नित्यमेवेत्यवगमेन कथमित
भोगेष्वानित्यताबुद्ध्या तत्र वैराग्यम् ? अवच्छेदकानित्यताज्ञानं
राग्यप्रयोजकम्, तथासति ग्रामे स्थिरतया ज्ञाते गृहारामक्षेत्रावच्छेदान
नित्यताज्ञानात् ग्रामे वैराग्यापत्तेः । नचावच्छेदकवैराग्यमेवेह विवक्षित
मिति वाच्यम्, तत्र भोग्यताबुद्धिविरहे नित्यसिद्धवैराग्यस्यानित्यता
ज्ञाननैरपेक्ष्यात् । भोग्यताबुद्धौ चानित्यताज्ञानादपि न वैराग्यम्, सार्वभौ
मस्य सहस्रसंवत्सरं राज्यमनुभवतोपि क्षणमात्रं कन्दुकक्रीडादर्शनात्
यदि तस्य नित्यसुखविरोधिता ज्ञायेत, तदा परं ततो वैराग्यं स्यात्
तज्ज्ञानञ्च त्वयैवापह्नुतम् ; अवच्छेदकताबुध्द्युपपादनेन समानकाली
नत्वबुध्द्युपपादनात् । किञ्च स्वरूपानन्दापेक्षया वैषयिकसुखानामल्पा
नानामप्युत्कर्षस्य नित्यानन्दाविरोधस्य च ज्ञायमानत्वात् न वैराग्य
सम्भवः । इदानीमानन्दस्वरूपमावृतम्, विषयसम्बन्धाधीनवृत्तितारतम्ये
आवरणनिवृत्तितारतम्यात प्रकाशतारतम्य ...

च्छिन्नानन्दप्रकाश इति बुद्धिस्सम्भवतीति चेन्न; – स्वरूपस्यैव प्रकाश
पतया तरतमभावनिश्चयासम्भवात् । नह्यावरणतरतमभावस्सन्नपि
रूप एव तरतमभावसम्पादनक्षमः । किञ्चाऽवरणनिवृत्तितारतम्यस्य
काशतारतम्यप्रयोजकत्वे सुखवृत्त्यभावदशायां स्वरूपसुखप्रकाशो न
ात्, ततश्च परमप्रेमास्पदत्वन्न स्यात्। निरवयवे निर्धर्मके स्वरूपे
ादनावृतमिति शङ्का नोत्थानमर्हति। आवरणनिवृत्तितारतम्यमप्यनुप-
ाम्, तदपिह्यावार्यस्य सावयवत्वे सधर्मकत्वे वा भूयोवयवावच्छिन्ना
ावयवावच्छिन्ननिवृत्तौवा किञ्चिद्धर्मावच्छिन्नभूयोधर्मावच्छिन्ननिवृत्तौ वा
ात्, नचैतत्सम्भवति। किञ्च नास्ति न प्रकाशत इति व्यवहार-
ग्यतावरणमित्युच्यते; को नाम तन्निवृत्तौ तरतमभावः? उत्कृष्टसुख
चरन्नास्तीति व्यवहारयोग्यताप्रतियोगित्वं निवृत्तेरुत्कर्ष इति शङ्का
देतुं समर्था, सुखतदावरणनिवृत्त्युत्कर्षयोः परस्परनिरूप्यतयान्योन्या-
यात्, आवरणनिवृत्तितारतम्यस्यैव सुखतारतम्यरूपतया आत्माश्रयाद्वा।

किञ्च – शमादेः कथं मुमुक्षाहेतुता? नचाविक्षिप्तचित्ततया
ान्तादात्मावगमे मुमुक्षेति वाच्यम्, मुमुक्षायाः प्रागेव तादृशात्मा-
मे ततः श्रवणे प्रवृत्त्यनुपपत्तेः। यद्यापातप्रतीतेरेव सा, तर्हि नित्या
त्यविवेकदशायामेव सिद्धेति न तस्याश्शमाद्यपेक्षा। दुरीश्वरद्वारबहि-
तर्दिकादुरासिकाविक्षिप्तचित्ताः निरन्तररसिकविलासिनीचर्वितसारगद्गद-
ठा अपि ह्यद्वैतन्निर्द्धार्य तत्रैव प्रगल्भवाचश्चिचतुरवराटिकालिप्सया
तुर्वर्ण्यबहिष्कृतपञ्चषपल्लीपालकदुरीश्वरनामांकितग्रन्थानपि रचयन्तः
श्शतमिथ्यावादिन उपलभ्यन्ते। तस्मादद्वैतस्य निर्धारणेपि न शमा-
ा। किं पुनरापातप्रतीतौ।

"शान्तो दान्त" इति श्रुतिस्तु शमादेरुपासनार्थतामाह। नच
प्रशान्तचित्तायेति" वाक्यमन्यार्थानुवादरूपमङ्गत्वबोधनसमर्थम्, ग्रह-
[illegible]

ब्रह्मविचाराधिकारिविशेषणं भवितुमर्हम्। विपर्यस्तश्चैषां साध्यसाधन
तथाहि - वैषयिकसुखविरागो नानित्यताज्ञानमात्रात्, तज्ज्ञाने
प्रेम्णो दर्शनात्; किन्तु मोक्षोपायं कामयमानस्य शमदमादेस्त
ज्ञानादेव; मुमुक्षयैवच मोक्षोपायकामनेति मुमुक्षयैव शमादिस्साध
मुमुक्षापि न सम्भवति, ब्रह्मस्वरूपानन्दस्य नित्यमनुभूयमानत्वात्।
भेदभानदशायां दुःखसंभिन्नतया स्वरूपानन्दस्यासत्कल्पतया
सम्भवतीति वाच्यम्, असत्कल्पता किं द्युमणिसान्निधौ खद्योताद
प्रकाशः, किंवा प्रबलव्यसनाभिभूते सुहृद्दर्शनादेरिव यथापुरं सु
त्पादकत्वम्, किंवा प्रबलानर्थसंवलिताविषसंपृक्तमधुभक्षणजन्यसु
स्वविषयकामनानुत्पादकत्वम्? नाद्यः, तथासति प्रेमानुपपत्तेः। न द्वि
स्वतः पुरुषार्थतया सुखोत्पादकत्वेन पुरुषार्थत्वासिद्धेः। न तृ
सर्वदा प्रेमदर्शनात्, त्वयातदभ्युपगमाच्च। अथस्यात् - ब्रह्मान
परमपुरुषार्थः, स स्वाभाविकाभेदाद्यद्यपि प्राप्त एव, तथाप्यौपाधिकभे
प्राप्तत्वभ्रमात् कामना सम्भवत्येव, कण्ठचामीकरन्यायादिति; उ
स्वाभाविकाभेदो यद्यगृहीतस्तदा प्राप्तियोग्यताज्ञानाभावान्न काम
नहि भिन्नस्य भेदः कालान्तरे सम्भवति। यदि ज्ञातः, कुतो प्राप्तता
कुतो मुमुक्षा? कुतो जिज्ञासा? कण्ठचामीकरन्यायश्च विषमः, त
प्राप्तत्वबुध्यनन्तरं काम्यते, किन्तु प्रागेवेति।

किञ्च यद्यपरोक्षज्ञानं मोक्षसाधनत्वेन निर्णीतं स्यात्, तदा
ज्ञानकामनाद्वाराधिकारस्स्यात्। तच्च विचारारम्भात् प्राक्सन्दि
प्रपञ्चमिथ्यात्वज्ञानं विना निवर्त्यत्वग्रहणासम्भवात्। यदि कश्चि
धीनन्यायावधारितसमस्तवेदान्तार्थस्य साधनचतुष्टयसम्पन्नस्याधिक

श्रवणविधिबलात् श्रवणे प्रवृत्तिं कल्पयेत्, सोयं " सोहं मन्त्रविदेवा
नात्मविदि " ति श्रवणाधिकारिण आत्मज्ञानाभावोक्त्या प्रतिवक्तव्य
नच मोक्षसाधनज्ञानाभाव एव तत्रोच्यत इति वाच्यम्, मन्त्रविदे
स्मीत्युक्त्या ज्ञानस्वरूपस्यैव निषेधावगमात् ।

वस्तुतस्तु पूर्वकाण्डविचार इवात्रापि जिज्ञासुरेवाधिकारी ; तदर्थमेव साधनचतुष्टयापेक्षा, प्रकारान्तरेण जिज्ञासोत्पत्तेः प्राग
धानादिति ।

वाचस्पतिमतानुसारिणस्तु— नित्यानित्ययोर्वसन्तीति नित्यानित्यवस
तानि च सत्यत्वासत्यत्वसुखत्वदुःखत्वानि, सत्यत्वादिधर्मिणः तद्धर्माण
विवेको नित्यानित्यवस्तुविवेक इति । तदिदमसारम् । तथाहि किमात
त्मनोरन्यतरस्मिन् सत्यत्वं सुखत्वं च इतरस्मिन्नसत्त्वं दुःखत्वं
विवेको विवक्षितः, अथवा प्रपञ्चो ऽसत्योदुःखात्मकश्च तदधि
सत्यं सुखरूपं चेति विवेको विवक्षितः ? नाद्यः, वैराग्याहेतुत्वात
न द्वितीयः, निरूपणीयपरिशेषासिद्धेः । नच निर्गुणत्वं निरूपणीयं शि
इतिवाच्यम्, दृगन्यन्मिथ्या दृश्यत्वादिति प्रपञ्चमिथ्यात्वसि
निर्गुणत्वसिद्धेः । अपिच प्रपञ्चाधिष्ठानस्य सत्यस्य कथं सुख
श्चयः ? " यो वै भूमा तत्सुखमि " ति वाक्यादिति चेत् ? कथ
धिष्ठानस्य सुखरूपतासिद्धिः । यत्र " [illegible] ति वाक्यशेषादित
तत्र किं " यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स
योवै भूमा तत्सुखं यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं
यदल्पं तन्मर्त्यन्नाल्पे सुखमस्ती" ति वाक्यस्य यस्मिन् दृष्टे तत उत्कृष्टं
न पश्यति स एव भूमा सुखम्, यस्मिन् दृष्टे तत उत्कृष्टं भोग्यं प
तद्वैषयिकसुखं अल्पम्, नाल्पे सुखत्वमस्तीत्यर्थो विवक्षि

ुखसाधनं निरवधिकानन्दहेत्वनुभवगोचरः, यस्मिन् शब्दादिविषये द्र
ात उत्कृष्टं भोग्यं विषयं पश्यति तदल्पं किञ्चित्सुखजनकं तस्मि
न्नल्पे सुखं नास्ति शब्दाद्यनुभवेन जातमपि सुखमल्पत्वात् मर्त्यत्व
द्नित्यत्वाच्चासुखकल्पमित्यर्थः ; यद्वा यस्मिन्नधिष्ठाने तत्वतस्साक्षात्कृ
ातोन्यद्यथापुरं सत्यत्वेन न पश्यति स भूमा सुखम् यस्मिन् , द्र
अन्यत्सत्यत्वेन पश्यति तदल्पं विनाशि तत्र सुखत्वन्नेति ? तत्र नाद्यद्विती
योरधिष्ठानस्य सुखत्वसिद्धिः । यद्यप्याद्ये सिद्ध्यति, तथापि अधिष्ठा
सुखमित्येवंरूपप्रतीतेरनेन वाक्येन न सिद्धिः । नापि तृतीयः, घटा
सुखस्याप्रसक्त्या तत्र सुखस्य निषेधासम्भवात् । वैषयिकसुखेषु सुर
त्वन्निषिध्यत इति चेन्न ; - भूम्नएव तत्त्वेन तत्र निषेधासम्भवात्
अपिच भूम्नस्सुखत्वसिद्धावपि तस्य स्वीयपुरुषार्थताज्ञानाभावे वैराग्य
सम्भवात् स्वपुरुषार्थतासिद्धिर्वाच्या, सा च स्वस्माद्भिन्नतया प्राप्य
ज्ञाने स्वस्य भूम्नो भेदेन मिथ्यात्वप्रसङ्गात् पुरुषार्थभागिनोसिद्ध्यापा
स्वाभिन्नतयैव भूमसुखस्य स्वपुरुषार्थता वाच्या, तथाचाभेदोपि ज्ञ
एव । एवञ्चासत्यवादिनां प्रपञ्चमिथ्यात्वं ब्रह्मणो निर्गुणत्वं जीवब्रह्म
रभेद इत्येव ज्ञातव्यसर्वस्वम् । तच्च नित्यानित्यविवेकदशायामेव ज्ञ
मिति विचारानारम्भापादकस्य कथं विचाराधिकारता । ननु सर्वोप्य
ज्ञात एव, तथापि वेदान्तानान्तत्र समन्वयो न ज्ञात इति तत्पारि
[illegible] सर्वस्याप्यर्थस्य वेदान्तं विनैव ज्ञाने वे
न्तानामनुवादकत्वप्रसङ्गात् । वेदान्तैरेव ज्ञाने न विचार्यपरिशेषः ।

किंच - तत्वज्ञाने ज्ञाते किमर्थस्समन्वयावगमः ? तत्समन्वया
ज्ञाने एषामर्थानां तद्विरोधशङ्का स्यादिति तु न सम्भवति, तथा
वैराग्यासिद्धिप्रसङ्गात् । यच्च नित्यानित्यविवेको न प्रसिद्धनित्यानि
विषयः , किन्तु सत्यासत्यविषय इत्यत्र नियामकमुक्तं परिमळभ

सकलकमफलावराग उक्तः, नित्यवस्तुअप्लब्धा ...

दुक्तम् , अयं क्रमो नित्यत्वं सत्यत्वमिति व्याख्याने युज्यते, न स्था मिति व्याख्याने, अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोग मालक्ष्य हि ततो विरज्यते, नान्यथा, अनृतासक्तस्तु तदनृतत्वनि सति तत्परित्यागे ऽतथाभूतवस्तुलाभप्रतिसन्धानाभावेपि ततो विर नहि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तस्तन्मिथ्यात्वनिश्चये सति त त्यागे सत्यरजतस्य स्वलभ्यत्वप्रतिसन्धानाभावे ततो न निवर्त किन्तु ततो निवृत्तस्सत्यरजतप्राप्त्युपायं किंचित्पश्यतिचेत्तत्र प्र इति; तद साधु, असत्यत्वनिश्चयमात्रात् सुखसाधनतया ज्ञायमानान्निवृ पपत्तेः । रजतान्निवृत्तिस्तु तथात्वेन ज्ञाते रजते कटकादीष्टसाधनताज्ञान हादेव । अत एव इन्द्रजालादिदर्शने प्रवर्तन्ते पुरुषाः । अत एव च वष्टम्भेन चन्द्रद्वित्वमुत्पादयन्ति कुतूहलिनः, उपनेत्रेण च वर्णेर वृद्धा इति । नन्वत्र सर्वत्र इष्टसाधनमिथ्यात्वज्ञानेपि इष्टमिथ्यात नेति चेत् ? किन्तर्हि इष्टंसुखमपि मिथ्यात्वेन ज्ञातव्यम् ? एवं शुक्तिरजतेपि वैराग्यासिद्धिप्रसङ्गः । आनन्दस्य सत्यताविवे विरोधश्च । नन्वत्र न सुखे वैराग्यमपेक्षितम् , परन्तु तदवच्छेदकवृत्त चेत् ? न - तर्हि तन्नित्यानित्यविवेकसाध्यम् , सुखतत्साधना वैराग्यस्य स्वतस्सिद्धत्वात् ।

ननु सुखवृत्तेस्सुखाभेदेन ज्ञानात्तस्यान्तत्साधने न रागो मिथ्यात्वज्ञाने तु नेतिचेत ? कथं नित्यसिद्धसुखस्य तदभेदेन माने रागः ? तदभिव्यक्तेस्तदुपपत्तिः , अत एव खल्वभिव्य तमभावाद्रागतरतमभावो दृश्यत इति चेत् ? तर्हि तदभिव्यक्तेस्सत्य ततो वैराग्यस्य सम्भवः, मिथ्यात्वेपि सुखाभिव्यक्तेरेवान्यथा रागप्रयोजकतया न वैराग्यसम्भवः । नच सत्यतया ज्ञायमानसु व्यक्तित्वं असत्यत्वेनाज्ञायमानसुखाभिव्यक्तित्वं वा रागप्रयोजकम् , गौ

ास्मादुत्कृष्टसुखविरोधिताज्ञानं प्रबलतरव्यसनानुबन्धित्वज्ञानं वा, सुख
ाराग्यप्रयोजकम्, उत्कर्षश्च कालस्वरूपाभ्यान्द्रष्टव्यः ।

इति जिज्ञासाधिकरणं प्रथमम् ।

## जन्माद्यधिकरणम् ॥२॥

नन्वेवमपि ब्रह्मविचारो नारम्भणीयः, लक्षणासम्भवेन चिदचि
द्विलक्षणवस्त्वसिद्धचा वेदान्तानां कर्मकर्तृमुखेन कर्मप्रशंसार्थत्वादित्यत्राह—

१- **जन्माद्यस्य यतः** ॥१—१—२॥

तैत्तिरीये श्रूयते – "यतो वा इमानि भूतानि जायन्ते येन
जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे" ति
अत्र संशयः - किमिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति
नेति । तदर्थं जन्मादिकारणत्वे धर्मिभेदः प्रसज्यते नेति । यदा धर्मिभेद
प्रसज्यते तदा "न तत्समश्चाभ्यधिकश्च दृश्यत" इत्यादिप्रतिपन्
नेस्समाभ्यधिकाद्वितीयवस्त्वसिद्धचा तादृशवस्तुनो लक्षणतः प्रतिपत्तु
ाशक्यतया तत्र वेदान्तानां प्रामाण्यासम्भवेन ब्रह्मविचारो नारम्भ
णीय इति सिद्ध्यति । यदा धर्मिभेदो न प्रसज्यते तदा निस्स
माभ्यधिकाद्वितीयवस्तुसम्भवेन तस्य लक्षणतः प्रतिपत्तुं शक्यत्वा
वेदान्तानान्तत्र प्रामाण्यसम्भवात् आरम्भयोग्यो ब्रह्मविचार इति सिद्ध्यति

अत्र व्यावृत्तिसमानाधिकरणव्यावर्तकधर्माणां स्वेतरधर्माश्रयय
[illegible]स्यौत्सर्गिकतया जन्मादिकारणत्वैर्धर्मिभेद
प्रसज्यते; नच दण्डकुण्डलकमण्डलुभिरपि धर्मिभेदप्रसङ्गः, प्रत्यक्षेण तद
पवादात्; मानान्तरागोचरे तत्र ब्रह्मणि न तथापवाद इति धर्मिभेद
प्रसज्यत एव; ननु माभूत्तर्हि कारणत्वं लक्षणम्, माभूवंश्च कारण
त्वादयो धर्माः, येनोक्तदोषः प्रसज्यते, किन्तु प्रपञ्चगतजन्मादि
मेव लक्षणं स्यात्, लक्षणं हि नाम इतरव्यावृत्तवस्तुप्रत्यायकम्, तत
[illegible] इति जिज्ञासायां शाखाग्रे चन्द्र इति वाक्ये य

ाया उपलक्षणतया इतरव्यावृत्तवस्तुप्रत्यायकत्वम् — एवमिहापि
ुभिर्जिज्ञास्यं ब्रह्म किमिति जिज्ञासायां यतोवेत्यत्र जन्मादेरुपलक्ष-
या इतरव्यावृत्तवस्तुप्रत्यायकत्वमस्त्विति चेन्न ,- उपलक्षणत्वे हि ज्ञाता-
ज्ञाप्याकार उपलक्षणमित्याकारत्रयं वाच्यम् , यथा - शाखोप-
गम् , ज्योतिर्मण्डलसम्बन्धितेजःपिण्डत्वं ज्ञाताकारः, चन्द्रशब्दवा-
वं तत्र ज्ञाप्याकार इति ; इहच न ज्ञाताकारोस्ति, मानान्तरागोचर
(; सत्यादिलक्षणवाक्यप्रतिपन्नस्य सत्यत्वादेर्ज्ञाताकारता तु न सम्भवति,
भेदप्रसङ्गादेव, तत्रापि कथञ्चिदुपलक्षणत्वाङ्गीकारे तत्र ज्ञाताकार-
ये एतद्वाक्यस्यापेक्षणयीत्वात् अन्योन्याश्रयः ; किंच वेदान्तेषु
शेषं हि वस्तु प्रतीयते, तत्र ज्ञाप्याकारश्चानुपपन्नः, तस्मादुप-
गत्वानुपपत्त्या जन्मादिकारणत्वानां नानात्वाद्धर्मिभेदो ऽवर्जनीयः; इत्येव
ण्डार्थवादिकल्पितकुतर्कावलम्बनेन पूर्वः पक्षः ।

अखण्डार्थवाद्युक्तमौत्सर्गिकत्वं निर्णिबन्धनम् , क्वचिद्दर्शनमात्रेणा-
ारे अभेदकत्वमेवोत्सर्ग इति वैपरीत्यं किन्न स्यात् ।
ङ्गीकारेपि न दोषः, एकेनैव तच्छब्देन व्यक्तयैक्यस्वरसैकवचना-
उपादानातिरिक्तस्य लयस्थानत्वासम्भवरूपतर्कसहकृतेन प्रति
शेनापवादात् । उपलक्षणत्वेपि न दोषः, लक्षणजिज्ञासाप्रयोजक-
विषयाकारो हि ज्ञाताकारः, यथा ज्योतिर्मण्डलमध्यवर्तित्वम् ;
ज्ञानादेव ह्यस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः, एवमिहापि भृगु-
स्य मुमुक्षूपास्यताबोधनिबन्धनत्वात् सैव ज्ञाताकारः, तथा प्रतिपन्ने
तुनि निरतिशयब्रह्मत्वं ज्ञाप्याकारः । वस्तुतस्तूपलक्ष्योपलक्षणरूपा
द्वयमेव नियतम् , चन्द्रशब्दवाच्यं किंचिदस्तीत्येतावन्मात्रं जानत
पि शाखाग्रे चन्द्र इत्युपलक्षणदर्शनात् । सविशेषमेव ब्रह्म वेदान्तै
पाद्यत इतीहाभिप्रेतं प्रागेवाभिहितम् । अतो लक्षणतः प्रतिप

शक्यतया वेदान्तानां ब्रह्मणि प्रामाण्यसम्भवात् ब्रह्मविचार योग्य इति राद्धान्तः ।

वाक्यार्थस्तु— अस्य- चिदचिदात्मकस्य प्रपञ्चस्य, यतोजन तद्ब्रह्मजिज्ञासा कार्येति । आदिपदेन स्थित्यादिपरिग्रहः । यत्प्रयन्त्यभिसंविशन्तीत्यत्र प्रयन्ति सन्ति यदभिसंविशन्तीति यो यद्यपि यत्प्रयन्ति यदभिसंविशन्तीति यच्छब्दानुषङ्गेण लयस्थानत्व प्राप्यत्वं चोच्यत इति वक्तुं शक्यम् , अभिसंविशन्तीति बन्धकत्वमुच्य वा वक्तुं शक्यम् , तथापीमानि भूतानीत्यत्र चिदचितोर्विवक्षितत्वाद मुक्तप्राप्यत्वान्वयासम्भवेन एकदेशान्वयो ऽस्वरसः । किञ्च प्र यत्पदाधृतेर्दर्शनेन प्रळयसंवेशनयोर्भिन्नकार्यत्वे यत्प्रयन्ति यदभि न्तीति यच्छब्दावृत्तिप्रसङ्गः । बन्धहेतुत्वार्थकत्वपक्षे सान्निहित मुलङ्घ्य व्यवहितस्य येनेति पदस्यानुषङ्गः । संसारमभिसंवि कर्माध्याहारप्रसङ्गश्च । संविशन्तीत्यस्य स्वापार्थकस्य बन्धपरत्व लक्षणा, व्यवहितानुषङ्गश्च । तद्विजिज्ञासस्व तद्ब्रह्मेत्यत्र तत्त विजिज्ञासस्वेत्यन्वयः । प्रथमतच्छब्दो यच्छब्दप्रतिनिर्देशकः, द्वि बुद्धिस्थमुमुक्षुजिज्ञास्यत्वपरामर्शी । मुमुक्षुभिर्जिज्ञास्यत्वस्य बुद्धौ वृत्त्या खलु भृगुणा प्रश्नः कृतः ।

अत्र जन्मकारणत्वादीनि प्रत्येकमेवेतरव्यावर्तनसामर्थ्यात्तत्वे णानीति केचिदाचार्याः । अपरेतु - 'अधीहि भगवो ब्रह्मे' ति भिर्जिज्ञास्यं ब्रह्म किमिति पृष्टे यदुत्पत्तिकारणं ब्रह्मेत्युच्यते शिष्यस्य स्थितौ कारणान्तरशङ्कया तस्याप्येतत्तुल्यताज्ञानेन स्यान्तरशंकया इदमेव जिज्ञास्यमिति बुद्धिर्न स्यादिति श्रुतौ यस्यैव लक्षणत्वाभिप्रायेण यच्छब्दावृत्तावपि तच्छब्द एक एवोक्त ... लक्षणत्वं विवक्षितमित्यनुगृह्णन्ति

यत इति हेतौ पञ्चमी, 'नतु जनिकर्तुः प्रकृति' रित्यपादान
ानिबन्धनपञ्चमी, स्थित्यादिकर्तुः प्रकृतावपादानसंज्ञाया अविधानात्,
ध्योपादानत्वकर्तृत्वयोर्ग्रहः, विषयवाक्यानुसाराच्च । तत्र यद्यपि येन-
इति स्थित्यादिहेतोः पदान्तरेण निर्देशाद्यत इति जनिकर्तुरपादान
ानिमित्ता पञ्चमी सम्भवति, अथापि यथाप्राप्तचनुवादत्वात् सदेवेति
कवाक्यानुरोधात् हेतावेव । तत्र हीदं सदासीत् स्यामित्युपादानत्वं
क्षतासृजतेति कर्तृत्वंच प्रतीयते । किंच विषयवाक्यगत येन य-
ते द्वितीयातृतीयार्थयोस्सङ्ग्राह्यत्वाच्चात्र हेतुपञ्चम्येव प्राप्नोति ।

परेतु—यतो वा इमानि भूतानीति श्रुत्युक्तं ब्रह्मणो जगत्कारणत्वं
णं सम्भवति नवेति सन्देहे प्रपञ्चसत्यत्वे तेन निर्विशेषब्रह्मावगत्य
भवात् मिथ्यात्वे कृतकत्वेन नित्यस्येव तेन सत्यस्य ब्रह्मणो लक्षयितु
क्यत्वान्न सम्भवतीति पूर्वः पक्षः; मिथ्याभूतेनापि प्रपञ्चजन्मादिना
प्रपञ्चं ब्रह्म ताटस्थ्येन लक्षयितुं शक्यम्, यद्वजतमभात्साशुक्ति
ते वत्, एवमस्य शाखाग्रे चन्द्रमा इति वत् तटस्थलक्षणत्वेपि प्रकृष्ट
शश्चन्द्र इति स्वरूपलक्षणेन स्वरूपविशेषावगमवत् "आनन्दाद्ध्येव
ल्विमानि भूतानि जायन्त" इत्यादिनिर्णयवाक्यावगतेन स्वरूपलक्षणेन ब्रह्म
रूपविशेषावगतिर्भवतीति सम्भवति तटस्थलक्षणमिति सिद्धान्त इति ।

अपरेतु "तद्विजिज्ञासस्व तद्ब्रह्मे" ति वाक्यस्थं ब्रह्म किं जीवः
त विष्णुरिति चिन्ता, तदर्थं ब्रह्मशब्दस्य रूढ्यर्थजीवत्यागेन यौगि-
र्थविष्णुग्रहणे हेतुर्नास्ति उतास्तीति, तदर्थं विध्युद्देशस्थब्रह्मशब्द-
ारस्याय यतोवेति पूर्ववाक्यं जीवे कथञ्चिन्नेतुं शक्यं उताशक्यमिति
र्वपक्षस्तु- जीवएवेदं ब्रह्म "ब्रह्मजातिजीवे" त्याद्यभिधानात् ब्रह्म शब्दस्य

नच जीवपरत्वे यतोवेत्यादिपूर्ववाक्योक्तकारणत्वमेव बाधकम् , वि
...गतब्रह्मशब्दस्वारस्याय जीवस्याप्यदृष्टद्वारा तत्र हेतुत्वोपपत्तेः ; इ
नीत्यनेन जीवकर्तृककार्यजातस्यैव निर्देशोपपत्तेश्चेति । सिद्धान्तस्तु
विष्णुरेव जिज्ञास्यं ब्रह्म, विष्ण्वेकनिष्ठस्य कारणत्वस्य जिज्ञास्ये ...
चेति श्रवणात् ; तस्य जीवेऽनुपपत्त्या रूढेरपि बाधात् , अदृष्ट
जीवकारणत्वे एवंकारणत्वप्रतिपादनास्वारस्यात् , अभिसंविशन्तीति
पस्थापितमुक्तप्राप्यत्वस्य च सर्वधानुपपत्तेः ; इमानीति सर्वना
संकोचकाभावात् ; किंच "तदेव ब्रह्म परमं कवीना" मिति
विष्णौ विद्वद्रूढिरुक्ता ; नच स्वस्यामुख्यत्वे मुख्यान्तरे वा
स्वस्य परमत्वम् , साचासम्भाविताज्ञानमूला रूढ्यन्तराद्बलीयसी

अन्येतु जन्मादीनां वैय्यधिकरण्येन लक्षणत्वं न सम्भव
पूर्वपक्षं कृत्वा तेषान्तटस्थलक्षणत्वं राद्धान्तयन्ति ।

इतरेतु जन्मच तदादिश्च तथा, सर्वो द्वन्द्वो विभाषैकवद्भवतीत्य

अत्र विभक्तिविपरिणामेन ब्रह्मशब्दानुषङ्गः सर्वपक्षसा
दोषः, यत्प्रयन्ति यदभिसंविशन्तीति योजनोक्तदोषस्त्वपरान्येतरपक्षसा
किंच आद्ये पक्षे किं जिज्ञासासूत्रे सविशेषस्य जिज्ञास्यत्व
तस्यात्र लक्षणमुच्यते, उत निर्विशेषस्य ? नाद्यः, शास्त्रस्य
परत्वप्रसङ्गात् ; लक्षणासम्भवपूर्वपक्षानुत्थानाच्च । न द्वितीयः, ल
नाकांक्षितत्वात् , कृत्स्नस्यापि मिथ्यात्वेन व्यावर्त्यासिद्धेः ।
वस्तुनो व्यावर्त्यत्वे तत्प्रयोजिकाया विद्यमानताया लक्षणेपि
लक्षणाक्षेपो न सङ्गच्छते । किंच - दृगतिरिक्तस्य मिथ्यात्वे
... न ... स्वरूपलक्षणं सत्यत्वेन मिथ्यावस्तुव्य

ा प्रथमसूत्रम् , वाचस्पतिमते साधनसम्पत्तिदशायामेव मिथ्यात्व-
ज्ञमिति पूर्वपक्षश्चानुपन्नः, — मिथ्यावस्तुनोपि विद्यमानतया लक्षण-
भवात् , अन्यथा लोके लक्षणस्यैवासिद्ध्यापातेन इह लक्षणापेक्षा
स्यात् । मिथ्यावस्तुनो व्यावर्तकत्वाभावे सिद्धान्ते ताटस्थ्योक्त्या
परिहारः । एतेन लक्ष्यसमसत्त्वस्यैव लक्षणत्वमित्यपि ध्वस्तम् ,
लक्षणत्वस्याप्यभावप्रसङ्गादेव । शुक्तिरजतस्यापि तच्छुक्तिव्यावर्तकत्व-
वेति कथं मिथ्यावस्तुनो लक्षणत्वासम्भवः । दृष्टान्तश्च विषमः,
त्वं हि नित्यंनासम्बन्धात् न तदन्यस्माद्व्यावर्तयति , कारणत्वन्तु
तम् , तत्कथमन्यस्मान्न व्यावर्तयेत् । एवं सिद्धान्तो प्यनुपपन्नः,
स्थ्योक्तिवैयर्थ्यात् । नहि ताटस्थ्यं मिथ्यावस्तुनो लक्षणत्वोपपादकम् ,
नु साक्षादसम्बन्धिनः । मिथ्यात्वे हि साक्षात्सम्बन्धवत् परम्परा
न्धोप्यनुपपन्न एव । दृष्टान्तश्च विषमः, रजतभानविषयत्वस्य
स्यैव शुक्तिस्वरूपलक्षणत्वात् । बाधानन्तरमपि शुक्तौ पूर्वरजतस्य
मानतां ये जानन्ति मिथ्यावादिनस्तेषां रजतमपि शुक्तिस्वरूप-
णमेव, शुक्तिस्वरूपसम्बन्धादितरस्माद्व्यावृत्तिबुद्ध्युपयोगाच्च । तस्मा-
स्थ्योक्तिर्व्यर्था । साक्षादसम्बन्धात् पूर्वपक्षकरणे हि ताटस्थ्योक्ति
फला स्यात् । ननु - पूर्वपक्षे जगत्कारणत्वस्य ब्रह्मस्वरूपलक्षणत्वं न
भवति, तस्य मिथ्यात्वे ब्रह्मणो मिथ्यात्वप्रसङ्गात् , सत्यत्वे तस्य
ह्यनिरूप्यत्वेन निरूपकसत्यत्वमन्तरेण निरूप्यसत्यत्वाप्रसिद्ध्या
ञ्चस्यापि सत्यत्वप्रसङ्गेन निर्विशेषस्वरूपलक्षणत्वासम्भवादिति विव-
तम् , अतस्तटस्थलक्षणत्वेन परिहारस्सिद्धान्ते युक्त इति चेन्न ; —
क्षात्सम्बन्धि स्वरूपलक्षणम् , परम्परासम्बन्धविशेषवत् तटस्थलक्षणमि-
म विभागात् । नहि स्वरूपमेव लक्षणं सम्भवति, लक्षणं हि नाम
स्वरूपे ज्ञातेपि इतरव्यावृत्त्यवबोधाय जिज्ञासायोग्यं वस्तु, नच

विरहात्, तज्ज्ञानेपि तदबुद्धौ न व्यावृत्तिबुद्धये स्वरूपजिज्ञासा स्य
किन्तु धर्मजिज्ञासा । नच निरंशे ज्ञाताज्ञातस्वरूपद्वयं वक्तुं शक्य
किंचैवं पूर्वपक्षे सति निरूपकस्य मिथ्यात्वेपि निरूप्यसत्यत
प्रपञ्चाभावरूपे ब्रह्मण्यङ्गीकृतत्वेन तथैव परिहारे कर्तुं शक्ये सिद्
ताटस्थ्योक्तिर्व्यर्था । किंचात्र तटस्थलक्षण एव सूत्रे शब्दतः
पन्नेपि स्वरूपलक्षणपरत्वं किमर्थमिष्यते ? यदि परिमळोक्तरीत्या
स्थेन शाखाग्रेण देशान्तरस्थवस्तुव्यावृत्तिसिद्धावपि तद्देशस्थनक्षत्र
वृत्तिवदिहापि कारणत्वेन शङ्कार्हवस्त्वन्तराद्व्यावृत्तिर्न सिद्ध्यतीति
स्वरूपलक्षणेपि तात्पर्यमित्युच्येत, तदा तटस्थलक्षणं व्यर्थम् । न
नन्दाद्ध्येव खल्विमानि जायन्त इत्यानन्दस्य जगत्कारणतयोपदिष्ट
तादृशस्वरूपलक्षणप्रतीत्यर्थमेव तटस्थलक्षणकीर्तनमिति चेन्न, – त
लक्षणप्रतिपन्नस्वरूपातिरिक्तस्वरूपस्य स्वरूपलक्षणेन प्रतिपत्तौ सा
त्वस्यावर्जनीयत्वात् । किञ्च - कारणत्वस्यान्यत्र सम्भावनायाम
स्वरूपे कथञ्चान्यत्र सम्भावना ? तेन विषमो दृष्टान्तः, प्रकृष्टप्रक
वदन्यत्र सम्भावनाविरहासिद्धेः । किंच तटस्थलक्षणेन स्वरूप
पत्तिरस्ति नवा ? नान्त्यः, लक्षणत्वस्यैवाभावप्रसङ्गात् । आद्ये
स्वरूपलक्षणम् ? इतरव्यावृत्तिबुद्धिजननार्थमिति चेत् ? किमस्याः प्र
पूर्वप्रतीतिवैलक्षण्यम् ? पूर्वाप्रतीतानन्दत्वगोचरतेति चेद्धन्तदुस्त्यज
तीयत्वम् । पूर्वाप्रतीतानन्दस्वरूपगोचरतेत्युक्तावप्ययमेव दोषः ।
सत्यंज्ञानमित्येतदपि स्वरूपलक्षणमित्युच्यते, तदप्यनुपपन्नम्, अ
व्यावृत्तिबुद्धिहेतुतया हि तस्य लक्षणता वाच्या, स्वरूपमात्रस्य
नाधिकरणलक्षणवाक्येन लक्षणया प्रतीतौ कथं व्यावृत्तिसिद्धिः ?
त्वादिविशिष्टैकदेशलक्षणत्वाद्व्यावृत्तिबुद्धौ वैशिष्ट्ये मानान्तरं वा
तत्रापि लक्षणायामुक्त एव दोषः । तस्य मुख्यार्थत्वाङ्गीकारे चातद
कत्वप्रसङ्गः । इष्टापत्तावानन्दस्वरूपाविशेषासिद्धिः । किंच – सत्य

र्थमिति चेत् ? किन्तत्सत्यस्वरूपादन्यत् ? तथासत्यद्वैतभङ्गः, ाधिकरण्यभङ्गश्च । अस्तुवा अभेदे सत्येव स्वरूपभेदः, तथा- पदेनास्य स्वरूपस्य लक्षणेत्ययन्नियमः कुतः ? नहि गंगाया ोषसम्बन्धित्ववत् सत्यत्वस्य ज्ञानस्वरूपव्यावृत्तसत्यसम्बन्धित्वं मेति ।

द्वितीयपक्षे - जीवादिषु रूढ्यङ्गीकारेण पूर्वपक्षो गारुडपुराण :, ब्रह्मजातिर्जीवेत्यादिकञ्चासिद्धमित्याहुः । अतः पूर्वपक्षोप्यनु- । किंच - प्रथमाधिकरणे त्वया सर्वेषामद्वैतवाक्यानां विचारविधि ातब्रह्मशब्दमुख्यार्थत्वानुरोधेनैवान्यथानयनादिहापि तदनुरोधाय वे' त्यस्य तद्बापकाणाञ्चैवान्यथानयनं युक्तमिति । राद्धान्तोप्य- ः, योग्यार्थानुरोधायापि बहूनां वाक्यानामन्यथाकरणे क्रियमाणे र्थानुरोधाय अन्यथाकरणे का विचिकित्सा । "तदेव ब्रह्म परमं ामि" ति परमशब्दो मुख्यपरः, मुख्यत्वरूपोत्कर्षस्यैव परमशब्देन क्षतत्वात्, तदेव ब्रह्मशब्दस्य मुख्योर्थ इति ब्रह्मवादिनो वदन्ती । किंच - ब्रह्मणश्चिदचिद्विलक्षणत्वचिन्तायाः कथमुपोद्घाते निवेशः ।

अन्यपक्षो जघन्य एव; तत्र पूर्वपक्षो नोपपन्नः, यतो जायन्ते त्युक्तौ कथं लक्षणवैय्याधिकरण्यशङ्का ? नहि जातं ब्रह्मेत्युक्तम्, जन्मनो लक्षणत्वं प्रतीयेतासम्भवश्च शंक्येत, यत इति यच्छब्द- ष्टस्य कारणत्वावगमात् जन्मादेस्समभिव्याहाराच्च जन्मादिकारणं वगमेन कारणत्वमेव लक्षणमिति स्वरसतोवगम्यते । नापीदन्त्वं जन्मादि । सिद्धान्ते ताटस्थ्योक्तिरनुपपन्ना, कारणत्वस्य स्वरसतो- ातया प्रतीयमानस्य स्वरूपगतलक्षणत्वात् । नच जन्मादिकारणत्वा- ा जन्मादिकमेव लक्ष्विति वाच्यम्, तथासति लाघवेन जन्मैक

ारण्येन प्रत्यवस्थितं पूर्वपक्षिणं प्रति समानाधिकरणधर्मोक्त्यातन्नि-
ासस्य प्रयोजनत्वादिदमपि मृष्यताम् । लघुभूतस्य व्यधिकरणस्यापि
लक्षणत्वोपपादनसम्भवात् गुरुणो लक्षणत्वमनुपपन्नमिति चेन्न ; – सम्ब
न्धार्थं कारणत्वस्यापेक्षिततया लाघवासिद्धेः । अन्यथा सम्बन्धविशेषेण
जगत एव लाघवात् लक्षणत्वप्रसङ्ग इति ।

इतरपक्षे आदिपदे तदाद्यर्थकत्वस्य वक्तव्यतया बहुव्रीह्यर्थल
क्षणाप्रसङ्गः । सर्वो द्वन्द्व इत्येकवद्भावश्च जघन्यः ॥ २ ॥

इति जन्माद्यधिकरणं द्वितीयम् ।

---

## अथ शास्त्रयोनित्वाधिकरणम् ।

ननु – 'यदेवे' त्यादिवाक्यं जगत्कारणत्वेनेश्वरं प्रतिपादयतीत्युप
मयुक्तम्, अनुमानेन तत्सिद्धेरित्याह—

१ - शास्त्रयोनित्वात् ॥ १ - १ - ३ ॥

ननु 'यतोवे' त्यादिवाक्ये उपादानत्वस्यापि प्रतिपन्नत्वात्तस्
चानुमानागोचरत्वात्तेन रूपेण प्रतिपादनसम्भवात् कथमीश्वरस्य तद्वा
क्यप्रतिपाद्यत्वाक्षेप इति चेत्? उच्यते, नैयायिकोह्यत्र पूर्वपक्षी, स
जगत ईश्वरोपादनकत्वस्य स्वानभिमतत्वात् तदनुपादानत्वसाधककुतर्क
बलेन श्रुतेरतदर्थतां आनुमानिकेश्वरानुवादरूपतां उपादानत्वादिप्रति
पादकांशस्य तदर्थवादरूपताञ्च मन्वानः कारणवाक्यानां ब्रह्मण्यप्रा
माण्यमापाद्य तद्विचारारम्भमाक्षिपति । सिद्धान्तेचानुमानन्निराक्रियते
अनुपादानत्वसाधककुतर्कस्तु प्रकृत्यधिकरणे निराकरिष्यते।

अत्र संशयः – ईश्वरोनुमेयो नवेति। अत्र पूर्व पक्षः – ईश्वरं

वेतानि जन्यानि, अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगो
परोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि, समवेतत्वे सति प्रागभावप्रतियोगित्व
घटादिवदित्यनुमानादनित्यज्ञानवदस्मदादिजन्यत्वस्य क्षित्यादौ बाध
धर्मताबलान्नित्यज्ञानादिमान् जनकतया सिद्धयति । अतएव
सर्वज्ञत्वमपि, ज्ञानादौ नियतविषयकत्वस्य सन्निकर्षादिरूपहेतुप्र
तया निर्हेतुके तत्र कारणव्यावृत्त्या नियतविषयकत्वस्यापि व्यावृ
ननु– पक्षे उपादानपदं यत्किञ्चिदुपादानपरम्, स्वोपादानपरं
नाद्यः, रूपाद्युपादानशङ्खादिगोचरजन्यकृतिजन्यतया शब्दादौ
च्छेदकाव्याप्तेः; नान्त्यः, क्षित्यादौ स्वोपादानगोचरजन्यकृत्यप्रसि
तदजन्यत्वाप्रसिद्धेरिति चेन्न;- स्वोपादानगोचरजन्यकृतिजन्यत्वाव
ये घटादयस्तद्भिन्नत्वस्य विवक्षितत्वात्, तस्य च शब्दे क्षित्यादौ
विकल्पात् । वस्तुतस्तूपादानगोचरकृतित्वावच्छिन्नजनकत्वाप्रतियं
विवक्षितम्, अतो नोक्तदोषावकाशः, स्वविषयसमवेतकार्यं
कृतेरुक्तरूपेण हेतुत्वात् । अतएव न स्वपदान्तर्भावेनाननुगमश
स्याप्रवेशात् । नच स्वविषयसमवेतकार्यं प्रति स्वोपादानगोच
त्वेन हेतुता, नतूपादानगोचरकृतित्वेनेत्यप्रसिद्धिरिति वाच्यम्, उ
गोचरकृतित्वं यत्र कारणतावच्छेदककोटिप्रविष्टं तादृशकारणत्वाप्रति
स्य विवक्षितत्वात् । स्वोपादानगोचरकृतित्वस्यावच्छेदकत्वेप्यु
गोचरकृतित्वं प्रविष्टमेव । अस्तुवा क्षित्यादेः प्रत्येकं पक्षता,
नक्षतिः, पक्षसमे व्यभिचारसंशयस्यादोषत्वात् । तत्तदुपादान
मपि ज्ञानं पक्षधर्मताबलान्नित्यमित्युक्तरीत्या सर्वज्ञसिद्धिः ।
स्वोपादानगोचरज्ञानादिमज्जन्यत्वं विवक्षितम्; नचार्थान्तरम्,
पादानगोचरज्ञानादेरन्यकार्यहेतुत्वेऽतिप्रसङ्गात्, परिशेषात्स्वोपादा

कार्यत्वादित्यनुमानं कृतिजन्यत्वं विषयीकुर्वत् लाघवादेककृतिजन्यत्व विषयीकरोति, तथाचादृष्टाद्वारिका तद्द्वारिकावा जन्या कृतिः कार्यमा क्षित्यादिमात्रे वा नैको हेतुस्सम्भवतीति अगत्या अतिरिक्तेश्वरसिद्धिः नच कार्यमात्रे क्षितौ वा कृतिजन्यत्वं सिद्धमिति सिद्धसाधनमिति वाच्यम् अनुमितिसमानाकारसिद्धेरेव प्रतिबन्धकत्वात् ; अन्यथातिप्रसङ्गात् । नचेहस एककृतिजन्यत्वस्यानुमितिप्रकारस्य कार्यत्वावच्छिन्ने सिद्धिविरहात् वस्तुतस्तु कार्यं प्रति ज्ञानेच्छाकृतीनां हेतुता, उपादानं च तत्र हेतु नचानयोरनासन्नयोः कारणत्वम् , इति — विषयविषयिभावः कारणप्रत्य सन्निर्घटादावनयोः कल्पितः, — इति क्षित्याद्युपादानस्यापि तज्जन ज्ञानादिना सह स एव सम्बन्धः, क्लृप्तत्वात् , इति- अदृष्टजनकज्ञानादि सह क्षित्याद्युपादानस्य तत्सम्बन्धाभावात् न तदादाय सिद्धसाधनमि क्षित्याद्युपादानगोचरज्ञानादिमदीश्वरसिद्धिः ।

नन्विन्द्रियादिनिरूपितकार्यतावच्छेदकं लाघवात् प्रत्यक्षत्वम् एवं ज्ञानजन्यतावच्छेदकमिच्छात्वम् , इच्छाजन्यतावच्छेदकं कृतित्वमि कथं नित्यप्रत्यक्षेच्छाकृतिसिद्धिरिति चेन्न ;- प्रत्यक्षत्वमिच्छात्वं कृतित्वं कार्यतावच्छेदकं कल्पयित्वा कर्तृजन्यतावच्छेदकं घटत्वपटत्वादिकमनन कल्प्यताम्—— उत जन्यत्वविशेषितज्ञानत्वादित्रयं कार्यतावच्छेदकं कल यित्वा कर्तृजन्यतावच्छेदकं कार्यत्वमेव सर्वसाधारणं कल्प्यतामि विशये प्रथमपक्षे बहूनां कर्तृजन्यतावच्छेदकत्वकल्पनाया अतिगौ वग्रस्ततया लाघवात् द्वितीयपक्ष एवाश्रीयते ।

ननूक्तानुमाने शरीरजन्यत्वमुपाधिः; नच तस्य साध्यव्यापक ग्राहकतर्काभावादप्रयोजकत्वम् , कार्यकारणभावस्यैव विपक्षे बाधकत्वात

ादिकम् , अननुगमात् ; नापि कार्यत्वम् , उभयमते क्षित्यादौ
चारात् , किन्तु कर्तृजन्यत्वमेव , लाघवात् , अनुगतत्वाच्च ;
कार्यत्वावच्छेदेन कर्तृजन्यत्वं गृहीत्वा उत्तरकाले शरीरजन्यता-
ादकतया कल्पनीयम् , अन्यथा कर्तृजन्यत्वाग्रहेण कस्य शरीरजन्यता
ादकत्वं कल्प्येत , तथाच उपजीव्यत्वात् प्राथमिकत्वाच्च कर्तृजन्यताव-
कतया गृहीतकार्यत्वाबाधेनैव शरीरजन्यतावच्छेदककल्पना, तदबाधश्च
र्तृजन्यत्वस्य शरीरजन्यतावच्छेदकत्वे — इति घटत्वादिकमननुगतमपि
रजन्यतावच्छेदकत्वेन कल्प्यत इति चेन्न,- शरीरजन्यतावच्छेदकत्वेन
जन्यत्वकल्पनायां कर्तृजन्यत्वग्रह एवोपजीव्यः, नतु कार्यत्वावच्छेदेन
जन्यत्वग्रहः, येनोपजीव्यबाधस्स्यात् , तथाच जन्यत्वपुरस्कारेणैव
घटादौ कर्तृजन्यत्वग्रहाच्छरीरजन्यतावच्छेदकत्वकल्पना तस्य सम्भ-
वेति चेन्न; - उपजीव्यत्वाभावेपि वस्तुलाघवमस्त्येव, कर्तृजन्यत्वस्य
रजन्यतावच्छेदकत्वापेक्षया जन्यत्वस्य कर्तृजन्यतावच्छेदकत्वे लाघ-
् । नचात्र भिन्नविषयतया लाघवानवतारः, परस्परविरोध्यर्थपर्यव-
येनोर्लघुगुरुप्रमाणयोरेव लाघवावतारात् , अत्रापि कर्तृजन्यत्वजन्यत्व
मध्ये शरीरजन्यतावच्छेदकत्वकर्तृजन्यतावच्छेदकत्वान्यतरकल्पनायां
त्यादिषु कर्तृजन्यत्वं तज्जन्यत्वं वा स्यादिति विरुद्धार्थपर्यवसाने
घवावताराविरोधात् । वस्तुतस्तु शरीरत्वं साक्षात्प्रयत्नाधिष्ठितत्वमेव,
जन्यत्वं क्षित्यादावप्यस्ति, तज्जनकपरमाण्वादेरीश्वरप्रयत्नसाक्षादधिष्ठि
वात् , अतस्साधनव्यापकत्वान्नायमुपाधिरिति ।

सिद्धान्तस्तु - किमत्र लोकदृष्टकार्यकारणभावानुरोधेन कर्ता साध्यते
तान्यथा ? आद्ये घटादिकार्ये शरीरव्यापारस्य तत्र ज्ञानस्यच कार
ताग्रहादिहापि तथा साधने सर्गाद्यसमय ईश्वरशरीरसर्गार्थं शरीरान्तर
र्गापेक्षया तस्यापि तथापेक्षया तथानवस्था । द्वितीये साधनमाकस्मि
व स्यात् । अतएव "नावेदविन्मनुते तं बृहन्तं" "तं त्वौपनिष

विषयत्वे चिकीर्षाकृत्योरपि सर्वविषयत्वप्रसङ्गः, अनादिसिद्धे तद्बाध
सिद्धेरेव चिकीर्षाकृतिविरहप्रयोजकतया घटोत्पत्त्यनन्तरं तयोरसम्भव
नित्यत्वसम्भवः, तस्मान्नित्यताङ्गीकारे तयोस्सर्वविषयत्वमपरिहार्यमेव । य
लाघवात् एककृतिविषयत्वासिद्धिरुक्ता, सानुपपन्ना, अदृष्टाद्वारकत्व
जन्यत्व एव लाघवेनापूर्वकल्पने गौरवात्; तथाच सिद्धसाधनं दु
रिहरम् । यच्चोक्तं ज्ञानादीनामुपादानस्य च हेतुत्वे सति प्रत्यास
पेक्षायामन्यत्र सिद्धत्वाद्विषयविषयिभाव एव प्रत्यासत्तिरिति, त
ज्ञानादीनां घटादिकार्ये साध्ये उपादानेन विषयत्वरूपासत्तिरिव तत
ज्ञानादिसाध्यादृष्टसमवधानरूपासत्तिरपि दृश्यते, इयंचेहाप्यस्त्येवेति त
मुपादानविषयत्वकल्पना, क्षित्यादेर्ज्ञानादिसाध्यत्वेतिप्रसङ्गवारणस्य
वतैव सिद्धयोपादानविषयत्वस्याकल्पनीयत्वात् । शङ्खध्मानादावपि
परोक्ष्यादेरुपादानागोचरस्यैव जनकत्वं दृश्यते, अतः कथमुपाद
गोचरत्व नियमः? यदप्युक्तं घटत्वादीनामनन्तानां कर्तृजन्यतावच्छेद
कल्पनापेक्षया कार्यत्वस्यैव तत्कल्पनं लघ्विति, तन्न, कृतेश्शरीरव्य
तत्र चिकीर्षायास्तत्र ज्ञानस्यच जनकत्वावधारणेनोक्तलाघवानवतारा
घटादेः कृतिजन्यत्वेपि शरीरव्यापारद्वारैव कृतेर्जनकत्वावधारणान्न
रपेक्ष्येण हेतुत्वसम्भवः । यद्यपि परमाणूनां तमसो वा साक्षात्प्र
धिष्ठेयत्वेन शरीरत्वात्तत्प्रेरणमुखेनैव कार्योत्पादकत्वाच्छरीरव्यापारद्वा
कृतेरुपपद्यते, तथापि ज्ञानेच्छाकृतीनां द्वारद्वारिभावो नित्यानामनुप
तेषामनित्यत्वाङ्गीकारे चिकीर्षायास्सुखदुःखाभावान्यतरोद्देशसाध्य
तयोश्च कर्मसाध्यतया ईश्वरस्य कर्मवश्यत्वञ्च प्रसजेत् ।

सूत्रार्थस्तु— शास्त्रम्, योनिः- कारणं यस्य तच्छास्त्रयोनीति बहुव्री
हिसमासे ... निर्देशात् ... विशेषपर्यवसानेपि त

। धर्मिनिर्देशकपदाकांक्षया बुद्धिस्थस्य ब्रह्मज्ञानपदस्यैव सुखे-
ो भविष्यतीत्यभिप्रेत्य सूत्रलाघवार्थमिह धर्मिनिर्देशो न कृतः।
व विचारपद एव प्रयोक्तव्येपि जानातेः प्रयोगः। एवञ्च
योनिः कारणं प्रमाणमिति निर्देशस्सिद्धार्थकथनपरः। अथवा
दो ज्ञापकहेतुपरः, शास्त्रप्रमाणकत्वात् कारणब्रह्मजिज्ञासा कार्येति
ामर्थात् ब्रह्मण एव धर्मित्वलाभ इति।

परेतु - इह लक्षणीकृतजगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं पूर्वसूत्रे अस्येति
चितस्य जीवव्यावर्तनस्य स्थिरीकरणार्थं वेदकारणत्वेन दृढीकुर्वता
सूत्रकारेण वेदस्य नित्यत्वात् ब्रह्मणस्सर्वकारणत्वमनुपपन्नमित्यपि
निराक्रियते। तन्निराकरणञ्चानुषङ्गिकम्। अनुषङ्गलब्धेऽर्थे च न
ङ्गत्यपेक्षा, अतो वेदानित्यत्वव्यवस्थापनं वियत्पादे संगतन्नात्र
क्तमिति शङ्का नोत्तिष्ठति।

"अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद"
वाक्यं ब्रह्मणो वेदकारणत्वेन सर्वज्ञत्वं साधयति
सन्देहे — न तावद्वेदवकर्तृत्वेन तस्य तत्साधनम्, वेदस्य
त्वापातात्; नापि वेदोपादानत्वेन, कार्योपादानयोरेकशक्तिमत्त्वस्य
डघटादिषु ब्रह्मतत्कार्यान्तरेषु च बहुशो व्यभिचारदर्शनेनाप्रामा-
या वेदस्य सर्वार्थप्रकाशनशक्तिमात्रेण ब्रह्मणि तदसिद्धेः; तत्सिद्धौ
ः स्वयमज्ञ एव जीवानान्तत्तदर्थगोचरप्रकाशजनक इति ब्रह्मणो-
यैव प्रकाशकत्वापत्तेश्च; एवमपि ब्रह्मणो वेदाविषयनदीवालुका
ादिप्रकाशकत्वालाभाच्च; इति पूर्वः पक्षः। राद्धान्तस्तु- वेदकर्तृत्वेन तस्य
धयत्येव, कर्तृत्वमिह नार्थमुपलभ्य रचयितृत्वम्, येन सापेक्षत्व-
ाप्पौरुषेयत्वमापद्येत; नाप्युच्चारयितृत्वमात्रम्, अध्यापकसाधारण्येन
... महोपाध्यायता-

हि तदा ब्रह्मणः स्यात्; किन्तु ब्रह्म स्वतन्त्रमप्यध्येतॄणा
र्थसिद्धये नियतक्रमस्वराद्यपेक्षमाणं पूर्वपूर्वकल्पेषु स्वकृतेनैव निय-
क्रमादिना विशिष्टान्वर्णान् करोति सर्गादौ, "धाता
पूर्वमकल्पयत्" इति श्रुतेः। एतदेवचाध्यापकविलक्षणं ब्रह्मणो-
र्तृत्वं यदन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव क्रमेण विशि-
वैदिकवर्णेषु कर्तृत्वम्, तथाचातीतानागतानन्तकल्पस्थवैदिकक्रम-
दिप्रातिसन्धानं अनन्तवैदिकवर्णपदवाक्यप्रतिसन्धानञ्च ब्रह्मणो न
न्तरात्, तस्यान्तःकरणसम्बन्धाभावेन मानान्तराप्रवृत्तेः; किन्त्वना-
वरूपचैतन्यबलादिति संकोचकाभावाद्यावत्स्वसंसृष्टप्रकाशवत्सर्वज्ञं ब्रह्म
च्यति। आनुमानिकेश्वरवादिनामपि सर्वज्ञसिद्धिरेवमेव, सर्वस्यापक्ष-
हेतुतया सर्वगोचरज्ञानासिद्धेः। वेदोपादानत्वेन वा तस्मिन् तत्सा-
ते, दीपगतायाः प्रकाशनशक्तेः तदुपादाने वह्नावपि दृश्यमानतय
कारणयोरेकशक्तिकत्वस्य औत्सार्गिकत्वेन वेदगतायास्सर्वार्थप्रकाशन
बाधकाभावेन तदुपादाने ब्रह्मण्यपि प्राप्तेः। नहि घटगतोदकाहरण
मृत्पिण्ड इवान्धकारगतावरणशक्तेः प्रकाशरूपत्वेन श्रुतिसिद्धे ब्रह्मणी
गतसर्वार्थप्रकाशनशक्तेस्तं प्रति परिणामितयोपादाने नीहारेणप्रावृ
दिभिरावरणत्वेन सिद्धे अज्ञान इव वेदगतसर्वार्थप्रकाशनशक्तेर्ब्रह्मणि
ोस्ति। यद्वा वेदगता सर्वार्थप्रकाशनशक्तिस्तदुपादानगता, कार्य
प्रकाशशक्तित्वात्, दीपप्रकाशशक्तिवदिति विशिष्यानुमीयते, अत उद
हरणादिशक्तौ न व्यभिचारः। यद्वा तदुपादानगतत्वमात्रं साध्यम्
; यावत्तदुपादानगतत्वम्, तच्चाबाधितं ब्रह्मगतत्वमात्रमादाय सिद्ध्य
ति न कश्चिद्दोषः। नच वेदवद्दीपवच्च ब्रह्मणोपि जीवज्ञानहेतुत्वेन सा
वस्येदिति न सर्वज्ञसिद्धिरिति वाच्यम्, स्वप्रकाशसर्वव्याप्तचैतन्यरूपत्वे
तिसिद्धे ब्रह्मण्यावरणनिवृत्त्यनुकूलायाश्शक्तेः पक्षधर्मताबलात् साक्षात्तदनु
...मिति सि:

देकार्यानुकूलतयानुमीयमानमपि ज्ञानमिच्छाद्वारैव तदनुकूलमनुमानवादिभि
नुमीयते, एवमपि वेदविषयार्थगोचरज्ञानालाभेन सार्वज्ञ्यासिद्धिरिति शं
पूर्वन्यायेनैव परिहरणीया । ननु ब्रह्मणस्स्वसंसर्गियावदर्थप्रकाशवत्त्वे
ऽतीतानागतवस्तुज्ञानासिद्धेः कथं सार्वज्ञ्यसिद्धिः? उच्यते, उक्तरीत
ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसिद्धौ तज्जनितसंस्कारवत्त
च स्मरणोपपत्तेः अतीतसकलवस्त्ववभाससिद्धिः । नच ज्ञानसूक्ष्मावस्
रूपस्संस्कारो नित्यचैतन्ये न भवेदिति शङ्क्यम् , तस्य स्वरूपेणाका
त्वेपि दृश्यवच्छिन्नरूपेण कार्यत्वोपपत्तेः। सृष्टेः प्राङ्मायायास्सृज्यमाननिखि
पदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात् तत्साक्षितया त
पाधिकस्य ब्रह्मणोपि तत्साधकत्वमित्यनागतवस्तुविधानसिद्धिरित्येवं ब्र
चैतन्यस्य कालत्रयवर्तिवस्तुविषयत्वसिद्धिरिति केचिदाहुः ।

अन्येतु स्वरूपज्ञानेनैव ब्रह्मणस्स्वसंसृष्टावभासकत्वात् सर्वज्ञत्व
अतीतानागतयोरविद्याचित्रभित्तौ विमृष्टानुन्मीलितचित्रवत्संस्कारात
सत्त्वेन तत्संसर्गस्याप्युपपत्तेः; नतु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्, "त
भान्तमनुभातिसर्वमि" ति सावधारणश्रुतिविरोधात् । सृष्टेः प्रागेक
द्वितीयमित्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रळ
वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविव
ईक्षणे तत्पूर्वके महाभूतादौ च सृष्टत्वाभावप्रसङ्गाच्चेति ।

यत्त्वत्र भाष्ये वर्णकान्तरं प्रदर्शितम्, तदित्थम्— पूर्वसूत्रे जीवे
त्कारणत्वस्यासम्भावना ब्रह्मणि तत्सम्भावना चा स्य यत इति पदाभ
र्शिता, अतो नैय्यायिकाद्यभिमतेश्वरानुमानमेवोपन्यस्तमिति स्याद
तन्मूलपूर्वपक्षनिराकरणार्थं इदं वर्णकम् । "तंत्वौपनिषदं पुरुषम्पृच्छ
त्यातिश्रुतिर्ब्रह्मण उपनिषदेकगम्यत्वं प्रतिपादयितुं शक्नोति

नच कार्यप्रयोजका अपि बहवो गुणाः श्रुतिसिद्धाः स्वीक्रियन्त, त ।लङ्ग
सिद्ध्यन्तीति वाच्यम्, तावता कल्पितस्य सगुणेश्वरस्यौपनिषदत्वसिद्ध
वपि जिज्ञास्यस्य निर्विशेषप्रत्यक्चैतन्यरूपस्य ब्रह्मणस्तदसिद्धेः । प्रतीः
प्रत्यक्षसिद्धत्वात्, तत्र सकलविशेषाभावस्य प्रपञ्चमिथ्यात्वानुमानेन सिः
तस्य सच्चिदानन्दरूपतायाश्च अहमस्मि अहमुपलभे इत्यनुभवाभ
निरुपाधिकप्रेमास्पदत्वेन च सिद्धेः, सर्वशरीरेषु तदैक्यस्य च सर्वेषु क
पुटेषु श्रोत्रैक्यस्येव लाघवात्सिद्धिरिति पूर्वः पक्षः । सिद्धान्तस्तु— उ
ह्रतश्रुतिरुपनिषद्गम्यत्वं प्रतिपादयितुं शक्नोति, प्रपञ्चमिथ्यात्वानुमान
लाघवतर्कस्य च तेन तेन प्रत्यनुमानेन प्रतितर्केण च पराहततया श्रु
ननुगृहीतान्मानान्तरान्न निर्विशेषनिर्द्वन्द्ववस्तुसिद्धिः, निरतिशयानन्दे
ञ्चिदपि मानान्तरानवताराच्चेति । आद्यवर्णके ब्रह्म सर्वज्ञमिति साध
नाध्याहृतेन शास्त्रस्य वेदस्य योनित्वात् - कर्तृत्वादुपादानत्वाद्वेति
हेतोरन्वयः । द्वितीयवर्णके ब्रह्म वेदान्तप्रतिपाद्यमित्यस्मिन् साध्ये शास्त्र
योनिः - प्रमाणं कारणमस्य, शास्त्रयोनि, तत्त्वात्— शास्त्रप्रमाणकत्वा
सौत्रहेतोरन्वयः । नचाद्यवर्णके शास्त्रग्रहणं व्यर्थम्, लौकिकवे
साधारणशब्दयोनित्वमात्रेण सर्वज्ञत्वसिद्धेरिति वाच्यम्; आनुषा
वेदनित्यत्वमूलसर्वकारणत्वासम्भवशङ्कानिराकरणार्थं द्वितीयवर्णकोपयोग
यर्थं च शब्दमात्रोपलक्षणतया शास्त्रग्रहणोपपत्तेः । नच द्वितीयवर्णके
स्साध्यावैशिष्ट्यम्, तत्र हेतोरब्भक्षादिवदवधारणगर्भतया शास्त्रैका
कत्वादित्यर्थकस्य प्रमाणान्तरागम्यत्वादित्यर्थे पर्यवसानादिति ।

अपरेतु— उक्तं जन्मादिकारणत्वं किं विष्णवसाधारणम्, उ
विचारः । हरविरिञ्च्यादीनामपि जगदनेककर्तृकं विचित्रकाः
हरो जन्मकारणं सर्वज्ञत्वादित्याद्यनुमानैः पाशुपताद्यागमैश्च जगत
त्वावधारणेनासाधारण्यासम्भवात् जिज्ञास्ये ब्रह्मण्यनूद्यमानजगत्कार
[illegible] निर्भागमयस्कमिति पर्वः

त्कारणस्य धर्मादिवच्छास्त्रप्रमाणकत्वाच्छास्त्रस्य श्रुतिपुराणभारतमूलरामा
ापञ्चरात्रतदनुसारिस्मृत्यादिरूपस्य विष्ण्वेकनिष्ठ जगत्कारणत्वप्रतिपाद
त्वादनुमानस्य प्रत्यनुमानादिना दूषयितुं शक्यस्य स्वातन्त्र्येणादृष्टार्थ
श्चायकत्वासम्भवात्, पाशुपतादीनां मोहशास्त्रत्वप्रसिद्धेः, जगत्कारणत्वं
ष्णवसाधारणमिति सिद्धान्तः ।

अन्येतु — परोक्तं वर्णकद्वयं वर्णयन्ति । सूत्रार्थञ्चैवमाहुः —
ास्त्रस्य प्रामाण्यात जन्मादिलक्षणं ब्रह्म भवतीति ।

इतरेतु— पूर्वोक्तलक्षणमजिज्ञास्यसाधारणमित्यस्वरसादाह- **शास्त्र**
**ोनित्वात्** । तद्ब्रह्म, शास्तृ - सर्वनियन्तृत्वलक्षणम्, कथमिदं लक्षण
तः ? प्रधानेपि सम्भवादित्यत्राह अयोनित्वात् । योनिः प्रकृतिः
ोनिभिन्नत्वात्, विभुचिदितरशासनागोचरशक्तस्वभावत्वादित्यर्थः । ननु
ायोनित्वे स्थिते तन्मूलमनितरसाधारणमुक्तलक्षणं स्थास्यतीत्याशङ्काय
नपि शास्त्रयोनित्वादित्येवोत्तरम् । अयोनित्वशास्तृत्वे ब्रह्मणस्तः, शा
प्रमाणकत्वात् । योन्यन्यत्वे "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादि शा
प्रमाणम् । शास्तृत्वे तु "एतस्य वा अक्षरस्य प्रशासने गार्गी" त्यादीति

अत्र प्रतिज्ञाध्याहाररूपसाधारणदूषणं स्पष्टमेव । आद्ये
सर्वज्ञत्वमिह न समर्थनीयम्, प्रयोजनाभावात् । नच जीवव्यावृ
प्रयोजनम्, नारकित्वस्याप्युपलक्षणतया लक्षणत्वसम्भवेन जीवव्यावृ
कार्यत्वात् । एवं जीवव्यावृत्तेरकार्यत्वाद्वेदकारणत्वस्य सार्वज्ञ्यानुपपा
तया वक्ष्यमाणत्वाच्च वेदकारणत्वस्य प्राधान्यापत्त्या वियत्पाद एव
सूत्रस्य कर्तव्यता दुर्निवारा । किंच वेदस्यानादित्वे तज्जनकत्वाभा
जगत्कारणत्वशङ्का नोत्तिष्ठति, अविद्यां प्रति ब्रह्मणो जनकत्वाभा

ब्रह्मणोन्तःकरणसम्बन्धाभावादनावृतचैतन्येन सम्बन्धात् सावज्ञ्य
ाम् , तेन वेदवक्तृत्वं न सर्वज्ञत्वोपपादकमिति स्वयमेवाविष्कृ
एवंच 'यस्सर्वज्ञ' इत्यादि श्रुतिष्वभीष्टदोग्ध्रीषु जाग्रतीष्वपि
न्यगृहे भिक्षाटनोक्तिरुन्मादमेव व्यनक्ति । यदुच्यते - वक्तरि
ादधिकविषयज्ञानवत्त्वदर्शनात् सर्ववेदवक्तरि तदधिकज्ञानवत्त्वे
सेद्धिरिति ; तत्र किं कृत्स्नस्याप्यर्थस्य वेदविषयत्वं विवक्षितम् ,
आद्ये बाधः । द्वितीये कतिपयार्थविषयज्ञानवत्त्वेनार्थान्तरम् ।
अतीतानागतज्ञानं यद्यनेन सूत्रेण उपपाद्येत तदा कारणत्वा-
गकालीनपूर्वभाविसर्वार्थज्ञानसिद्ध्या कारणत्वमुपपादितं स्यादित्यधि
सप्रयोजनं स्यात् , ब्रह्मणः करणाधीनज्ञानाभावेनातीतानागतयो-
ञावर्तमानतया ब्रह्मासंसर्गितया च शिथिलीकृतस्य सार्वज्ञ्यस्यानेन
दृढीकरणात् । दृढीकरणं च उपन्यस्तेन दुर्मतद्वयपलालबन्धने
नचानेन सूत्रेण संस्काराधीनाविद्यावृत्तिस्सूक्ष्मरूपं वोपपद्यते ।
कल्पनन्तु जन्मादिसूत्र एव सुशकम् । अथ स्यात् , अनेन
शास्त्रकारणत्वं ब्रह्मणः प्रतिपाद्यते, नच तत्प्रतिपादनं फलवत् ,
ःणत्वोक्त्यैव तत्सिद्धेः, अतोस्य सूत्रस्य प्रयोजनाभावात् स्थितस्य
ान्तनीयेति न्यायेन पूर्वसूत्रं कारणत्वलक्षणमात्रतात्पर्यकम् , इदन्तु
ोपपादनतात्पर्यकमिति कल्पनीयमिति चेत् ? उन्मत्तप्रलपितानां
हि स्थितगतिचिन्तां समश्नुते । यथा - अत्रैव शङ्करवाक्यानां
द्गतिर्वाचस्पतिना चिन्त्यते , तद्वाक्यानां या काचित् गतिः कल्प
रेण तद्वाक्यानां या कापि गति रन्येनेति । सर्वज्ञो हि महामीमां-
भगवान् परमपुरुषवरणविषयः तेनैवा विर्भूतस्वरूपः प्रमाणभूत आचार्यो
वेत्रपाणिर्बादरायणो वहितमनाश्शुचाववकाशे प्राङ्मुख उपविश्य महता

…पुनरियता सूत्रेण । यदि तत्तत्सूत्राकरणे अनर्थस्स्यात् करणेचाभ्युद… …स्तदानीमेव सूत्रस्य सप्रयोजनता । तदनुगुणञ्च तात्पर्यं भगवता …ाष्यकारेणानुगृहीतमेव ।

यच्च मतद्वयमुक्तम्, तत्राद्यं द्वितीयेन निरस्तम्; एतदप्यनुप… …न्नम्, सूक्ष्मरूपस्यातीतानागताभ्यां भिन्नत्वे तयोर्ज्ञानासिद्धेः, अभि… …त्वे लयसर्गयोरुत्सादः। अस्तु तर्ह्याद्यः पक्षः, नच 'तमेव भान्तमि' ति …ुतिविरोधः, साहि श्रुतिर्ब्रह्मचैतन्यस्यैव घटादिप्रकाशकत्वमाह, नतु …त्तिन्निषेधति, तथासत्यन्तःकरणवृत्तेरप्युत्सादात्, सर्गकाले वृत्त्युत्प… …ावपि प्रळयकाले नैकत्वावधारणविरोधः, प्रळयकाले सर्वज्ञत्वाभाव …ष्ट एव । पक्षान्तरेपि स्थूलावस्थप्रकाशभावस्यावर्जनीयत्वात् तत्तत्सत्व… …ाले तत्तत्साक्षात्कारसत्वात् सार्वज्ञ्यं सिद्धमेव । नहि सर्वदा सार्वज्ञ्याभावे …ार्वज्ञ्यस्य हानिः, यथापूर्वसर्गार्थन्तु सर्गकाले अतीतानागतज्ञानस्या… …क्षितत्वात्तदानीं वृत्तिरिष्यते, नतु सार्वज्ञ्यसिद्धये - इति । उच्यते …तिबिंबपक्षे बिंबप्रतिबिंबयोरैक्यात्सार्वज्ञ्यं न जीवव्यावर्तकम्; नच प्रत्यङ्… …त्वादिवत् किञ्चिज्ज्ञत्वसर्वज्ञत्वयोर्व्यवस्था, दृष्टान्तासिद्धेः । प्रत्यङ्मुखत्व… …ाङ्मुखत्वभेदादीनां एकस्मिन्नेव मुखे अध्यासेन व्यवस्थाया असिद्धेः …वेस्तरस्तु वेदान्तविजये द्रष्टव्यः ।

उपाध्यवच्छेदपक्षेपि महोपाध्यवच्छिन्नगतस्य व्याप्योपाध्यवच्छिन्न… …ातत्वस्यावर्जनीयत्वेन न जीवव्यावृत्तिसिद्धिः । जीवोपाध्यनवच्छिन्न… …प्रदेश एव सार्वज्ञ्यमिति जीवव्यावृत्तिस्सिध्यत्येवेति चेत्? एवन्तर्हीश्व… …दुःखित्वाद्यभावसिद्धये ईश्वरोपाध्यनवच्छिन्नप्रदेश एव दुःखाद्युत्पत्तेर्वाच… …तया ईश्वरोपाधेरव्यापकत्वप्रसङ्गेन ईश्वरस्य व्यापकत्वन्न स्यात् । एते…

ज्ञानजननशक्तिः, उतावरणनिवर्तनशक्तिः ? आद्ये ब्रह्मण्यपि सैव ;चेत् । अन्त्ये आश्रयासिद्धिः । परम्परासम्बन्धेन वेदगतत्वान्नाश्रया द्धिरिति चेत् ? किं येन सम्बन्धेन शक्तिः कार्यगता तेनैव सम्बन्धेन णगतेति विवक्षितम् , उत येन केनचित्सम्बन्धेन? नाद्यः, ब्रह्मणि जनकत्वमात्रसिद्धिप्रसङ्गात् । न द्वितीयः, उत्सर्गोक्तिविरोधात् । पुदकाहरणावरणप्रकाशनशक्तयो मृत्पिण्डब्रह्मविद्यासु परम्परासम्बन्धेनापि ाताः । ज्ञानजनकत्वेनार्थान्तरत्वाच्च । विशेषानुमानेप्यविद्यावरणनिवृ- नुकूलाशक्तिः किं साक्षादावरणनिवृत्त्यनुकूला विवक्षिता, उत साक्षा- त्परौदासीन्येनानुकूलमात्रा ? नाद्यः, आश्रयासिद्धेः, साध्यवैकल्याच्च । द्वितीयः, सिद्धसाधनात् । वेदतज्जन्यवृत्तिद्वारा तत्सिद्धेः । एतेन र्मतावलमप्यनवकाशीकृतम् । अतएव दृष्टान्तो विषमः । किञ्चावरण त्तिशक्तिमात्रेण न सार्वज्ञ्यम् । अपिच जीवस्यैव ह्यावरणं न ब्रह्मणः । यिवर्णकेपि संगतिस्तावदनुपपन्ना, सूत्रवाक्यार्थभ्रमनिवृत्त्यर्थे अधि- गान्तरारम्भे शास्त्रयोनित्वादित्यत्रापि शास्त्रोपादानकत्वभ्रमनिवारणार्थ ाकरणान्तरमारभ्येत । तथाचानवस्था । एवं सूत्रान्तरेष्वपि । न वाक्यार्थ निराकरणायाधिकरणम् , किन्तु तन्मूलपूर्वपक्षनिराकरणायेत्युक्तावप्यति ङ्गस्समानः ।

अत्र भाष्यादौ कार्यलिङ्गकानुमानमेवोक्तम् , तेनौपनिषदत्वेना ातनिर्विशेषवस्त्वसिद्धेः पूर्वपक्षानुत्थानादसंगतमेवोक्तमिति मत्वा गुरुद्रोहमलावृतनेत्रोयं पण्डितम्मन्यः प्रत्यक्षमिथ्यात्वानुमानाभ्यां सिद्धि ः । कार्यलिङ्गनिबन्धनपूर्वपक्षस्यातिजुगुप्सितत्वम्मन्वानास्सिद्धान्ते तदनु ादूषणेपि व्रीळया नादूषयत् । तत्राशनायाद्यतीतस्वरूपस्य प्रत्यक्षे सिद्धे तन्मूलपूर्वपक्षोप्यनुपपन्नः । विशेष्यस्वरूपासिद्ध्यंगीकारे कार्य ङ्गेनापि सिद्ध्यतीति किमर्थं प्रत्यक्षोपन्यासः । किंच तदुपन्यासस्वरू

यात्वानुमानतन्निराकरणाभ्यां तस्यैवौपनिषदत्वं समर्थितम् , नतु
ण:; निरतिशयानन्दे मानान्तरानवकाशादित्यप्यसङ्गतम् , — निरति
पदेन स्वरूपविवक्षायां तन्मानान्तरगम्यमेवेति मानान्तरानवतारोक्ति
ेधः । निरतिशयत्वविवक्षायां तस्यैवौपनिषदत्वप्रसङ्गः । प्रत्यक्षावल
ेन पूर्वपक्षे सङ्गतिरप्यनुपपन्ना स्यात् । तस्मात् स्वगुरुवदेव स्वय-
यन्थ इति । जगत्कर्तुरेवौपनिषदत्वमङ्गीकृत्य तस्यैवानुमानिकत्व-
ासे भाष्यस्य तात्पर्यमिति यदि भाष्यं समर्थयित्वा पण्डितम्मन्यस्तु
थ्यावादीत्युपेक्ष्यते तदा बाढमित्युत्तरमिति ।

द्वितीयपक्षोप्यनुपपन्नः, पूर्वपक्षानुत्थानात्। अनेकवर्णपदवाक्यानि स्वयमेव
र्वेन् पूर्वपक्षी कथमनेककर्तृकत्वमनुमिनुयात् । अतस्सिद्धान्ते शास्त्रयोनित्वम
पपन्नम् । नच पाशुपतमतनिरासार्थन्तत् , तस्यापि शास्त्रत्वात् । नचाशास्त्र
व तदिति वाच्यम् , " साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ात्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि " रिति भारत एवाध्यात्म
ास्त्रत्वोपपादनात् ; विरुद्धांशाप्रामाण्यस्य विरोधाधिकरण एव सिद्ध
ात् । ईक्षत्यधिकरणेन साङ्ख्यस्य वेदार्थतया प्रामाण्यस्येव पत्युरसा
ञ्जस्यादित्यनेन पाशुपतस्यापि वेदार्थतया प्रामाण्यस्य निरासेन क्वचि
मोहशास्त्रत्वस्थापनाच्च नेह तस्यावकाशः । किंच नेह कण्ठरवेण पाशु
तनिरासः क्रियते, किन्त्विच्छयैव केवलं विवक्षा कल्प्यते, कल्पनञ्
ूर्वसूत्रेपि सुशकमेव । कथञ्चित्स्थितगतिचिन्तनस्य नात्रावका
ित्युक्तमेव ।

तृतीयपक्षे सूत्रार्थोनुपपन्नः, शास्त्रस्य प्रामाण्यमात्रेण प्रकृता
सेद्धेः । तत्प्रतीत्यर्थं शब्दोवाध्याहार्यः अर्थाद्वा तत्सम्बन्धप्रतीतिर्वाच्य
ततो वरं सम्बन्धप्रतीत्यर्थं बहुव्रीह्यङ्गीकारः । तत्पुरुषश्चात्र जघन्य
परणगणेत्यादिना षष्ठीसमासनिषेधात् । " तदशिष्यं संज्ञाप्रमाणत्वादि "

इतरपक्षे अरुच्या लक्षणान्तरकथने जन्मादिसूत्रवैय्यर्थ्यं स्पष्टम् । नित्वादिति च व्यर्थम् , अचेतनत्वेन प्रकृतौ शास्तृत्वशङ्काया स्थानात् , ब्रह्मणि प्रकृतिभिन्नत्वकीर्तनेन प्रकृतौ शास्तृत्वशङ्काया रिहाराच्च ।

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

## अथ समन्वयाधिकरणम् ।

उक्तं शास्त्रप्रमाणकत्वं ब्रह्मणो न सम्भवति, वेदान्तानां ब्रह्मणि न्वयासम्भवादित्यत्राह—

**१- तत्तु समन्वयात् ॥ १ - १ - ४ ॥**

अत्र सन्देहः - वेदान्तानां ब्रह्मणि समन्वयोस्ति नवेति

अत्र पूर्वः पक्षः— वेदान्तानां सिद्धे व्युत्पत्तिसमर्थनेन यद्या ह्मण्यन्वयस्सम्भवति, तथापि न समन्वयः, प्रयोजनपर्यवसितोह्यन्व समन्वयः, प्रवृत्तिनिवृत्तिपरत्वविधुराणां स्वरूपपराणां सद्विद्यादिकाना योजनशिरस्कता, अत्रानुष्ठेयार्थप्रतिपादने सत्येव हि तदनुष्ठानमुखे योजनशिरस्कता, अतोर्थमुखेन प्रयोजनशिरस्कत्वाभावाज्जपमुखेनैव प्र नशिरस्कता वाच्या, तथाचोपासनाविधियुक्तानामपि वाक्यानां सद्वि देवत् ब्रह्मविषयतया प्रतीयमानानां सद्विद्यादौ फलप्रयोजनपर्यवस नेव युक्तम् , ' नान्यःपन्था , इति ब्रह्मज्ञानातिरिक्तस्य मोक्षसाधनत्वा गात् भगवदुपासनस्य देवतान्तरोपासनस्य च मोक्षसाधनत्वोपदेश तेषां च मृग्यत्वश्रवणात् ब्रह्मणश्चातादृशत्वात् ; — इत्येवं ब्रह्मणि न्तानां समन्वयासम्भवात् शास्त्रप्रमाणकत्वं ब्रह्मणो न सम्भवत

राद्धान्तस्तु— अस्त्येव समन्वयः, सद्विद्यायां हि निखिलजगन्निमि
पादानकारणं ब्रह्म प्रतिपाद्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ
पत्स्य' इत्युक्तम् । इदं च वाक्यं अधिकार्यभिलाप इति प्रतीयते,
तः प्रकरणाद्ब्रह्मज्ञानवतो मम संसारमोक्षानन्तरं ब्रह्मप्राप्तिर्भवती
च्यते । एवं ब्रह्मज्ञानस्य प्राप्तिसाधनत्वेवगते किन्तज्ज्ञानं साधन
तमित्याकाङ्क्षायां 'निदिध्यासितव्यो द्रष्टव्य' इत्यादिवाक्यैरनुष्ठेय-
नावगमात्तन्मुखेन सद्विद्यादीनामपि प्रयोजनशिरस्कत्वात् सर्ववेदा-
ानां भगवत्येव पर्यवसानस्योक्तत्वेन पूर्वोक्तविरोधासिद्धेश्च वेदान्तानां
ह्मणि समन्वयाच्छास्त्रप्रमाणकत्वं ब्रह्मणि सम्भवत्येव; सद्विद्याया
पासनतात्पर्यकत्वमेतत्सूत्रविवक्षितं प्रागुक्तमपीहानुसन्धेयमिति ।

परे ऽन्येचास्य सूत्रस्य सिद्धव्युत्पत्तिपरत्वं वदन्ति । तदनुपपन्नम्,
थमसूत्रस्याथातश्शब्दसूचिताधिकारसमर्थनार्थं सिद्धव्युत्पत्तिपरत्वस्य
मर्थितत्वात् ।

अपरेतु - अस्तु शास्त्रैकसमधिगम्यं जगत्कारणम्, तथाप्याति
प्रापकमिदं लक्षणम्, शास्त्रतोपि क्वचित्क्वचित्पशुपतिहिरण्यगर्भादीना
पि कारणत्वप्रतीतेः, इति पूर्वपक्षे राद्धान्तः - सम्यग्विचारितादुपक्रमादि
ात्पर्यलिङ्गरूपादन्वयात्सम्यग्वचनधृत्या सर्वशास्त्रस्य तत्परत्वरूप
न्वयाच्च विष्णवाख्यं ब्रह्मैव कारणतया शास्त्रगम्यमिति । तदनुप
न्नम्, 'एतेन सर्वे व्याख्याता' इत्यत्रैवास्यार्थस्य वक्ष्यमाणत्वादिति

इतरेतु- जन्मादिकारणत्वमवश्यं लक्षणतयाभ्युपगन्तव्यम्, 'यतोवे
यादिश्रुत्यनुसारात्, तच्च न सम्भवति, 'यतो वा इमानि भूतानी' त
इमा प्रसिद्धभूतादिपरिग्रहे 'यत्प्रयन्त्यभिसंविशन्ती' ति लक्षणवाक्यशे
ादिश्यमानप्रयदभिसंवेशस्य ब्रह्मण्ययोगात्, चिद्रूपस्य ब्रह्मणो जडा
ादानत्वात्. प्राणिपरिग्रहे इमानि भूतानीति जन्मादिसाक्षात्कर्तृश्र

कृत्यंशस्तृतीयान्त इहानुवर्तते । तच्छास्त्रं अखिलप्रपञ्चापादानाद
ाकारण्यपि शास्त्रयोनि शक्त्या समन्वयात् (?), अतो ब्रह्मणि वाक्य
ाषोपदिश्यमानप्रयदाभिसंवेशो युज्यते, इति। अयमपि पक्षोऽनुपपन्नः, जन्मादि
्त्रोक्तलक्षणसमर्थनपरत्वे तदानन्तर्यप्रसङ्गादध्याहारप्रसङ्गाच्च ।

इति समन्वयाधिकरणम् ॥४॥

## अथ ईक्षत्यधिकरणम् ।

इत्थञ्चतुस्सूत्र्या शास्त्रारम्भस्समर्थितः । अथ शास्त्रमारभ्यते

१- ईक्षतेर्नाशब्दम् । ॥ १ - १ - ५ ॥

जगत्कारणत्वं यद्ब्रह्मलक्षणमुक्तं तत्परीक्ष्यते प्रथमाह्निकेन अस्मिन्पादे अयोगव्यवच्छेदः क्रियते । ननु कथं प्रथपादस्यायोगव्य च्छेदपरत्वम्, एतदधिकरणपूर्वपक्षे सर्वेषामपि वेदान्तानामाचिद्विलक्ष परत्वाक्षेपे सत्येव ह्ययोगव्यवच्छेदतात्पर्यमुपपद्यते, तथाक्षेपे पूर्वपक्ष तात्पर्यमसिद्धमेव ; तथाहि ईक्षत्यधिकरणे 'गतिसामान्यादि' त्युच्यते अयं खलु सूत्रार्थः - उपनिषदन्तरेषु ब्रह्मणः कारणत्वप्रतिपादनादिह तथैव भवितव्यमिति; तथा 'अन्तस्तद्धर्मोपदेशादि' त्व तच्छब्देन ब्रह्म परामृश्य ब्रह्मधर्माणामुपदेशादित्युच्यते, 'आकाशस्तल्लिङ्गादि' त्यत्र तच्छब्देन ब्रह्म परामृश्य तदसाधा धर्मादित्युच्यते; एतत्सर्वं वाक्यान्तरेष्वपि ब्रह्मप्रतिपादने पूर्वपक्षि आक्षिप्ते न युज्यत एवेति चेत् ? उच्यते, प्रथमसूत्रात्प्रथमान्ततया वि रिणतब्रह्मपदान्वयेन साध्यलाभे सम्भवत्यपि नाशब्दमिति साध्यं दिष्टम्, अयञ्च निर्देशो वाक्यान्तरेपि ब्रह्मप्रतिपादनाभावो यदि वि क्षितस्स्यात् तदानीमेव युज्यते, ब्रह्मपदेन साध्यविशेषालाभात्;

ायंच निर्देशो ब्रह्मपदाननुवृत्तिज्ञापकः ; अपिच 'भेदव्यपदेशाच्चान्य त्यस्यादित्यमण्डलान्तरुपास्यः प्रसिद्धादित्यजीवादन्यः ' यआदि ेष्ठन्नि ' ति ततो भेदव्यपदेशादित्यर्थः, परैरपि तथैव व्याख्यातम्, ए ात्यन्ययोगव्यवच्छेदपरत्वे इदं सूत्रमनन्वितार्थं स्यात्, जीवातिरि रमेश्वरः कारणत्वोपास्यत्वादिना श्रुत्यन्तरेषु प्रतिपाद्यतान्नाम, अन्त देत्यवाक्ये प्रतिपाद्यः प्रसिद्धादित्य इति खल्वन्ययोगव्यवच्छेदपरत्वे पृ ाक्षः, अस्यपूर्वपक्षस्य भेदव्यपदेशेन निरासः कथमुपपद्येत, भेदव्यपदेश ्यत्वाङ्गीकारेणैव पूर्वपक्षप्रवृत्तेः । यदुक्तं परैः- आदित्यादन्तरः अन्तरादि इति श्रुतिसाम्यात् इह प्रतिपाद्यस्तद्वदन्यएवेति; तन्न, तथासति श्रुतिसाम्यादिति हेतु र्निर्दिश्येत, नतु भेदव्यपदेशादिति, श्रुतिसाम्य सिद्धम्, अन्तरान्तरश्रुत्योर्भिन्नत्वात् । अक्षरद्वयसाम्यात् श्रुतिसाम्य कारेपि कथन्तस्य साधकत्वम्, अन्तरात्मत्वमेकत्रोच्यते, इतरत्र स ग्रहस्य मण्डलावस्थानम्? एवंहि नार्थप्रत्यभिज्ञा । एवमपि श्रुतिस मात्रादभेदे आदित्यादन्तर इत्यत्रापि सविग्रहस्यैव वृत्तिरुच्येत । तः दन्ययोगव्यवच्छेदपरत्वे सूत्रमनुपपन्नम् । अयोगव्यवच्छेदपरत्वेप्य सूत्रेण परमेश्वरसिध्दावपीदं वाक्यं प्रसिद्धादित्यपरमेवास्त्विति शङ्का नो ष्ठति, 'सयश्चाय' मित्यानन्दमयाभेदस्य प्रागभिधानात्

अन्येतु परमेश्वरत्वे पूर्वसूत्रेण समर्थिते परमेश्वरएव मण्डलाभिमान्यसि शङ्कायां 'यआदित्येतिष्ठन्नि' ति भेदव्यपदेशात् परमेश्वरो मण्डलाभि नोन्य इत्याहुः । तन्न, तथासति परस्परानुपजीविसाध्यद्वयपरत्वेनाधि भेदप्रसङ्गात्, तथाङ्गीकारे चकारास्वारस्यं स्पष्टम् । ते सूत्रद्वयस्यापि एकमेव साध्यमित्यवगम्यते । तेनेदं सूत्रमयोगव्यव परमेव । ईक्षणात्मोपदेश एव गतिसामान्यसूत्रविवक्षितः । एवञ्च कारणवाक्येषु ईक्षणात्मोपदेशादिति गतिसामान्यसूत्रार्थः । सौत्रः

ातत्वाच्चकारेण प्रथमसूत्रेपीयमेव प्रतिज्ञेत्यवगमात् अन्यपरमेव । पूर्व
क्षतया प्रसक्तस्यान्यत्वप्रतियोगितयान्वयः । ततश्चादित्यान्यधर्मस्योप
शादित्यर्थः । आदित्यायोग्यधर्मस्योपदेशात्ततो भेदसिध्दिरिति भावः
आकाशस्तल्लिङ्गादित्यत्रापीदमेवान्यपदमनुवर्तते, प्रसिध्दाकाशादन्य
इत्यर्थः । वस्तुतस्त्विदमपि तत्पदद्वयमयोगव्यवच्छेदमेव पिशुनयति
तथाहि – यद्यन्ययोगव्यवच्छेदार्थता, तदा उत्तरपादेष्विव सर्वत्र ब्रह्मेत
न्वयात् आदित्यान्तर्वर्तिब्रह्मधर्मोपदेशात् आकाशो ब्रह्म लिङ्गादित्यु
अदृश्यत्वादिगुणकोधर्मोक्तेरित्यत्रेव तत्पदाभावेपि समभिव्याहृतसम्बन
लाभात् ब्रह्मधर्मोपदेशात् ब्रह्मलिङ्गादिति लभ्यत एव, अतोन्यय
व्यवच्छेदपरत्वे तत्पदं व्यर्थम् । अयोगव्यवच्छेदपरत्वे त्वादित्यान्तव
जीवादन्यो धर्मोपदेशादित्युक्ते अन्यधर्मोपदेशादित्यर्थः स्यात् , ततश्चाप
पाप्मत्वादिधर्माधिकरणस्याप्रसिध्देर्धर्मोपदेशादित्यसङ्गतं स्यात् । तद्धर्म
देशादित्युक्ते तु तस्यैव धर्म इत्यर्थलाभार्थत्वात्तच्छब्दस्यावधारणेन
त्यायोग्यत्वलाभादादित्यायोग्यधर्मोपदेशादिति लभ्यते । आकाशस्तल्लि
दित्यत्र लिङ्गपदेनासाधारण्यरूपावधारणार्थप्रतीतेराकाशायोग्यधर्मोपदे
दिति लभ्यते, लाघवार्थन्तत्पदप्रयोगः । अतस्तत्पदद्वयमपि अ
व्यवच्छेदतात्पर्यसाधकमेव । एवमयोगव्यवच्छेदेन लक्षणस्यास
निरासास्सिद्ध्यति ।

नन्वेवं सति "अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशादि"
तच्छब्दोपि कथमयोगव्यवच्छेदं न पिशुनयेदिति चेन्न ;- इमामाश
यतो राद्धान्तप्रतिज्ञायां नारायणपदमप्रयुञ्जानो भगवानेव पर्यहार्षीत् ।
तत्पदप्रयोगस्समानप्रकरणसौबालवाक्यप्रतिपन्ननारायणव्यञ्जनेन
निर्धारणतयैव सार्थ इति हि भगवान्मन्यते । अतः प्रसिद्धपराम
च्छब्दः । पूर्वोत्तराधिकरणसिद्धान्तप्रतिज्ञयोर्नहि नारायणशब्दं

ारायणधर्मव्यपदेशादिति विवक्षितम् । अथ स्यात्, कथमेवमेष
दाचार्यस्य भवता ज्ञात इति ; निर्देशस्वारस्यादिति ब्रूमः । तथाहि-
मी तद्धर्मव्यपदेशादिति निर्देष्टव्ये अधिदैवाधिलोकादिष्विति
। श्रुत्यन्तरेष्वसंशयं अन्तर्यामिब्राह्मणद्वये संशयंच भगवान्वेदा-
मन्यते । स्वप्रथमानुवाकस्य भगवत्परतया विनियोगवशेन निर्ण
'अन्तःप्रविष्टश्शास्ताजनानामि'' ति वाक्यं भगवत्परतया निर्णीतम् ।
दाप्नोतिपरमि'त्यनुवाकस्य द्वितीयान्तानन्तपदेन ब्रह्मपरत्वस्य निर्णयात्
ट्वेत्या' दिवाक्यमपि निर्णीतार्थम् । सुबालोपनिषन्नारायणपरतया सुप्र-
। यद्यपीहापि नारसिंहपुराणादौ भगवति रूढतया प्रसिद्धामृत
ङ्म्ना ब्रह्मपरत्वं प्रतीयत एव, तथापि श्वेताश्वेतरे ' क्षरं त्वविद्याह्य
विद्ये ' ति जीवस्यामृतपदेन निर्देशेन तत्रैवामृताक्षरमिति विशेषणस्या
मृतपदप्रयोगे जीवप्रतीत्यर्थत्वाच्च पूर्वपक्षयुक्तिनिराकरणसामर्थ्यममृत
नास्तीत्यभिप्रायेणान्तर्यामिब्राह्मण एव विचारः क्रियत इति ।
यत्तु कश्चिदाह- अलक्ष्ये प्रधानादौ कारणत्वस्याभावसमर्थनादति
युद्धार एव स्यादिति । एवं वदतः कोभिप्रायः ? किमसम्भवो
नेति, किंवातिव्याप्त्युद्धारो भवतीति, अथवातिव्याप्त्युद्धारादेव पादभेदो
स्यादिति ? नाद्यः, लक्ष्ये सिद्धे तत्र लक्षणाभावे तद्विशिष्टलक्ष्य
यभावात् ; लक्ष्यसिद्धावपि विवक्षितविशिष्टप्रतीत्यभावसिद्ध्या लक्षणा
वेन तदुद्धारेऽसम्भवोद्धारो नेति वक्तुमशक्यत्वात् । नद्वितीयः, ताव
सम्भवोद्धारस्याक्षतेः । नतृतीयः, तात्पर्यभेदादेव पादत्रिपादीविभाग
: । प्रथमपादे सदादिवाक्यैर्ब्रह्मप्रतिपादनेन ब्रह्मसिद्धावेव तात्प
, तद्वाक्ये ब्रह्मप्रतिपादनस्यान्यप्रतिपादने असम्भवात् अन्यनिरा
। त्रिपाद्यान्तु ब्रह्मप्रतिपादनाभावे अन्यप्रतिपादनप्रसङ्गात् ब्रह्मप्रति
। अतिव्याप्ति

निरासे त्रिपाद्याः । सूत्रकारश्च लक्ष्यस्य तत्र लक्षणस्य च रि
वातिव्याप्तिनिरासः कार्य इत्यभिप्रैति । एवमभिप्रायश्च पूर्वोक्तहे
रेवावगम्यते ।

ईक्षतेर्नाशब्दम् ॥ १ - १ - ५ ॥

इदमाम्नायतेच्छान्दोग्ये- " सदेव सोम्येदमग्र आसीदेकमेव
तदैक्षत बहुस्यां प्रजायेये " त्यादि । तत्र संशयः- किं स
वाच्यं साङ्ख्योक्तं स्वतन्त्रमानुमानिकं प्रधानम्, उत प्रधान
मिति । किं युक्तम् ? साङ्ख्योक्तं स्वतन्त्रप्रधानमेवेति ।
इदमिति प्रसिद्धमचेतनं त्रिगुणात्मकं कार्यं निर्दिश्य तस्य '
देकमेवे ' ति स्थूलावस्थाशून्यसद्रूपताप्राप्तिरुच्यते, एकस्य सत
नेन सर्वविज्ञानञ्च प्रतिज्ञाय दृष्टान्तेन तदुपपाद्यते, इदं सर्वं
वाच्यस्य त्रिगुणात्मकाचेतनरूपत्व एव सम्भवति ; एवं सद्विद्य
तनपरत्वे सति ' आत्मावा इदं ' ' ब्रह्मवा इदं ' ' एकोहवै
इत्यादिकारणवाक्यं सर्वं सद्विद्यार्थानुवादरूपत्वादचेतनपरमेव
हवै नारायणआसी ' दित्यस्य ' एक आसीदि ' ति प्रत्यभिज्ञय
नुवादरूपत्वस्य स्फुटत्वादचेनपरत्वे सिद्धे ' नारायणाद्ब्रह्माजायते
नारायणपदेनैतदर्थप्रत्यभिज्ञानात् अचेतनपरत्वं सिद्धम्; एवं
कारणवाक्यं अचेतनपरमेवेति । अत्राह — ' ईक्षतेर्नाशब्द
साङ्ख्याभिमतं प्रधानन्न जगत्कारणम्, ' तदैक्षते ' तीक्षति
णात्; अचेतने तदसम्भवात् । पूर्वपक्षस्य सद्विद्यानिबन्ध
धातुनिर्देशः । अशब्दमिति । यस्मिन् शब्द एव
भवति तदशब्दमित्युच्यते । अनेन साङ्ख्योक्तानुमानविष
[illegible] प्रधानस्य जगत्कारणत्वकल्पना

मत्वर्थीयाच्प्रत्ये तस्यचाब्भक्ष इतिवदवधारणगर्भत्वे चोक्तार्थलाभः
द्वा अशब्दशब्दश्शब्दान्यपरः, अशब्दशब्दान्मत्वर्थीयाच्प्रत्ययः, तत
शब्दमिति शब्दातिरिक्तानुमानगम्यमित्यर्थः ।

सन्वीक्षणं 'तत्तेज ऐक्षते' ति गौणेक्षणसाहचर्यात् कार्यौन्मु
क्षणं गौणमेवेत्याक्षिप्य परिहरति—

२- गौणश्चेन्नात्मशब्दात् ॥ १- १- ६ ॥

'सआत्मे' ति नवकृत्वोऽभ्यस्यते, अतस्सतश्चेतनत्वावग
न्मुख्यमेवेक्षणम् । तेजःप्रभृतिशब्दा अपि तदात्मपरा एव । अ
"हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे
करवाणी" ति अनुप्रवेशस्य नामरूपव्याकरणार्थता ऽवगम्यते,
प्रवेशस्य तादर्थ्यञ्च नामरूपयोस्स्वपर्यन्तत्व एव सङ्गच्छते, अन
पितृकुलालादिवदननुप्रवेशेनैव व्याकरणं स्यात्; अतो नामरू
स्वपर्यन्तत्वमनुप्रवेशस्य तादर्थ्यावगमात्सिद्धम् । ननु 'तासान्त्रिवृ
वृतमेकैकां करवाणी' ति नामरूपव्याकरणार्थं त्रिवृत्करणश्रवणेन
ध्यात्रिवृत्कृतिनामरूपयोः स्वपर्यन्तत्वमवगम्यते, अतः कथन्तेजः
पदानां स्वपर्यन्तत्वमिति चेदुच्यते, अनुप्रवेशो हि नेदानीं स
अनादिसिद्धत्वात्; तथाच तस्य नामरूपव्याकरणार्थत्वे ऽवगते
नामरूपमात्रन्तत्पर्यन्तामिति सिद्ध्यतेत्येवेति । ततश्च नामरूपयो
पर्यन्तत्वात्तेजःप्रभृतिशब्दैस्तदात्मोपस्थानं युक्तमेव । नाम्नस्स्वपर्य
स्वाभिधायकत्वम् , रूपस्य स्वपर्यन्तत्वं स्वापृथक्सिद्धधर्मत्वमिति

इतश्च न प्रधानं सच्छब्दवाच्यम्—

३- तन्निष्ठस्य मोक्षोपदेशात् ॥ १ - १ - ७ ॥

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य

सज्ज्ञानञ्च तत्त्वमसीत्युपदेशात् सत्तादात्म्यज्ञानमेव, नह्यचि ज्ञानं मोक्षहेतुरिति युज्यते ।

इतश्च न प्रधानम् —

४- हेयत्वावचनाच्च ॥ १ - १ - ८ ॥

यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत् तदा श्वेतकेतोस्तदात्मत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात् तत्क्रियते, प्रत्युतोपादेयत्वेन 'तत्त्वमसि' तस्य तावदेवचिर दिश्यते ।

इतश्च न प्रधानम्—

५- प्रतिज्ञाविरोधात् ॥ १ - १ - ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च । वाक्योपक्रमे ह्येव सर्वविज्ञानं प्रतिज्ञातम्, तच्च कार्यकारणयोरनन्यत्वेन कार ज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञाने विज्ञानासिद्धेः विरुद्ध्यते ।

इतश्च न प्रधानम् —

६- स्वाप्ययात् ॥ १ - १ - १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह "स्वप्नान्तं मे सोम नीही" ति "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो इति सुषुप्तं जीवं सता सम्पन्नं स्वम्– अपीतः स्वस्मिन्प्रलीनः इ दिशति, प्रळयश्च स्वकारणे लयः । नचाचेतनं प्रधानं चेतनस्य कारणं भवति । स्वमपीतोभवति- आत्मानमेव जीवोपीतो भवत चिद्वस्तुशरीरकन्तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत र्ति

व्याकरणश्रुत्योक्तम् , तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकाले प्रळयकाल ज्ञानावस्थाप्रहाणेनावस्थानात् ' सतासोम्य तदा सम्पन्नो भवति स्व तो भवती' त्युच्यते । यद्यपि स्वपिधातोर्निष्पन्नस्स्वपितिशब्दः, स्वशब्दोपपदादप्रीतेः, तथापि अशनायादिनिर्वचनवदर्थवादरूप- ान्निर्वचनम् ।

इतश्च न प्रधानम् –

७- गतिसामान्यात् ॥ १ - १ - ११ ॥

"आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत" · "तस्माद्व ास्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेराप द्भ्यः पृथिवी" "तस्य ह्वा एतस्य महतो भूतस्य निःश्वसित- ायदृग्वेदः" इत्यादिसृष्टिवाक्यानां या गतिः - प्रवृत्तिः तत्सामान्यात ानार्थत्वात् अस्य वाक्यस्य । ततश्च सर्वेष्वपि कारणवाक्येषु चेत यैव कारणत्वप्रतिपादनात् न सच्छब्दवाच्यं प्रधानम् ।

इतश्च न प्रधानम्—

८- श्रुतत्वाच्च ॥ १ - १ - १२ ॥

श्रुतमेव ह्यस्यामुपनिषद्यस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपय ीकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वं अपहतपाप्मत्वादिकं सत्य मत्वं सत्यसङ्कल्पत्वंच ' अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याक णि' ' सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा ऐतदात्म्य दं सर्वं तत्सत्यं सआत्मा " "यच्चास्येहास्ति यच्च नास्ति सर्वन्त स्मिन् समाहितम्' 'तस्मिन् कामास्समाहिता एष आत्मापहतपाप्म

प्रतिपाद्यमिति धर्मिनिषेध्ययोरध्याहारेण साध्यनिर्देशः । त
शब्दमिति । सदादिशब्दाबोध्यं हि तदित्यर्थः । नन्वसिद्धो हेत्
नेपि सत्तायोगेन सदादिशब्दप्रवृत्त्युपपत्तेरिति शङ्कानिराकरणेन
पादनार्थो हेतुरीक्षतेरिति । एवञ्च प्रधानं न जगत्कारणत्वेन
क्यजातबोध्यम् ; ईक्षणश्रवणेन तत्रत्यजगत्कारणपरसद्ब्रह्म
विषयत्वादिति,— सूत्रार्थः । पूर्वपक्षे मानान्तरगोचर एवार्थे
सम्भवेन तदगोचरे ब्रह्मणि सद्ब्रह्मात्मादिशब्दानां व्युत्पत्तिग्र
वात् सदेवेत्यादिवाक्यं प्रधानानुवादकमिति विवक्षितम् ।
यौगिकत्वेन पृथग्व्युत्पत्तिग्रहानपेक्षा यूपाहवनीयादिन्यायेन
सम्भवश्च विवक्षितौ । **गौणश्चेन्नात्मशब्दात्** । अत्रात्मपदं स
धर्मप्रधानम् ; तस्य, शब्दात् - स्वरूपत्वप्रतिपादकशब्दादित्य
तेनच 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी' इ
ब्दाभिहितं जगत्कारणं प्रति जीवस्य स्वरूपत्वप्रतिपादकशब्दः
दात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ' इति
प्रति सच्छब्दाभिहितस्य स्वरूपत्वप्रतिपादकशब्दश्चेत्युभयमपि सङ्ग्
अयमेकोर्थः । 'सआत्मे' त्यात्मशब्दादित्यन्योर्थः । **तन्निष्ठस्य
पदेशात्** । अत्र तत्पदेन पूर्वसूत्रप्रकृतं जीवं प्रति सच्छब्दव
स्वरूपत्वं परामृश्यते । ननु 'तत्त्वमसी' ति न तत्त्वदृष्ट्या
त्वोपदेशः, किन्तु स्थूलारुन्धतीन्यायेन, ततश्च प्रधानस्य सच्छ
त्वेपि सदात्मत्वोपदेशो न विरुद्ध्यत इत्याशङ्क्याह **हेयत्वावच**
तथा सति मोक्षयितव्यश्वेतकेतुस्तन्निष्ठो माभूदिति मुख्यमात्मानम्
क्षुणा आरुणिना स्थूलतारायामरुन्धतीतादात्म्यस्येवेह सदात्मत्वस्य
ताया वक्तव्यत्वापत्तेः तस्यावचनात्, सदात्मत्व एवोपदेशपरि
दर्शनात् । पूर्वसूत्रे तच्छब्दस्समस्तोप्यपेक्षावशादिहाप्यनुषक्तः

ो विपरिणम्यते । तस्य सदात्मत्वस्य, हेयत्वावचनादिति सूत्रार्थः
ाप्ययात् । "यत्रैतत्पुरुषः स्वपिति नामे ' त्यादिना प्रकृतं सत्स्व
ब्देनोक्त्वा तत्र जीवस्याप्ययप्रतिपादनादपि न सच्छब्दवाच्यं प्रध
म् । ननु ब्रह्मण्यपि जीवस्य मुख्यो लयो न सम्भवति, नित्यत्वात्
ौपचारिकस्तु लयः प्रधानेपि व्यपदेष्टुं शक्यत इति चेन्न ; — अध
ाकारनिवृत्तौ तदनुवृत्ताधिष्ठानरूपस्याध्यस्तोपाधिकृतभेदनिवृत्त्या तदभेदा
रप्ययशब्दितो लयः, अस्ति च सुषुप्तौ ब्रह्माध्यस्तस्थूलसूक्ष्मदेहद्व
धिकाकारनिवृत्तौ सत्यां तदनुवृत्ताधिष्ठानरूपस्य जीवस्य तत्कृतभे
वृत्त्या ब्रह्माभेदप्राप्तिरिति मुख्यलयसम्भवात् । यद्यपि सुषुप्तावप
द्योपाधिकृतोऽतिसूक्ष्मान्तःकरणोपाधिकश्चाऽऽमुक्त्यनुवृत्तो जीवस्यास्त्ये
ह्मणो भेदः, तथाप्यत्यन्तभेदकस्थूलसूक्ष्मोपाधिसत्त्वे यथा भेदो न तथ
दोस्ति तन्निवृत्ताविति कथञ्चिद्भेदप्राप्तिरपि युज्यत इति ।

अपरेतु - इदमधिकरणं ब्रह्मावाच्यत्वनिराकरणपरं वर्णयन्ति
त्र "अशब्दमस्पर्शमरूपमव्ययं" "यतोवाचो निवर्तन्ते" इत्या
तिभिः ब्रह्मावाच्यमिति पूर्वपक्षे "तमेवैकं जानथ" "आत्मन्येव
ानं पश्येत्" "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते
विज्ञाय प्रज्ञां कुर्वीत" इत्यादिश्रुतिभिर्ब्रह्मण ईक्ष्यत्वादीक्षणस्य
नान्तरागोचरे ब्रह्मणि शब्देन विनानुपपत्तेः ब्रह्मणो वाच्यत्वसिद्धिः
च लक्षणया ब्रह्मावगम इति वाच्यम्, ब्रह्मणो मुख्यार्थसम्बन्
ानाभावे लक्षणाया असम्भवेन शब्देन विना ब्रह्मणो मुख्यार्थसम्
ज्ञानासम्भवेन तत्रापि लक्षणायामनवस्थिते रिति राद्धान्तः । तद्ब्रह्मवाच्
भवति, ईक्षणविषयत्वादिति सूत्रार्थः । गौणश्चेन्नात्मशब्दात्
क्षणीयत्वेनोक्तस्सगुण एव, नतु निर्गुण इति चेन्न ; "आत्मन्येव
ानं पश्ये" दिति ईक्षणीये आत्मशब्दश्रवणात्, तस्य च निर्गु

मोक्षोपदेशात् । नचात्मशब्दो गौणपरः, " यस्य
आत्मे " त्यात्मनिष्ठस्य पुरुषस्य मोक्षोपदेशात् ।
ज्ञानाद्गुणनिवृत्तिरूपा मुक्तिः । पाद्मेच– " चेतनस्
आत्मेतिच प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्
इतरेष्वात्मशब्दस्तु सोपचारो ऽभिधीयते । तस्यात्म
न्मोक्ष उदाहृतः । सगुणास्त्वपरे प्रोक्ताः तज्ज्ञान
परोहि पुरुषो विष्णुस्तस्मान्मोक्षस्ततस्स्मृतः ॥ " इति ।
त्मशब्दो न गौणपर इत्याह – **हेयत्वावचनाच्च**
परम्परया मोक्षो युक्त इति शङ्काप्यनेन निराक्रियते
त्मानमि' ति सावधारणाहेयत्ववचनादिति सूत्रार्थः
पादेयत्वम् । " पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत
त्वादपि निर्गुणो वाच्यः ? नचायमपि गौणः,
वचनादित्याह - **स्वाप्ययात्** । निर्गुणस्य
" आत्मानं विलापयती " त्यात्मनो नाशित्वेन ह
प्यनेन निराक्रियते । स्वस्य स्वस्मिन्नप्ययवचनात्
बहुधा भूत्वा निर्गुणः पुरुषोत्तमः । एकीभूय पु
शादिकृत् ॥ " इत्याद्यैकार्थ्येनावताररूपस्य मूलरू
पपत्तेः । सगुणस्यतु " यत्प्रयन्त्यभिसंविशन्ती " त्य
तस्यानुपपत्तेः । नचात्मानं विलापयतीत्यत्र नाश उ
ननु शाखान्तरे सत्वादिगुणयुक्तेप्यात्मशब्दो मु
ज्ज्ञानान्मोक्षादिश्चोच्यताम्, ततश्च नात्मशब्दादि
त्राह- **गतिसामान्यात्** । " सर्वे वेदा युक्तयः सुप्र
त्वेकमेव । प्रकाशयन्ते नविरोधः कुतश्चिद्वेदेषु स
पैङ्गिश्रुत्यैव सर्ववेदोक्तानां ज्ञानैकरूप्येण गतिसा

। देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षस्सर्व
वासस्साक्षी चेता केवलो निर्गुणश्च " इति श्रुतत्वादपि निर्गुणो
इत्यर्थः । इति ।

अन्येतु उक्तस्य ब्रह्मलक्षणस्य प्रधानेतिव्याप्तिवारकमिदं अधि
मित्याहुः ।

इतरेतु लक्षणसामान्यस्य यावद्विशेषविश्रममसत्कल्पत्वात् निष्कृष्टं
स्वरूपं प्रदर्श्यते । ईक्षतेर्नाशब्दम् । अशब्दं- शब्दब्रह्मश्रीमहा-
ाहजविद्याशक्तिसमन्वयराहितं आदिरुद्राख्यमादिविष्ण्वाख्यञ्च ब्रह्म
गज्जन्मादिकारणं उपास्यं जिज्ञास्यंवा, तयोरीक्षणानुपपत्तेरित्यर्थः ।
। ईक्षतेः ना आशब्दमिति पदच्छेदः । आशब्दं – अन्तार्थाव्ययी
। अण्डपिण्डान्ताशेषकार्योपादानानां स्रष्टुः, ईक्षतेरीक्षणसापेक्षत्वात्,
वान्यत्रासम्भवात्, ना – अभिव्यक्तपुम्भावः श्रीमदादिपुरुषो
ानादिब्रह्मैव ईक्षिता स्रष्टा जगदुपादानमुपास्यं जिज्ञास्यञ्चेत्यर्थः ।
केवलस्य ब्रह्मण ईक्षितृत्वायोगादावश्यकोपाधिपरिग्रहाद्वरमुपाधेरेव प्रकृ
ेतृत्वादिरिति त्रिगुणात्मकाचेतनप्रधानजगत्कारणवादिनः साङ्ख्या
ते, तत्राह- गौणश्चेन्नात्मशब्दात् । गौणोयम् - त्रिगुणात्मकप्रधान
ईक्षापूर्वकसर्गादिरिति चेत् ? न, आत्मशब्दात् - 'आत्मावा इदमेक
आसी' दित्यादिष्वात्मन एव तच्छब्दात् - ईक्षादिकर्तृत्वोप-
नादिति ।

तत्र प्रथमपक्षे पूर्वपक्षे व्युत्पत्तिग्रहासम्भवः किं शबळे उत, शुद्धे ?
, यूपाहवनीयादिन्यायस्य पूर्वकाण्ड एव सिद्धत्वात् । द्वितीये
न्ते तन्न्यायप्रदर्शनासम्भवात्, यौगिकत्वप्रदर्शनासम्भवाच्च । वा-
लक्षणयोपस्थितिश्शुद्धस्येति ह्युच्यते । यौगिकत्वमपि विशिष्ट

प्रकृतिवद्ब्रह्मणोपीक्षणमनुपपन्नम् । अविद्यापरिणामांगीकारेपि घटादिशेषः, संकल्पस्यान्तःकरणवृत्तित्वस्य 'कामस्संकल्प' श्रुत्या त्वयाभ्युपगमात् । स्रष्टव्यालोचनमिति सङ्कल्पे किन्तु ज्ञानमात्रमिति चेन्न, तयैव श्रुत्या तस्याप्य णवृत्तितायास्सिद्धत्वात् , 'बहुस्या' मित्यभिलापेन रूपताया दुस्त्यजत्वात् । तादृशवृत्तौ प्रतिबिंबनेपि स्रष्टव्यस्य मसिद्ध्या चैतन्यविषयत्वासम्भवाच्च । योजनायामशब्दमिति त्वेन धर्मिनिर्देशरूपताया ईक्षतेरिति पञ्चम्यन्तस्य निषेधे पकताया जन्मादिसूत्रेण बुद्धिस्थस्य जगत्कारणस्य निषेधप्रति श्च स्वरसतोवगम्यमानतया सम्पूर्णोपदेशरूपेस्मिन् सूत्रे द्वारेणापूर्णत्वकल्पनं प्रथमान्तोपस्थापितस्य हेतुत्वकल्पनं नि प्रतीयमानस्य पञ्चम्यन्तपदोपस्थापितस्यान्यत्र हेतुत्वकल्पनं च तथा शब्दपदस्य सदादिशब्दमात्रपरतया सङ्कोचश्च । यदुक्त पाठः पूर्वपक्षे साधकहेतुरिति; तन्न, ईक्षणश्रुतेस्ततोपि बल ननु पूर्वपक्षे प्रकृत्यर्थस्य मुख्यस्यासम्भवः, प्रत्ययार्थस्सम्भवः पिपतिषतीत्यत्रेव कार्याव्यवहितव्यापाराश्रयत्वस्य सत्त्वात् , प्रत्ययार्थस्य ईक्षणाश्रयत्वस्य ब्रह्मण्यसिद्धेः, ततश्च प्रकृतित दुर्बलत्वेपीह प्रकृतेः प्रायपाठापादितदौर्बल्यतया प्रत्यय एव तस्मात्प्रायपाठानुसारात् प्रकृतेर्गौणत्वमेव युक्तमिति पूर्वपक्षहे पाठ इति चेन्न ; वस्तुतो ब्रह्मण ईक्षणाश्रयत्वस्यैव प्रा प्रकृतिप्रत्यययोरुभयोरप्यांजस्यात् । परपक्षे प्रकृतिप्रत्यययोरुभयोः सम्भवात्पूर्वपक्षे प्रत्ययार्थसम्भवाच्च स एव पूर्वपक्षहेतुः प्रायपाठः । तस्मा 'दिदंसदासीदि' ति सामानाधिकरण्यादिक

ुगृहीतो भवतीत्येतावदेव । नविलक्षणत्वादित्याद्यधिकरणवैष-
भाष्यादौ स्पष्टम् । द्वितीयसूत्रमप्यसङ्गतम्, गौणश्चेदिति
आत्मशब्देनापरिहारात्, प्रकृतिप्रत्ययार्थयोस्तत्रासम्भवस्योक्त-
नचात्मत्वं प्रधानाव्यावृत्तावेव हेतुरस्त्विति वाच्यम्, सूत्रा-
त्, नेति शङ्कितार्थनिषेधस्तत्र पञ्चम्यन्तार्थस्य हेतुत्वमपि
यते। शबलस्यात्मत्वासिद्धेः संकल्पस्य निर्विशेषगतत्वासिद्धेश्च,
प्रयोरनन्वयाच्च। निरुपपदात्मशब्दस्य स्वरूपपरत्वं भावप्रधान-
वरसम् । अत एव तृतीयसूत्रमप्यसङ्गतम् । स्थूलारुन्धतीन्याय
लीविरहेण तच्छङ्काया अनुत्थाना च्चतुर्थसूत्रं व्यर्थम् । प्रतिज्ञा-
दिति पञ्चमसूत्रं विरुद्धमेव, सांख्यमतनिरासासामर्थ्यात्, स्वमत
च्च; कारणविज्ञानेन कार्यविज्ञातताया दृष्टान्ते प्रतीतेर्दार्ष्टान्तिके
रणभावोपपादनाच्च कारणज्ञानेन कार्यज्ञानं हि विवक्षितम् ।
ज्ञानेन तत्कार्यसर्वज्ञानं सम्भवत्येव, जीवस्य साङ्ख्यमते प्रधान
भावात् तदज्ञानेपि न दोषः । परमते ब्रह्मज्ञानात्कार्यज्ञाना
स्योपपादितत्वेन तन्मतनिरासकत्वं सूत्रस्य स्पष्टम् । सिद्धान्ते
नेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी' ति जीवानुप्रवेश
जीवस्य नामरूपव्याकरणावगमाज्जीवस्यापि कार्यत्वमवगम्यते;
च्छब्देन प्रकृत्यभिधाने प्रतिज्ञाविरोधोपपादनं युक्तमेव । षष्ठ-
ङ्गतम्, ईश्वरस्यैव कारणत्वेन सच्छब्दार्थत्वाज्जीवस्यच ततो-
ात्सतस्स्वत्वेन व्यपदेशस्य जीवस्य तत्र लयोक्तेश्चासम्भवात् ।
स्त्वपदानां लक्षणांगीकारे स एव दोष इति ।

द्वितीयपक्षे ज्ञानविषयतामात्रस्यैव सिद्धान्ते हेतुत्वादीक्षणपर्यन्त
मस्वरसम । ईक्षतेरिति धातनिर्देशेच न किञ्चित्प्रयोजनम् ।

द्वितीयखण्डोऽपि । परेण ब्रह्मशब्दमित्युक्ते खलु नाशब्दमिति ।
कार्यः, सतु न तथा ब्रूते, स्ववचनव्याघातात् अनिष्टत्वाच्च,
ब्रह्म न वाच्यमिति, अतोऽशब्दमिति निर्देशोऽस्वरसः । सिद्ध
तत्प्रधानं शब्दैकप्रमाणकन्न भवति अनुमानगम्यत्वात्, ततश्च
रनुमानासिद्धार्थानुवादितया कथञ्चित्प्रामाण्यमेव, तस्मात् ह
प्रधानमेव कारणमिति परेणाभिधानात्तस्यैव सिद्धान्ते निषेध
स्वतन्त्रप्रधानस्य धर्मितया निर्देशलाभाय अशब्दमिति निर्देशः,
बलात् खलु वेदान्तिभिः पारतन्त्र्यमुच्यते, तस्याप्रमाणत्वात् कथं
तन्त्र्यलाभ इति पूर्वपक्षयुक्तिद्योतनार्थमशब्दमिति निर्दिष्टम्, ः
मानिकमिति । सम्भवति हि पूर्वपक्षिणो हेतुगर्भपक्षनिर्देशं पारि
सिद्धान्तिना तथानिर्देशेन पूर्वपक्षयुक्तिसूचनम् । अथ स्यात् 'ः
मस्पर्शमि' ति श्रुतेः पूर्वपक्षमूलत्वं द्योतयितुमयन्निर्देशः, परेण ः
मतप्रमाणद्योतनार्थं श्रौतपदेनैव प्रतिज्ञा क्रियेतेति द्योतनसम्भव
तत्र, अशब्दमित्यस्याविद्यावृत्तये स्पर्शादिनिषेधवत् तद्गुणकत्व
परत्वस्य स्पष्टतया तस्य पूर्वपक्षे प्रमाणतया शंकितुमयोग्यत्व
द्वितीयसूत्रे कथं शंकोत्थानम्, मतव्याहतिभ्यां तदसम्भवात्
ब्रह्म ज्ञानविषयो नेति मायिनां मतम्, वृत्तिविषयत्वाङ्गीक
यदि परो निर्गुणस्य परकीयवाच्यताभिमतिविषयतांजानाति, अ
जानाति, उभयथापि व्याघातः, ज्ञानविषयत्वं जानतस्तदभाव
स्थानात् अजानतो निर्गुणव्यावर्तनार्थं गौण इत्यवक्तव्यत्वात् ।
तदशङ्काया एवानुदयश्च । प्रमाणमुखत एवावाच्यत्वस्य पूर्
समर्थितत्वात्तेनापीयमाशङ्का व्याहतैव । ज्ञानाविषयमित्युक्तिः
व्याहता । ननु ईक्ष्यत्वेनोक्तः खलु सगुण इति शंक्यते, ई
परोक्षज्ञानमेव. अतो न निर्गुणे ज्ञानमात्राविषयत्वनिषेधः पूर्वपा

वश्रुतिजन्यज्ञानविषयत्वेन वाच्यत्वस्यावर्जनीयत्वात् । अतएव चन्द्रिकायां सिद्धान्तोपक्रमे न तावच्छुद्धस्यात्मनो ज्ञेयत्वमेव नेति त्युक्तम् । उपरिच ईक्षतेरित्यनेन शब्दमात्रस्यासाधकतया ज्ञान येव विवक्षणीयत्वादित्युक्तम् । किञ्च गौणपदस्य वृत्तिविशेष- एव स्वारस्यात् पूर्वसूत्रे ईक्षतिनिर्देशेन गौणवृत्तिशंकाया अयो- न्चार्थान्तरपरत्वमस्वरसम् । गौण ईक्ष्य इति साध्यस्याध्याहर्तव्य- सोपि दोषः । सिद्धान्तेतु ईक्षतिरिति विपरिणामेनानुषङ्गः, गणोपन्यासोपरि गौणत्वशङ्कायाः करणात् झटित्यवगतः, तस्मा- ग्डोनुपपन्नः । तथा परिहारखण्डोपि । उपन्यस्तात्मपदमुख्यत्वबोधक गोचरतायाः परेणाज्ञानात्तदस्मिन् सूत्रे साध्यतया विवक्षितमिति तथासति आत्मशब्दादित्यस्यैव साक्षाद्वाच्यतासाधकत्वात् एत- पूर्वसूत्रं व्यर्थम् । नचैवमात्मत्वहेतोस्साक्षादेव प्रधाननिरासक- तदुपजीविपूर्वसूत्रं सिद्धान्ते व्यर्थमिति वाच्यम् , आत्मत्वस्य रासकताया इहाविवक्षितत्वात् ; गौणत्वे शंकिते गौणत्वं कि- व्यम् , ईक्षणयोग्यचेतनोपस्थापकात्मपदश्रवणेन उभयानुग्रह य इति एतावत एवेह विवक्षितत्वात् । त्वयातु द्वितीयसूत्रे वाच्यत्वमेव साध्यतयोच्यत इति पूर्ववैयर्थ्यं तव दुष्परिहरमेव ।

ईक्षणवदात्मत्वस्य साक्षात्साधनतया विवक्षासम्भवेपि गौणे- वर्यरूपहेतुना ईक्षणे गौणत्वशङ्काया आत्मशब्देनैव परिहर्त- एवं शैली परिगृहीता । तृतीयसूत्रमप्यनुपपन्नम् , निर्गुणस्य च्यताभिमतिविषयत्वज्ञानाज्ञानयोर्व्याघातेन आत्मशब्दो गौण- ते शङ्काया एवानुत्थानेन तन्निराकरणार्थतया सूत्रावतरणस्या । आत्मशब्दो न गौणपर इत्यध्याहाराच्च । अध्याहारादेव मप्यसङ्गतम् .

सम्भवरूपन्यायस्य विवक्षितत्वेन कथमेतदुपरि मोक्षसाधनज्ञानविषय गुणिन एवास्त्विति शंका, कथञ्च तदुत्तरत्वेनैतत्सूत्रावतारः । न सगुणनिष्ठस्यापि परम्परया मोक्षो युक्त इति शंकानिरासकं सूत्रमि ह्युक्तम्, अतो न दोष इति चेन्न; — पूर्वपक्षिणो निर्गुणस्य ज्ञेयत्वज्ञ भावेन निर्गुणज्ञानद्वारकत्वासिद्ध्या पारम्पर्यज्ञानासिद्धेः । प्रतिज्ञाविरो दिति पञ्चमसूत्रमनन्वितम् । अतएव तैस्तत्परित्यागः कृतः । स्वा यादिति षष्ठसूत्रमप्यसङ्गतम्, पूर्णत्वश्रुत्युक्तत्वान्निर्गुणो वाच्य इति प्रतिज्ञाया अनांजस्यात्, उक्तरीत्या शंकाया अनुत्थानात्, पूर्णत्वापे स्वाप्ययस्य विशेषाभावेन तेन परिहारासम्भवात्, निर्गुणस्य स्वा प्रमाणबोध्यत्वस्यैहैव साधनीयतया तेनैव वाच्यत्वासिद्धेर्बहिःप्रा वैयर्थ्याच्च । गतिसामान्यादिति सप्तमसूत्रस्य गुणिज्ञानाद्गुणस निवृत्तिरूपमोक्षासम्भवस्योक्तत्वेन शाखान्तरे जीवज्ञानान्मोक्ष उन मिति शंकाया असम्भवाच्छाखान्तरे जीवस्य स्वाप्ययोक्तावपि वि भावेन परिहारासम्भवाच्च तत्परिहारार्थत्वमसङ्गतम् । तस्मात्स्व पर्यन्तैस्सूत्रैस्सद्विद्यार्थानुक्रमणस्य प्रतीयमानतया चिन्तायास्सद्वि षयत्वस्य स्वारस्यात्तथैवाङ्गीकर्तुं युक्तम् । वाक्यान्तराणान्तु त विषयतेति ।

तृतीयपक्षे अतिव्याप्तिनिराकरणार्थमिदमधिकरणमित्युक्तम्; पपन्नम्, कारणत्वमात्रस्य उपादानत्वमात्रस्य वा लक्षणत्वविवक्ष योस्सिद्धान्तेप्यङ्गीकारान्निराकरणासम्भवेनातिव्याप्तेरनुद्धारात् । त त्त्वे सत्युपादानत्वस्य वा लक्षणत्वविवक्षायां नातिव्याप्तिशङ्काव कर्तृत्वबोधकश्रुतीनां प्रकृतिविषये अन्यार्थाङ्गीकारेण योजनायाम त्वस्य नातिव्याप्तिगन्धोपि । यच्च तत्रैवोक्तं सद्विद्यैवास्या विषयः, नतु सर्वाणि कारणवाक्यानि, आत्मपुरुषादिपदयुक्तकारण

ंकाहेत्वभावात् , नच सद्विद्यायाः प्रधानपरत्वमेव तत्कल्पकं, कल्
ादेन प्रधानपरमेश्वरयोरुभयोरपि जगत्कारणत्वसम्भवेन कारणपरमात्
ाब्दादिश्रुत्यन्यथाभावकल्पनायोगादिति, — तन्न, सद्विद्यामात्रस्य वि
ात्वे पूर्वपक्षानुत्थानात्। यद्यात्मादिवाक्यैश्चेतनकारणत्वमेव निर्णितम्, त
त्राचेतनस्योपादानत्वाश्रवणात् निर्विकारस्य चेतनस्य स्वरूपपरिणाम
म्भवेनाचिद्द्वारकपरिणामस्य वाच्यत्वा 'दात्मावाइद' मित्यात्मश
मानाधिकृतस्याचेतनवाचिन इदंशब्दस्य, चेतनपर्यन्ततया वाच्यत्वा
दवेदमिति सच्छब्दस्यापि भगवत्पर्यन्ततयास्सिद्धत्वादिति ।

इतरपक्षे विवक्षितलक्ष्याविशेषानिर्धारणमनुपपन्नम् , विपरीतनि
त्कत्वात् , जगत्कारणसङ्कल्पस्य भगवत्येव श्रुतिषु प्रसिद्धेः । कि
यदि कारणत्वं न व्यक्तिविशेषनिर्धारकं तदा संकल्पस्य कथन्तस्यात

एतेनाऽशब्दमिति स्वाभिमतार्थोपस्थितिरपि निरस्ता, ईक्षणस्य देव
न्तरव्यावर्तकत्वाभावात् । अचिद्व्यावर्तकत्वमेव हि स्वरसम् । द्विर्
योजनायामपि भगवानेव निर्धार्येत । इतरसूत्रे गौण इति पुंलिङ्गनि
शोनुपपन्नः, जन्मादीत्यस्यैवानुवर्तनीयत्वात् । अन्यथाध्याहारप्रसङ्गात

इतीक्षत्यधिकरणम् ॥ ५ ॥

---

## अथानन्दमयाधिकरणम् ।

१- आनन्दमयोऽभ्यासात् ॥ १ - १ - १२ ॥

'यतोवे' त्यादिकारणत्वानुवादिभृगुवल्लीस्थलक्षणवाक्यान्निरूप्य, त
धायकसदादिवाक्यानि निरूप्य, स्वरूपप्रमाणलक्षणप्रमाणाभ्यां प्रति

पर्यवसाययितुं भृगुवल्ल्याः पूर्वप्रकरणेन 'सयश्चायंपुरुषे' इत्येतदर्थ-प्रतिपादकेन ईक्षणेनाचितो व्यावृत्तं लक्षणं जीवाद्व्यावर्तयति । 'सय-श्चायंपुरुष' इति वाक्यं हि 'यो वेद निहितं गुहायामि' ति हृदया-न्तर्वर्तितया पुरुषान्तरात्मत्वपरम्परापर्यवसानभूमितयाच प्रतिपन्नस्या-स्यानन्दमयस्यादित्यान्तर्वर्तित्वमुपदिशति । पुरुषशब्दः 'सवाएष पुरुषोन्नरसमय' इति प्रकृतशरीरपरः, आनन्दमयस्यास्मिन्प्रकरणे प्रकृत-त्वादयमिति निर्देशः । 'सयश्चायंपुरुष' इति कथं प्रसिद्धवन्निर्देः इत्यपेक्षायां आनन्दवल्ल्यां पुरुषान्तर्वर्तितया आनन्दमयः प्रतिप इति व्यवहितप्रकरणस्थत्वं सूचयता स इत्यनेन स्फोरयति । आदित्य न्तर्वर्ती भगवानिति कुतोवगम्यत इत्यपेक्षा चेत् ? तदा अन्तरादि विद्यान्निरूपयिष्यामीति भगवतो वेदाचार्यस्य हृदयम् । यद्वा कारण भगवति पर्यवसाययितुं भृगुवल्ल्या अनूद्यमानकारणत्वप्रापिकामनन्त भयपदभूषितां तापनीयप्रसिद्धाभयहेतुत्वरूपभगवल्लक्षणचिह्नितां सन्निहित मानन्दवल्लीन्निरूपयति । अनन्तपदञ्च द्वितीयान्तत्वान्न नपुंसकान्तत शंकार्हम्, वेदनं प्रति कर्मार्पणस्यावश्यकत्वात् । नच विवरणरूपप स्प्रथमान्तता शङ्कनीया, 'विदपरमाप्नोती' ति पदविवरणेषु शेषप प्रथमान्तताया अदर्शनात् । आनन्दवल्ल्यां 'ब्रह्मविदाप्नोतिपरामि' ब्रह्मज्ञानात्परप्राप्तिमुक्त्वा सत्यज्ञानादिमन्त्रेण ज्ञेयज्ञानप्राप्तिप्राप्यस्वरूप विवृत्य, 'तस्माद्वाएतस्मादि' त्यादिना 'अन्नात्पुरुष' इत्य परमित्युक्तं परत्वं विपश्चितेति मन्त्रेण विवृतं पुनर्विवृत्य त विविच्य ज्ञापयितुं पुनरपि प्राप्यतोपयोगिपरत्वमुपपादयितुं ज्ञान प्रकारमुपपादयितुञ्च 'सवाएष पुरुषोन्नरसमय' इत्यारभ्य उत्तर सन्दर्भः प्रवृत्तः । तत्र स्थूलारुन्धतीन्यायेन ब्रह्म ज्ञापयितुं पञ्चक ... ... । अस्मिन्पक्षे 'तस्यैषएवे' ति वाक्यमुप

ह्म । वाक्यस्यायमर्थः — पूर्वस्यान्नमयस्यान्तरात्मतया
प एव तस्यान्नमयस्य शारीर आत्मापीति । परेतु —
एष तस्य पूर्वस्य शारीर आत्मेति' योजयन्ति । तत्र
अयमिति पदाध्याहारः , तस्य पूर्वस्येति भिन्नवा-
योरन्वय इत्यस्वारस्यं स्पष्टम् । अस्मिन्पक्षे पूर्वं प्रत्यु
रत्वं वाच्यम् , नतु सर्वत्र एकस्य शारीरत्वम् , जगत्कारण
आत्मा क इत्यपेक्षायां स्थूलारुन्धतीन्यायेन तत्प्रति-
र्थकोशपर्यन्तेषु पूर्वेष्वेतदारोपेण पञ्चमकोशे स्वरूप-
स्वरसं भवति, नतु प्रतिपर्यायमात्मनस्तदतिरेकबुद्धौ, नीह
पेण लिलिक्षयिषया प्रवृत्ते वाक्ये मध्ये उत्तरोपदेशादन्ये-
युक्तिमान् । 'तस्माद्वा एतस्मादात्मन' इत्यत्रात्मश-
व इति आत्मशब्दप्रसिद्धिनिबन्धनभ्रमवारणाय जीवादन्यत्व-
चकोशावतार इत्यपरः पक्षः । तत्र द्वितीयादित्रिकं दृष्टा
न्नमयात्प्राणमयोन्यः यथाच तस्मान्मनोमयः यथावा
यः एवं विज्ञानमयादानन्दमयोन्यः इति । अस्मिन्पक्षे
लि सर्वत्रैकस्य शारीरत्वं प्रतिपाद्यते । वाक्यार्थस्तु -
यश्शारीरस्स एव प्राणमयस्येति । कथमन्नमये शारीर
र्याये तथोपदेशादर्शनात् ? ननु 'सवा एष पुरुषोन्नरसमय'
ब्देन आत्मा परामृश्यते, तत्सामानाधिकरण्यं तच्छरीरत्वा
ति तेन वाक्येनान्नमये शारीरलाभ इति चेन्न ; —
इतस्य सृज्यस्य परामर्शादेष इति प्रत्यक्षदृष्टस्य निर्देशः ।
लाभः कथमितिचेत् ? उच्यते, 'आत्मनआकाश' इत्यात्म-
पुरुष' इति शरीरनिर्देशाच्च परस्पराकांक्षाबलादुभयसम्बन्धा-
। आनन्दमये 'तस्यैष' इति वाक्यमनन्यात्मत्वपरम् । स्थूला-

तरात्मतयैव प्रतिपिपादयिषिततया तत्संशब्दनसाफल्यात् । तत्र रीरत्वस्य रूपणार्थत्वे आनन्दमये तद्वैकल्यं पर्यायान्तरस्थत्वञ्चा- रसम्। अन्तरात्मत्वेनेव शारीरत्वेनापि लिलक्षयिषायान्नैतद्दोषद्वयं लगति तीयपक्षे आनन्दमये 'तस्यैष' इति वाक्यस्यानन्यात्मपरत्वेपि पर्या न्तरेष्विमानि वाक्यानि स्वरसानि ।

तत्र 'तस्माद्वा एतस्माद्विज्ञानमयात अन्योन्तर आत्मा नन्दमय त्यत्र सन्देहः - किमानन्दमयो जीवः, उत परमात्मेति ? 'तस्यैष ए ारीर आत्मे' ति आनन्दमयस्य शारीरत्वश्रवणात् स जीव एव, ब्रह्म देष्वन्यतमे तदन्यस्मिन्वा क्वचिदुपचितपुण्ये जीवे निरुक्तेक्षणात्मश तन्निष्ठमोक्षोपदेशहेयत्वावचनप्रतिज्ञाविरोधाभावस्वाप्ययगतिसामान्यश्रुतत्व नामुपपत्तेः; बहुस्यामिति प्रकृतेरशरीरतया परिग्रहादुपपद्यते, अः बहुस्यामिति भूयान् स्यामित्यर्थः, प्रजायेयेति जनयेयेत्यर्थः; अ न्यपक्षे तत्तेज ऐक्षतेत्यत्र तेजश्शब्दः कर्तृलक्षकः, प्रकृतिवियुक्तस्व रूपनिष्ठस्य मोक्ष उपपद्यते, कारणज्ञानेन कार्यज्ञानस्य विवक्षितत्व तस्य चेह सम्भवात्; जीवान्तरस्य तदकार्यस्याज्ञानेपि नदोषः, ः न्यात् तज्ज्ञानेन सर्वेषां ज्ञातप्रायत्वे वा प्रतिज्ञायास्तात्पर्यम् कल्पभेदेन पुरुषभेद इति पूर्वः पक्षः ।

तत्र राद्धान्तः आनन्दमयोभ्यासात् इति ।

आनन्दमय इति धर्मिणन्निर्दिशति, नेतरोनुपपत्तेरिति साध्य मन्यार्थं वक्ष्यामि, तदनेन सम्बन्धं स्यामिति प्रधानव्यावृत्तिमक तेनेतरइति जीवमवगमयिष्यामि, आनन्दवल्ल्यां 'सएकोमानुषआ ...' ...नन्दमयेनेन कृतं इदान

पदोपस्थापिततया मयडर्थोपस्थापकतयाच कृतशीघ्रोपस्थितिक-
शब्दाभ्यासं सद्वारकहेतुमभ्यासपदेन बोधयिष्यामीति भगवान्
ो मन्यते । अभ्यासग्रहणेनापरिच्छेदे वाक्यस्य तात्पर्यातिरेकं
प्रति । जीवायोग्यमानन्दयोगं द्वारहेतुं मन्यते । तदयमर्थः —
ात :– आनन्दमयो जीवादन्यः, आनन्दपदाभ्यासाविहितवाक्य-
ानिरतिशयानन्दयोगादिति । शारीरत्वं जगच्छरीरत्वादुपपन्नम् ।

## २ - विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १ - १ - १४

'नित्यं वृद्धशरादिभ्य' इत्यत्र भाषायामित्यनुवृत्तावप्यारम्भादेव
वे सिद्धेपि नित्यग्रहणं छन्दसि विकल्पार्थमिति वेदाचार्यो मन्यते ।
ार्थोयम्मयडानन्दमय इति; नहि सम्भवति स्वार्थिक इति, वैरूप्यर्थ्यात;
प्राचुर्यार्थः, जीवे वैपरीत्यदर्शनात्; अल्पदुःखसम्बन्धापत्त्या जीवत्व-
न जीवातिरिक्तेप्यसम्भवात्; तस्मादुपक्रमानुसाराद्विकारशब्द एवायम् ।
जीवातिरेके न सम्भवति, तस्य विकारत्वानङ्गीकारात्, जीवत्वानन्द
ष्टरूपस्य कादाचित्कस्यानन्दाधीनतया कथञ्चिद्विकारार्थो युज्यते; जीवस्य
आनन्दरूपस्य स्वतस्संसारित्वावस्थावा तद्विकार :; अत आनन्द-
नेतर इति न, मयडर्थविकारानन्वयादिति शङ्कार्थः । विकारार्थत्वस्य
तरयोरसम्भवात् अन्नरसप्राणमनोविज्ञानवृत्तिप्राचुर्याणां पूर्वमयडर्थत्वात्
ार्यस्य धर्म्यन्तरे सजातीयाल्पतया ऽप्युपपत्तेस्तस्यैवानन्दवल्ल्यां
पादनाच्च प्राचुर्यशब्दएवायम्मयट्; पूर्वत्र प्राचुर्यं समानाधिकरण
ातीयाल्पत्वमपेक्ष्य, शरीर इव पुरुषेन्नरसांशादितरांशोल्पः, प्राणे
वृत्तेरपादानादिवृत्तिरल्पा, मनस्यपि जाग्रत्स्वप्नावस्थापेक्षया सुषुप्त्य-
थाया अल्पत्वान्मनोवृत्त्यभावोल्पः, तत्कालाल्पत्वेन तदल्पता, जीवे
नवृत्त्यपेक्षया सुखादिवृत्तिरल्पा, एवं सर्वत्र समानाधिकरणाल्पसिद्धावपि
नन्दमये व्यधिकरणस्य जीवानन्दस्यामनुष्यानन्दादाचतुर्मुखानन्द

त्वस्य प्रकरण एव मयडर्थनिरूपणार्थमेव प्रतिपादनान्मयट्
र्थार्थ एव ।

३ - तद्धेतुव्यपदेशाच्च ॥ १ - १ - १५ ॥

जीवानन्दहेतुत्वेनायमानन्दमय उपदिश्यते - "कोह्येवान्यात् कः
यात् यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाती ' ति । आनन्दयित
दानन्दयितान्यः । 'यदेष आकाश आनन्द' इति आनन्दमयः परामृश्यते ।
कामयते' ति प्रकृतमानन्दमयमुक्त्वा 'असद्वा इदमि' ति श्लोकेनापि तमे-
क्त्वा 'रसोवैस' इति पुनस्तस्यैव परामर्शात् 'सएष' इति स एव हि
मृश्यते ।

४ - मान्त्रवर्णिकमेव च गीयते ॥ १ - १ - १६ ॥

"ब्रह्मविदाप्नो" ति परमिति जीवप्राप्यतया प्रतिपन्नं ब्रह्म 'सत्यं ज्ञान-
न्तं ब्रह्मे' ति मन्त्रवर्णेनोच्यते, तदेव तद्विवरणार्थप्रवृत्ते पञ्चकोशवाक्ये
नन्दमयशब्देनोच्यते, अतः प्राप्यप्राप्तृभेदस्यावश्यकत्वादानन्दमयो नेतरः ।

जीवस्यैव शुद्धं स्वरूपं प्राप्यतयोच्यते, इत्यत्राह —

५ - नेतरोनुपपत्तेः ॥ १ - १ - १७ ॥

इतरो जीवो मुक्तावस्थोपि न मान्त्रवर्णिकः, विपश्चित्वस्य जीवे
नुपपत्तेः; विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । इदमेव विपश्चित्त्वं
सोकामयते' ति विवरिष्यते, 'ब्रह्मणा विपश्चिते' त्युक्तब्रह्म-
ब्दार्थविवरणानन्तरं विपश्चिच्छब्दार्थविवरणस्योचितत्वात् ।

६ - भेदव्यपदेशाच्च ॥ १ - १ - १८ ॥

'तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमय' इति
वाद्भेदव्यपदेशाच्चायमानन्दमयो नेतरः ।

७ - कामाच्च नानुमानापेक्षा । ॥ १ - १ - १९ ॥

अनुमीयत इत्यनुमानं प्रधानम्, तच्चानुमानपदं तत्कार्यशरीरपरम्,

ायमर्थः - कामादेव विचित्रजगत्सृष्टिः श्रूयते, तस्यच न शरीरापेक्ष भवति, तदानीं शरीरसर्गासिद्धेः, तस्मादीदृशसर्गकर्ता आनन्दमयो नेत ते ।

८ - अस्मिन्नस्य च तद्योगं शास्ति ॥ १ - १ - २० ॥

अस्मिन्निति विषयसप्तमी । अस्मिन्नानन्दमये अस्य-जीवस्य, तद्योगम् ानन्दयोगम्, शास्ति शास्त्रं- "रसोवैसः रसं ह्येवायं लब्ध्वानन्दी भवती ' ति ग्रशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवती॥ च्यमाने यल्लाभाद्य आनन्दी भवति स स एवेत्यनुन्मत्तः को ब्रवीतीति ।

ननु साधकस्याभ्यासादित्युपक्रान्तत्वात् कृत्स्नसाधकोपन्यासानन्त ाधकपरिहारो युक्तः, तत्कथं प्रथमसूत्रानन्तर्यं विकारसूत्रस्येति चेत् थमसूत्रशेषत्वात्तदानन्तर्यमिति ब्रूमः, प्रथमसूत्रे हि मयडर्थः प्राचुर्यं ातुलया विवक्षितम्, एवञ्चानन्दमयः परमात्मा, "तेये शतमानन्दाः" "सए मानन्द" इत्यभ्यासाधीननिरतिशयत्वाधिकरणानन्दयोगस्य मयटा प्रा ादनादित्यर्थः । अत्र हेत्वसिद्धिशङ्कापरिहारार्थं द्वितीयसूत्रम् । तत्र 'विक ाब्दान्नेतिचेदि ' त्येतत् पूर्वपक्षसाधकपरं हेत्वसिद्धिपरं च मन्तव्यम् ।

परेतु – किमिह प्रियमोदादिरूपकल्पितशिरःपक्षाद्यवयवयुक्त ऽपास्य आनन्दमयो जीवः प्राधान्येन प्रतिपाद्यः, ब्रह्मतु पुच्छरूपतदवयव निर्दिश्यते ; उत शुद्धं ब्रह्मैव पुच्छशब्देनानन्दमयस्याप्याधार स्वप्राधान्येन प्रतिपाद्यते, आनन्दमयस्त्वन्नमयादिवत्तत्प्रतिपत्त्युपायतामात्रे निरूप्यते ? इति संशयः । तत्र पुच्छशब्दमुख्यत्वानुरोधात् ब्रह्मणोवयव मिति पूर्वपक्षे राद्धान्तः — आनन्दमयोभ्यासादि ति ।

आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्य ' असन्नेव सभवती' ति निगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वात् ।

ननिगमनं तेन, आनन्दमय एव निगमनश्लोकविषयोस्त्विति शङ्क

भ्यतद्वारम् । आनन्दमयो न ...

भ्यासदर्शनात्, अभ्यस्यमानं ब्रह्मशब्दम्प्रत्यानन्दमयस्य मुख्य
भावादेकं पुच्छपदमनुरुध्यानेकस्य ब्रह्मशब्दस्यानन्दमये जघन
कल्पनानुपपत्तेः ; एकबाधादनेकबाधस्यान्याय्यत्वेन उपक्र
प्रबलत्वात् । सूत्रस्य सिद्धान्तसाधकत्वेन योजनायामानन्दम
आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म लक्षणीयम्, सिद्धान्तसाधकहेत्व
निरासकत्वयोजनायामीक्षतिसूत्रान्नञमनुवर्त्य निषेध्याध्याहारेण
पूरणीयम् । ब्रह्म पुच्छमभ्यासादित्यार्जवेन सूत्रे कर्तव्ये आनन्दमयोऽभ्या
सूत्रकरणस्यैतत्प्रयोजनम्— यदीक्षतिसूत्रान्नञनुवर्तनेन तद्विनिषेध्याध्य
चानन्दमयो न निगमनश्लोकप्रतिपाद्य इति हेत्वसिद्धिशङ्कानिरासकहेतु
मपि लभ्यत इति । प्रयोजनान्तरञ्च व्यवहितानन्तरसूत्रे दर्शयिष्
स्यादेतत् , पुच्छशब्दस्याभ्यस्यमानब्रह्मशब्दमुख्यतानुरोधेन मुख्या
तस्य प्रतिष्ठापदेनैवाधारत्वलाभेनाधारलक्षणाया अप्यनुपपन्नत्वेमानर्थ
प्राप्नुयात्, ततश्चानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन
ब्रह्मशब्दादपि पुच्छशब्द एव बलीयानित्याशयवतीं शंकामनुभाष्य
करोति—" **विकारशब्दान्नेति चेन्न प्राचुर्यात्** ।

विकारपदेनावयवो लक्ष्यते , तद्वाची पुच्छ
विकारशब्दः, स एव विकारो विगतकार्यः अनर्थक
'अकर्तरिच कारके संज्ञायामि' ति कर्मणिघञन्तः कारशब्दः का
एवमर्थान्तरस्यापि गर्भीकरणायावयवशब्दादिति वक्तव्ये विकारश
स्युक्तम् , तथाच पुच्छावयववाचिनस्तदर्थपरित्यागे लक्षणीयार्थाभावेन
नर्थक्यात् पुच्छशब्दाद्धेतोर्न ब्रह्म प्राधान्येन प्रतिपाद्यमिति चेदिति श
प्राचुर्यादिति तन्निराकरणांशस्यायमर्थः - प्राचुर्यात् - अवयवप्रायव
पुच्छशब्दोपपत्तेरिति । इदमुक्तं भवति - अन्नमयादीनां शिरआदिष्
न्तेषु अवयवेषूक्तेष्वप्यानन्दमयस्यापि शिरःपक्षाद्यवयवान्तरोक्त
प्रायपाठानुसारेण पुच्छपदेन कस्मिंश्चिदर्थे निर्देष्टव्ये आनन्दमयं

ारत्वेन ब्रह्मणि च प्रतिपादनीये तदुभयानुग्रहलाभाय 'ब्रह्म पुच्छं प्रतिष्ठे
याह श्रुतिः, नावयवविवक्षयेति । नन्ववयवविवक्षाभावे कथमवयववाचि
पुच्छपदप्रायपाठानुग्रह इति चेन्न;-तथापि पुच्छपदमात्रप्रायपाठानुग्रहलाभात्
बृहदारण्यके पञ्चाग्निविद्यायां "असौ वा व लोकोऽग्निर्गौतम तस्यादित्य
एव समिद्रश्मयो धूमा" इत्यादिषु पञ्चसु पर्यायेषु 'अथैनमग्नये हरन्ति
तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूम' इत्यादिषष्ठपर्याये सांपातिकाग्नि
समिद्धूमादिविषयत्वेन मुख्याग्निसमिद्धूमादिविषयत्वेनच भेदे सत्यपि अग्नि
समिद्धूमादिशब्दप्रयोगैकरूप्यवदिहापि पुच्छपदप्रयोगैकरूप्यस्यावैकल्यात्
ननु तथाप्यानर्थक्यमपरिहृतमेव, प्रतिष्ठापदेनैवाधारत्वलाभात्; न
यथा कान्तिमान्मुखचन्द्र इत्यत्र स्वशब्देनैव कान्तिमत्त्वे लब्धेपि मुखे
गौणं चन्द्रपदमपि दृश्यते तथेह प्रतिष्ठापदेनाधारत्वे लब्धेपि तल्लम्भक
पुच्छशब्दोऽपि स्यादिति चेन्न,—वैषम्यात्, तत्रहि चन्द्रस्य यावत
कान्तिः तावती मुखे स्तुत्यर्थं प्रतिपिपादयिषिता, नच तावती कान्ति
मच्छब्देन लभ्यते, तस्य मानान्तरसिद्धमुखगताल्पकान्तिमात्रविषयत्वे
चारितार्थ्यात्, अतश्चन्द्रतुल्यकान्तिमत्त्वलाभाय चन्द्रपदमुपयुक्तम्
इहतु ब्रह्मणि प्रतिष्ठात्वसङ्कोचकमानान्तराभावात्तस्य निरपेक्षसर्वप्रतिष्ठा
प्रतिपादकश्रुत्यन्तरानुरोधाच्च निरतिशयमाधारत्वं प्रतिष्ठापदेन लभ्य
इति किमत्र पुच्छपदेन करिष्यते, प्रत्युत पुच्छतुल्याधारत्वलक्षणा
पुच्छस्याधारत्वमाधारान्तरसापेक्षं सातिशयमिति ब्रह्मणस्तथाभूतमाधार
लक्षयत्पुच्छपदं अनिष्टार्थमेव स्यादितिचेत्? उच्यते, आधारत्वसामान्ये
पुच्छवद्भावविशेषिततया तेन लक्षणीयम्, श्रोतृबुद्ध्यवतरणाय- पक्षि
पुच्छमाधार इति दृष्टम् एवं पक्षितया रूपितस्यानन्दमयस्य
पुच्छवदाधार इत्युक्ते दृष्टान्तमुखेन सम्प्रतिपत्तिर्भवति, ब्रह्मणि क्व
... अत्रानन्द

न्त्याधारत्वम् ...

पुच्छपदप्रयोगमुखेन दृष्टान्तमुद्राख्य व्यञ्जितः श्रोतृबुद्धयवतरणाय

लोकेपि प्रातिस्विकशब्ददर्शितार्थमात्र एव दृष्टान्तोपन्यासः प्रचुरो दृश्यते

यथा यो यो धूमवान् सोऽग्निमान्यथा महानस इति, यथा वा 'एको हि

दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क' इति। नच दृष्टान्तो

पन्यासेन सर्वात्मना तदीयधर्मसदृश एव धर्मस्सिद्धयतीति नियम

येन पुच्छपदेन पुच्छवदाधारत्वलक्षणायां सापेक्षाधारत्वमनिष्टं प्राप्नुयादि

शङ्क्येत, 'आकाशवत्सर्वगतश्च नित्य' इत्यादीनां प्राचुर्येण दर्शनात्

नहि ब्रह्मणस्सर्वगतत्वे नित्यत्वे च प्रतिपादनीये श्रोतृबुद्धयवतरणायाका

दृष्टान्तोपन्यासेन ब्रह्मणोप्याकाशवदापेक्षिकमेव परिच्छिन्नं सर्वगतत्वन्नि

त्वञ्च प्राप्यते। सूत्रे प्रायपाठादिति स्पष्टं वक्तव्ये प्राचुर्यादिति वच

प्रागन्नमयादिपर्यायेषु प्रतिपर्यायं पुच्छशब्दसद्भावेन तत्प्राचुर्यरूपं प्रायपा

मन्यत्रापि श्रोतृबुद्धयवतरणाय दृष्टान्तोपन्यासप्राचुर्यं तदर्थदृष्टान्तोपन्या

स्थलेषु प्रतिपिपादयिषिते दृष्टान्तदृष्टहीनधर्मानापत्त्युदाहरणप्राचुर्यञ्च

सङ्गृहीतुम्। स्यादेतत्, नकेवलमेकस्य पुच्छशब्दस्य स्वारस्यमनुरुध्

निगमनश्लोकस्यानन्दमयविषयत्वं कल्प्यते, येन तस्याभ्यासाद्दुर्बल

नाधारलक्षकत्वं समर्थ्येत, किन्तु कृत्स्नस्यानन्दमयवाक्यस्य स्वारस्यम

रुध्य, कृत्स्नेनापि ह्यानन्दमयवाक्येन 'ब्रह्मपुच्छं प्रतिष्ठे' त्यन्ते

वयव्यानन्दमयः पूर्वपर्यायेष्वन्नमयादिवच्छिरःप्रभृतिपुच्छान्तसकलावय

पेक्षया प्राधान्येन प्रतीयते, अतः प्रथमश्रुतानेकावान्तरवाक्यघटितमह

वाक्यविरोधादभ्यस्तस्यापि ब्रह्मशब्दस्यानन्दमये जघन्यवृत्तिकल्पनं यु

मित्याशङ्क्याह — तद्धेतुव्यपदेशाच्च।

'इदं सर्वमसृजत यदिदं किञ्चे' ति सानन्दमयं विकारज

प्रति ब्रह्मणस्स्रष्टृत्वोपदेशादपि ब्रह्म स्वप्राधान्येनैव प्रतिपाद्यम्। त

ोप्यसञ्जातविरोध्यानन्दमयवाक्यानुसारेण कथञ्चिद्दृष्टद्वारा स्रष्टर्यानन्द
ये ऽप्यवतिष्ठताम् ; नैवम्, 'सोऽकामयते' त्यारभ्य कामनापूर्वकसक्
पञ्चस्रष्टृत्वप्रतिपादनात् तस्य च तत्रान्वेतुमयोग्यत्वात् । इदं
त्रान्वेतुमयोग्यत्वं सूत्रे व्यपदेशादिति व्युपसर्गेण लभ्यते । विशि
पदेशो व्यपदेशः । स च जीवेन्वेतुमयोग्येन कामनापूर्वकत्वेन विशिष्ट
ष्टृत्वनिर्देशः । चकारेण निगमनश्लोकस्यापि तत्रान्वेतुमयोग्यत्वं सम्
च्चीयते । नह्यानन्दमये प्रियमोदादियुक्ततया लोकप्रसिद्धे निगमनश्लो
ोक्ता सत्त्वासत्त्वशङ्कान्वेति । चकारेण 'कोह्येवान्यात्कः प्राण्यात्
देष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति' 'भीषास्माद्वातः पवत
त्याद्युत्तरसन्दर्भगतसर्वप्राणप्राणयितृत्वप्रशासितृत्वोपदेशा अपि समुच्ची
न्ते । एतेपि हि जीवेन्वेतुमयोग्याः । अतो बहुबाधस्यान्याय्यत्वाद
नन्दमयवाक्यस्यैव पुच्छपदमात्रलक्षणासाध्यं ब्रह्मप्राधान्यं अभ्युपगन
युक्तम् । सूत्रे तच्छब्द आनन्दमयपरः, आनन्दमयसूत्रे पुच्छब्रह्मलक्ष
कस्याप्यानन्दमयपदस्य मुख्यार्थतया तस्य सन्निधापितत्वात् । न
पूर्ववाक्यगतशब्दसन्निधापितस्यापि पूर्ववाक्यार्थान्वयिन एव सर्वना
परामर्श इति नियमोस्ति । तथा नियमाभ्युपगमेपि नानुपपत्तिः, आन
मयसूत्रस्य द्वितीययोजनायामानन्दमयस्य वाक्यार्थान्वयित्वात् । इदम्
ब्रह्म पुच्छमस्याभ्यासादिति सूत्रे कर्तव्ये आनन्दमयोभ्यासादिति सूत्रक
गस्य प्रयोजनम्, यदानन्दमयस्यात्र सर्वनाम्ना परामर्शनात्र सूत्रला
लाभः । एवमुपक्रमगतबहुप्रमाणविरोधेन प्रथमश्रुतस्याप्यानन्दमयवाक्य
ब्रह्मप्राधान्यं समर्थितम् । इदानीं परमोपक्रमानुसारेणाप्यानन्दमयवाक्य
ब्रह्मप्राधान्यं सिद्ध्यतीत्याह — मान्त्रवर्णिकमेव च गीयते ।

यत् 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति मन्त्रवर्णे स्वप्रधानतया प्रकृतं ब्र

प्रकृतवाचना तच्छिदनानुक्र...

तदेवेदं 'ब्रह्म पुच्छं प्रतिष्ठे' ति ब्रह्मपदेन गीयत इति तस्यैव स्व

युक्तम्; स्वप्रधानमान्त्रवर्णिकब्रह्मोपस्थापकप्रथमश्रुतब्रह्मपदानुसारेण

श्रुतस्यानन्दमयवाक्यस्य वर्णनीयत्वात्। ननुच मन्त्रवर्णे ब्रह्

'आत्मन आकाशस्सम्भूत' इत्यात्मनः प्राधान्यावगमादात्मशब्द

आनन्दमयः प्रधानं कुतो न स्यादिति शंकानिरासार्थमेवकारः सूत्रे प्र

मान्त्रवर्णिकस्य ब्रह्मण एव प्राधान्यमनुसरणीयम्, उपक्रमगत

नतु तदनन्तरश्रुतस्यात्मन इति भावः। यद्यप्यभ्यासादिति

मन्त्रगतमपि ब्रह्मपदं क्रोडीकर्तुं शक्यम, तथापि 'ब्रह्मविदाप्नोति

त्येतदनन्तरं किन्तद्ब्रह्मेति जिज्ञासायां लक्षणमुखेन तन्निर्धार

मन्त्रस्तावद्ब्रह्मप्रधानः, तदेवच ब्रह्म 'तस्माद्वा एतस्मादि'

सन्दर्भे सर्वनाम्नानुकृष्टं सदिहापि 'ब्रह्म पुच्छं प्रतिष्ठे' ति स

निर्दिश्यत इति पूर्वसन्दर्भप्रवृत्तिपर्यालोचनया प्रकरणस्य ब्रह्मप्राधा

करणाय मान्त्रवर्णिकसूत्रम्। स्यादेत्, 'ब्रह्मविदाप्नोती'

सन्दर्भस्य 'असन्नेवसभवती' त्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्ये

मयवाक्ये आनन्दमयस्य प्राधान्यम् तत्र ब्रह्मणः कल्पितपु

उपसर्जनत्वञ्चास्तु, ब्रह्मपरयोः पूर्वापरसन्दर्भयोरुपास्योपसर्ज

जगत्कारणत्वादिगुणसमर्पकतया वाक्यैकवाक्यतोपपत्तेरित्याशङ्क

**नेतरोऽनुपपत्तेः।**

इतर आनन्दमयो न प्राधान्येन प्रतिपाद्यः, उपक्रमोपसंहारा

प्राधान्यविरोधेन उपास्यानन्दमयाविशेषणगतगुणसमर्पणार्थत्वकल्पन

स्यादेतत्, पूर्वापरसन्दर्भयोर्ब्रह्मप्राधान्येपि आनन्दमयवाक्ये

पुच्छभावेनोपसर्जनत्वमस्तु, क्वचिद्वाक्ये उपसर्जनस्यान्यत्र

विरोधित्वादित्याशङ्क्य 'ब्रह्मविदाप्नोति परमि' त्यस्मिन् प्रकरणे प्र

स्य शुद्धब्रह्मण उपास्यमानन्दमयं प्रति विशेषणत्वन्न सम्भवती भिप्रायेणाह— **भेदव्यपदेशाच्च** ।

भेदविरोध्यपदेशो भेदव्यपदेशः, देहप्रपञ्चमिथ्यात्वपर्यवसायी— तो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न भेति कुतश्चने' त्युपदेशः, तद्विरोधात् , प्रियाद्यवयवयुक्तस्सविशेष आन मय उपास्योपि न प्रतिपाद्यः, निर्विशेषस्य मुमुक्षुज्ञेयस्य कल्पित च्छभावेनोपास्यं सविशेषं प्रति विशेषणत्वायोगात् , किन्तु ज्ञेयं निर्वि षं पुच्छब्रह्मैव प्रतिपाद्यम् । ननु भृगुवल्ल्यां अन्नप्राणमनोविज्ञा मेण पञ्चपर्यायाम्नातस्यानन्दमयस्य प्राधान्येन प्रतिपाद्यत्वं स्था म्यादनुमीयते; नच 'ब्रह्मविदाप्नोति परमि' ति मुमुक्षुज्ञेयब्रह्मोप मस्य 'यतो वाच' इति निर्विशेषोपसंहारस्यच विरोधः, ताभ्य करणस्य शुद्धब्रह्मपरत्वेपि मध्ये कल्पितपुच्छभावसविशेषोपसर्जनकस्य स्यस्यानन्दमयस्य प्रतिपादनसम्भवादित्याशङ्क्याह — **कामाच्च** **नुमानापेक्षा** ।

काम्यत इति कामो भृगुवल्ल्याम्नात आनन्दः, तद्दृष्टान्तम म्ब्यानन्दमयस्य प्राधान्यानुमानेपि प्रत्याशा न कार्या, तत्र श्रुत्यैव न्दमयस्य उपक्रान्तब्रह्मरूपतया 'आनन्दो ब्रह्मेति व्यजानादि' ाक्षात् 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति लक्ष खेनच पर्यवसानप्रतिपादनात्तदनन्तरमन्यस्य प्रतिपादनाभावादिहान यप्रतिपादनानन्तरं ब्रह्मप्रतिपादनात्तत्रैव पूर्वोत्तरसन्दर्भसमन्वय इ षम्यसम्भवात् । सूत्रगतेन चकारेणान्नमयादिभ्यः प्राणमयादीनामि न्दमयादान्तरत्वेन ब्रह्मणोनुपदेशमालम्ब्याप्यानन्दमयस्य प्राधान्या ानप्रत्याशा न कार्येति समुच्चीयते । यद्यपि सूत्रे कामादिति स्थ पष्टार्थमानन्दादिति वक्तुमुचितम् , तथाप्यनेनैव सूत्रेणानन्दमयाध

पूर्वाधिकरणोक्तगतिसामान्यप्रपञ्चनार्थमर्थान्तरमपि क्रोडीकर्तुं
त्युक्तम् । स्यादेतत्, निर्विशेषप्रकरणमध्येपि सविशेषब्रह्मोप
पासनाविधाने सम्भाविते सत्यानन्दमयवाक्ये विध्यश्रवां
दुपासनाविधिकल्पनमुपपद्यत इत्यानन्दमयवाक्यं तत्प्रधानमस्त्वित
अस्मिन्नस्यच तद्योगं शास्ति ।

अत्रैव प्रकरणे 'रसो वै सः - रसं ह्येवायं लब्ध्वानन्दी
शास्त्रं रसो वै स इति पुच्छब्रह्मणो निरतिशयानन्दरूपत्वं
तत्र हेतुत्वेन "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुप
ति श्रुत्यन्तरसिद्धमानन्दगयं तद्विषयानुभवजन्यसुखवृत्तिषु ।
ब्रह्मानन्दलेशं लब्ध्वा निर्वृतो भवतीत्यमुमर्थं शास्ति, अ
मयपरामर्शस्य निरतिशयानन्दरूपपुच्छप्रतिपत्तिशेषत्वं क्लृप्त
मयवाक्येपि तदुपन्यासस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वमेव युक्तम्
सनार्थत्वम्, सूत्रेस्मिन्नस्येति सर्वनाम्नि पुच्छानन्दमयपरे लयं
सूत्रे आनन्दमयपदेन लक्षणामुख्यवृत्तिभ्यामुपस्थापितत्वात् ।
मित्यत्र तच्छब्दः पूर्वसूत्रगतकामशब्दोक्तानन्दपरामर्शी । र
न्पुच्छब्रह्माणि आनन्दमयस्यानन्दयोगं 'रसंह्येवायमि'
शास्तीति सूत्रार्थः । चकारेणान्यत्र क्लृप्तिमनपेक्ष्य सम्भवत्ये
मिति न्यायेनाप्यानन्दमयवाक्ये तदुपन्यासस्य ब्रह्मप्रतिपत्तिशेषत्
तीत्ययमर्थः समुच्चीयते ।

परेषामेव योजनान्तरं — किमिह "सत्यं ज्ञानमनन्
ति प्रकृतं परमेव ब्रह्मानन्दमयशब्देनोच्यते,
न्नमयादिवद्ब्रह्मणोर्थान्तरमिति ? किन्तावत्प्राप्तम् ? ब्रह्मणोर्था
कुतः ? प्रियाद्यवयवयोगाच्छारीरत्वश्रवणाच्चेति । अत्र राद्धान्तः,

ानन्दमयः, अभ्यासात् , परस्मिन्नेव ह्यानन्दशब्दो बहुकृत्वोभ्य
ते - " रसंह्येवायं लब्ध्वानन्दीभवति कोह्येवान्यात्कः प्राण्यात् यदे
काश आनन्दो न स्यात् एषह्येवानन्दयाति " " सैषानन्दस्य मीमांस
ाति " " एतमानन्दमयमात्मानमुपसङ्क्रामति " " आनन्दं ब्रह्मणो
द्वान् " " आनन्दो ब्रह्मेति व्यजानादि " ति । यत्तु - प्रियादीन
रस्त्वादिकल्पनानुपपन्नेति; अनन्तरोपाधिजनिता न स्वाभाविकीत्यदोषः
रीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् , नपुन
ाक्षादेव शारीरत्वं संसारिवत् । तस्मादानन्दमयः परमात्मा
कारशब्दान्नेति चेन्न प्राचुर्यात् ।

नानन्दमयः परमात्मा भवितुमर्हति, विकारशब्दात् , आनन्द
य इति मयटो विकारार्थत्वादिति चेन्न; - प्राचुर्यार्थेपि मयट्स्मरणात्
ानन्दप्रचुरत्वञ्च ब्रह्मणो मनुष्यादारभ्योत्तरोत्तरस्मिन् स्थाने शतगुण
ानन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतशयत्वावधारणात् , तस्मा
ाचुर्यार्थे मयट् । तद्धेतुव्यपदेशाच्च ।

इतश्च प्राचुर्यार्थे मयट्, " एषह्येवानन्दयाती " ति ब्रह्म
ानन्दहेतुत्वव्यपदेशात् ; योऽन्यानानन्दयति स प्रचुरानन्द इ
सिद्धम् , तस्मात् प्राचुर्यार्थे मयटस्सम्भवादानन्दमयः पर एवात्मा
ान्त्रवर्णिकमेवच गीयते ।

" सत्यं ज्ञानमि " ति मन्त्रवर्णोक्तमेव ब्रह्मेह गीयते - " अन्यो
तर आत्मानन्दमय " इति । मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम् । तस्म
ानन्दमयः पर एवात्मा । नेतरोऽनुपपत्तेः ।

इतश्चानन्दमयः परएवात्मा नेतरः । इतर इतीश्वरादन्यस्संसा
ीव इत्यर्थः । न जीव आनन्दमयः, 'सोकामयते' त्याद्युक्तसर्वविका
[illegible]

भवती " ति जीवानन्दमययोर्भेदेन व्यपदेशात् । न हि लब्धव्यो भवति । **कामाच्च नानुमानापेक्षा ।**

आनुमानिकमपि सांख्यकल्पितमचेतनं प्रधानमानन्द कारणत्वेन वा नापेक्षितव्यम् , आनन्दमयाधिकारे ' सोकामयत प्रजायेये ' ति कामयितृत्वनिर्देशात् । **अस्मिन्नस्यच तद्योगं श**

इतश्च न प्रधानं जीवो वानन्दमयः, यस्मादस्मिन्नानन्दमये आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति शास्त्रम् । त योगस्तद्योगः - तद्भावापत्तिः, मुक्तिरित्यर्थः । तद्योगं शास्ति " यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्म्येनिरुक्तेऽनिलयने ऽभयं प्रतिष्ठां अथ सोभयं गतो भवति — यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरु तस्य भयं भवती " त्यादि । तस्मादानन्दमयः परमात्मेति ।

अपरेतु – किमन्नमयादयः पञ्चापि विष्णुरेव, उतान संशयः ? किं प्राप्तम् ? अन्य इति । कुतः? अन्नमयादिश विकारवाचिनः, मयट्प्रत्ययस्य विकारार्थेनुशासनाद्विकारस्य सम्भवादिति । एवं प्राप्ते राद्धान्तः - अन्नमयादयो विष्णुः, ब्र भ्यासात् । तस्य च विष्णावेव रूढत्वात् । "तदेव ब्रह्मपरमामि" ति **विकारशब्दान्नेति चेन्न प्राचुर्यात ।**

नान्नमयादयः परमात्मा, विकारवाचिनो मयट् शब्दस्य णात् , परमात्मनोन्नादिविकारत्वानुपपत्तेः ; नच ब्रह्मशब्दानु अमुख्यार्थसम्भवात् ; नच मुख्यार्थे बाधकाभावः, विकारार्थस्य त्ययस्य बाधकत्वादि चेन्न; – मयटो विकार इव प्राचुर्येपि " वचनेमयडि ' त्यनुशासनात , सावकाशेन मयटा निरवकाश शब्दस्य बाधासम्भवात् । आनन्दमयशब्दस्य विष्णुवाचित्वा टश्च प्राचुर्यार्थत्वं हेत्वन्तरेणोपपादयति— **तद्धेतुव्यपदेशाच्च ।**

आनन्दमयप्रकरणे श्रूयते - "कोह्येवान्यात्कः प्राण्यात् यदेष
काश आनन्दो नस्यादि" ति । अस्यार्थः - आसमन्तात्काशमानो
णुर्यदि पूर्णानन्दो न स्यात्तदाऽसौ न लोकं प्रवर्तयेत् , आनन्दोद्रेक
तरेण तत्प्रवृत्तौ हेत्वभावात् । तदा च लोके कश्चेष्टयेत् ? धर्मादौ च
प्रवर्तयेत । अन्यस्यास्वातन्त्र्यात् । अतो लोकचेष्टान्यथानुपपत्त्या
कर्ता विष्णुः पूर्णानन्द इति । यद्यानन्दमयो विष्णोरन्यः, मयट्च
कारार्थः, तदा श्रुतिरन्यस्यानन्दविकारत्वे हेतुं ब्रूयात् , विष्णोर्महा
दत्वे हेतुकथनमसङ्गतमेव । तस्य - विष्णोः, तस्मिन्महानन्दत्वे जग
ेष्टकत्वलक्षणहेतुव्यपदेशादिति सूत्रार्थः । तदिति षष्ठ्यन्तं सप्तम्यन्तं च
त्रेणोपात्तम् । मान्त्रवर्णिकमेव च गीयते ।

"सत्यं ज्ञानमनन्तं ब्रह्मे" ति मन्त्रवर्णप्रतिपादितमेव वस्तूत्तरेण ग्रन्थेन गीयते
तश्चान्नमयादयः परं ब्रह्मेत्यर्थः । परपक्षं प्रतिक्षिपति—**नेतरोऽनुपपत्तेः**

विष्णोरितरो नान्नमयादिः, अनुपपत्तेः— "सर्वं वै तेऽन्नमाप्नुवन्ति येऽ
ह्मोपासत " इत्यादिना अन्नमयादिज्ञानान्मोक्षः प्रतीयते, इतरपरत्वे तदनुप
ेः, 'नान्यः पन्था' इति निषेधादित्यर्थः। ननु जीव एवान्नमयादिशब्दार्थ
ाच तद्धेतुव्यपदेशाद्यनुपपत्तिः, जीवब्रह्मणोरेकत्वस्य विवक्षितत्वेन तदु
ापत्तेरित्याशंक्याह - **भेदव्यपदेशाच्च** ।

"स यश्चायं पुरुषे यश्चासावादित्ये स एक" इति जीवब्र
ेदस्यैवात्रोपदेशेनाभेदस्याविवक्षितत्वान्नान्नमयादिर्जीव इत्यर्थः । नन्वस्त्व
ानादभेदसिद्धिः नचोक्तभेदोपदेशविरोधः , अनुमानविरोधेन तस्यैवा
रत्वोपपत्तेरित्यत्राह- **कामाच्च नानुमानापेक्षा** ।

अनुमानस्य कामगामित्वेनादृष्टार्थनिर्णयेऽनपेक्षिततया बाधकत्वायो
दित्यर्थः । **अस्मिन्नस्य च तद्योगं शास्ति** ।

अस्मिन् - अनुवाकद्वये, अस्य— 'स य एवंवि' दित्युक्त

संक्रम्ये" त्यादिनाच । अतो नान्नमयादयः कोशा इति ।

अन्येषामेकदेशिमते संशयपूर्वपक्षराद्धान्तेषु सिद्धान्तान्न विशे तद्धेतुव्यपदेशाच्चेत्यत्र तु विशेषः, आनन्दमये विकारप्राचुर्ययोस्स रणस्य मयटो वाक्यशेषप्रतिपन्नार्थो ग्राह्यः, 'एषह्येवानन्दयाती' ति व शेषेच 'सोकामयते' त्यानन्दमयं प्रकृत्याम्नाते आनन्दमय एव ज नानन्दयतीति श्रूयते, तस्यच यथा स्वयं धनपरिग्रहरहितोपि ऋषिरः णान्यान् धनवतः करोति तद्वदनुग्रहमात्रेणानन्दवतः करोतीति न किन्तु स्वानन्दैकदेशेनानन्दवतः करोतीति, "एतस्यैवानन्दस्यान भूतानि मात्रामुपजीवन्ती" ति श्रुत्यन्तरात्; प्रागत्रापि "रसोवैसः ह्येवायं लब्ध्वानन्दी भवती" ति श्रवणाच्च । ननु विषयविशेषसम्प जायमानैरानन्दैः आनन्दवत्त्वेनानुभूयमानानां जीवानां नित्यसिद्धब्रह्मान देशैरानन्दवत्त्वोक्तिर्नोपपद्यत इति चेन्न;— विषयसम्पर्कादिकारणवश तम्येनाभिव्यक्तो ब्रह्मानन्द एव जीवैरास्वाद्यते, स एव मानुषानन्द स्युत्तरोत्तरशतगुणत्वेनाम्नायते, तथा च वाक्यशेषे सर्वजीवापेक्षया रानन्दशालित्वमानन्दमयस्य प्रतिपन्नमिति स एव मयडर्थो युक्त इति

अपरे तदेकदेशिनः प्राहुः-'यो वेद निहितं गुहायां परमे व्योम स्यत्र प्रतिपन्ना ब्रह्मणो गुहा ऽन्नमयादिवाक्यैः कोशचतुष्टयरूपा प्रदश गुहामध्ये तदवस्थानस्थलतया निर्दिष्टं चिच्छक्तिरूपं परमं व्योम नन्दमयवाक्येन विशिष्येदन्तया प्रदर्श्यते, आनन्दमयशब्दश्च प्र नन्दपरः, जगत्कारणमानन्दमयो न जीवः, किन्तु ब्रह्मानन्दरूपचिच्छ तस्याभ्यस्तानन्दरूपत्वासम्भवादिति सूत्रार्थः । प्रायपाठानीतविकार प्रयुक्तजीवशङ्कानिराकरणार्थं पूर्ववदेव द्वितीयसूत्रं योजनीयम् । पूर्व तत्र हेत्वन्तरप्रतिपादनार्थन्तृतीयसूत्रम् । तत्रायमर्थयोजनायां विशेष

रसो वै सः' 'यदेष आकाश आनन्द' इत्यानन्दमयस्यानन्दरूपतामुक्त्वं
श्रते - 'एष ह्येवानन्दयाती' ति । अतो यथा प्रचुरो जलराशिः स्वैक
शैः केदारान् जलवतः करोति एवं प्रचुर एवानन्दः स्वैकदेशैः जीवा
नन्दवतः कुर्यान्नत्वप्रचुर इति वाक्यशेषश्रुतानन्दवत्त्वकरणान्यथानुपपत्त्य
तीयमानं प्राचुर्यमेव मयडर्थो युक्त इति ।

अन्येतु तदेकदेशिनः प्राहुः - "अस्माल्लोकात्प्रेत्य एतमन्नमः
त्मानमुपसंक्रामती' त्याद्यावन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसम्ब
गत् संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमाच्चैते सर्वथान्न
याद्य आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारण
भूताः पुरुषाः, अन्नमयाद्यात्माधारस्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह
त्प्रतिष्ठेत्युच्यते । संशयस्तु - 'सोकामयते' त्यादिना जगत्कारणत्वेः
तिपाद्यमानः आनन्दमयः किमाकाशाभिमानी आधिकारिकः पुरुषः, किं ब
रमशिवाख्यं ब्रह्मेति ? अत्र पूर्वः पक्षः- चेतनत्वोपासनाप्राप्यत्वलिङ्गस
ृतया पञ्चसंख्यया 'आकाशस्सम्भूत' इत्यादिप्राचीनवाक्यप्रतिपन्नपञ्च
भूतविपरिवृत्त्यनुगृहीतयान्नमयादयः पञ्च भूताभिमानिनः अधिकारपुरु
ति निश्चिते स्थानप्रमाणादानन्दमय आकाशाभिमानीति युक्तमिति
द्धान्तस्तु - आनन्दमयो ब्रह्म, निरतिशयत्वेन अभ्यस्यमानानन्दस्य ब्र
येवोपपत्तेः, विकारभूताधिकारिकपुरुषविशेषपरत्वेनावगतादप्यानन्दम
ाब्दात्तदवच्छिन्नब्रह्मप्रतीतिरुपपद्यते । नेतरोनुपपत्तेरित्यधिकरणशेषञ्च हिरण
र्भनिरासकमधिकरणान्तरं वर्णयन्ति । नेतरोनुपपत्तेः ।

इतरो हिरण्यगर्भः "यतः प्रसूता जगतः प्रसूती" इत्यादिवाक
प्रतिपाद्यो न भवति, जगत्प्रसूतिहेतुत्वादीनां तत्रानुपपत्तेः । हिरण्यगर्भस
रमेश्वरेणाभेदाज्जगत्कारणत्वमस्त्वित्याशंक्याह भेदव्यपदेशाच्च ।

"यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः" "हिरण्यगर्भं पश्य

परमेश्वरस्य श्रूयते, सा सृष्टिः "प्रजापतिरकामयत प्रजाः सृजेय ...
मुखस्यापि श्रूयते, अतः कामनासृष्टिलिङ्गाच्चतुर्मुखः परमेश्वर
इत्याशङ्क्याह **कामाच्च नानुमानापेक्षा ।**

कामलिङ्गकानुमानन्नादरणीयमित्यर्थः । **अस्मिन्नस्य च तद्योगं शा**

अस्मिन्नुपनिषत्तन्त्र एवास्य हिरण्यगर्भस्य तद्योगं - तस्य
मेश्वरस्य शेषत्वसम्बन्धं शास्ति मन्त्रभागः - "ब्रह्माधिपतिर्ब्रह्मणोधिप
त्यादिरिति ।

**इतरेतु**- आनन्दमयः किं प्रत्यक् , उत प्रकृतिः, अथवा परं
संशयः । पूर्वपक्षस्तु - प्रत्यगेवानन्दमयः, अपरोक्षान्नाद्यवयवालम्
पास्त्युपदेशात्; प्रकृतिर्वा, साक्षाद्विकारक्षमत्वात्; तत एव च साक्ष
सम्भवादन्नाद्यवयवानाञ्च साक्षादेव प्राकृतत्वादानन्दावयवत्वसम्भवा
अत्र राद्धान्तः, - **आनन्दमयोऽभ्यासात्** ।

आनन्दमयो ब्रह्म, ब्राह्मणामेवासाधारणरूपनाम्नामानन्दमये
भ्यस्यमानत्वात् । "सोकामयत बहुस्या" मित्यादितः प्रकृतानन्द
बहुभावेक्षणतत्पूर्वकजगत्स्रष्टृत्वतदनुप्रवेशादीनि हि ब्रह्मणो
भ्यस्यन्ते । **तद्धेतुव्यपदेशाच्च** ।

यस्मात् प्रकृतस्यानन्दमयस्यानन्दहेतुत्वमानन्दयितृत्वं व्यप
श्रुतिः "एषह्येवानन्दयाती" ति, अतो ब्रह्मैवानन्दमयः । **का**
**नानुमानापेक्षा** ।

अनुमानं स्मृतिः कापिली, तत्सिद्धमानुमानं प्रधानम् , तस्य
मयतया प्रतिपादनापेक्षादुराशा कापिलानाञ्च युक्ता, कुतः! कामात
इहानन्दमयं प्रकृत्य 'सोकामयते' त्यादितः बहुभावकामनापूर्व
श्रूयते. यतश्च न समास्ति जडस्य कामनायोगः ।

अत्र परपक्षे शुद्धब्रह्मणि वेदान्तानां समन्वयः प्रतिपादित इति
ङ्गतावुक्तम् ; तत्र किं बृहतिधातुनिष्पन्नबृहतिर्बृंहयतीति यास्कनिरु-
ब्रशब्दसामर्थ्यबलात्सूत्राणान्निर्विशेषतात्पर्यसिद्धिः? उत ज्ञाताज्ञाता
द्वयसापेक्षजिज्ञास्यत्वबलात्? अथवा निर्विशेषायोग्यजगत्कारणत्वबलात् ?
वा अहमिति प्रत्यक्षसिद्धे वस्तुनि शास्त्रगम्यत्वोक्तिबलात् ? अथवा
नञ्चेव वस्तुनि समन्वयप्रतिपादनबलादीक्षणादियोगप्रतिपादनबला-
न विघ्नः । वस्तुतो ब्रह्मणो निर्विशेषत्वादिति यदि; तर्हि पूर्वकाण्ड
णामपि निर्विशेषपरत्वं किन्नोच्यते । वस्तुतो निर्विशेषत्वेपि व्याव-
कपदार्थानामपि विद्यमानतया शब्दस्वारस्यानुरोधाद्यदि व्याव-
कविषयत्वं तेषां सूत्राणामिष्यते, तदा एषामपि सूत्राणां तत एव व्याव
कविषयत्वमपर्जनीयमिति न निर्विशेषविषयत्वम् । अस्याश्च चिन्तायाः
प्रयोजनम् ? न ब्रह्मसिद्धिः, पूर्वपक्षिणापि तदङ्गीकारात् । नचा-
न्वाक्ये तत्प्रतिपादनसिद्धिः, तस्यापि तथात्वात् । नच प्राधान्येन
तिपादनसिद्धिः, तदसिद्धावपि ब्रह्मसिद्धेरैकरस्येन तत्सिद्धेः प्रयो-
भावात् । तदसिद्धौ 'सोकामयते' त्यस्य प्रधानविषयतया ऽऽनन्द
स्य प्राधान्याज्जीवस्यैव कारणत्वं स्यात्, अतो ब्रह्मकारणत्वसिद्धये
ान्यं प्रसाध्यत इति चेत् ; तर्हि 'तद्धेतुव्यपदेशादि' ति सूत्रविरोधः-
णः प्राधान्ये सिद्धे तस्य वाक्यस्य ब्रह्मपरत्वसिद्धिः, सिद्धे च ब्रह्म
वे ब्रह्मणः प्राधान्यसिद्धिरिति । किञ्च किमत्र शाब्दप्राधान्यं विव-
म् ; उतार्थप्राधान्यम् ? नाद्यः, सर्वपर्यायेष्वपि शिरःप्रभृतीनां शाब्द
ान्यस्य राजपुरुष इत्यत्र पुरुषस्येवावर्जनीयत्वात् पूर्वपक्षानुपपत्तेः ।
द्वितीयः, शिरःप्रभृत्यवयवकस्य प्राधान्यस्यावर्जनीयतया सिद्धान्तानुपपत्तेः।
त्र स्थूलारुन्धतीन्यायेन प्रतिपिपादयिषा किमानन्दमये पर्यवसिता--उतब्रह्म
ते विचार्यते, अतः प्रतिपिपादयिषापर्यवसानभूमित्वमेव प्राधान्यमिति
? तदप्यानन्दमय एव प्रतीयते, अन्नमयमुखेन प्राणमयस्य तन्मुखेन मनो
स्य तन्मुखेन विज्ञानमयस्य च प्रतिपिपादयिषाव तन्मुखेनानन्दमयस्यैव प्रति

त्वा तद्रूपयत्वेन श्लोकमप्युक्त्वान्नमयप्रतिष्ठाभूतपुच्छान्तरत्वेन
मयन्तत्प्रतिष्ठान्तरत्वेन मनोमयन्तत्प्रतिष्ठान्तरत्वेन विज्ञानमयन्तत्प्रतिष्ठा
नानन्दमयञ्च निर्दिश्य, तत्प्रतिष्ठात्वेन ब्रह्म निर्दिशेत् - तदानीं
रुन्धतीन्यायेन लिलक्षयिषायाः पुच्छे ब्रह्मणि पर्यवसानं स्यात् ।
दृश्यते । नन्वानन्दमयशब्दाभिलप्यजीवाधारत्वेन ब्रह्म प्रति
द्यिषितम् , तत्र दृष्टान्ततया कोशचतुष्टयावतारः, यथा एतत्पु-
दः प्रतिष्ठात्वन्तथा ब्रह्मपुच्छस्यापीति चेत् ? तथासति तत्तत्पर्या-
पुच्छस्यैव प्राधान्येन श्लोकानान्तद्विषयतापत्तेः, 'तस्माद्वा एतस्मा' दिति
यचतुष्टयवैयर्थ्यापत्तेश्च । किञ्च प्रथमसूत्रे प्रथमयोजनायामानन्दमय
दे लक्षणा, वृत्तवर्तिष्यमाणसूत्रेष्वनुपस्थितप्रतिज्ञाध्याहारः, अभ्यास
द्रागुपस्थिताभ्यासार्थतात्यागः । यद्यपि सन्निहितोयं ब्रह्मशब्दा-
सः; तथापि आनन्दाभ्यासस्य भूयस्त्वात् — सूत्रे आनन्द
इत्यानन्दग्रहणान्मयडर्थोपपादकत्वाच्च स एव स्वरसतो बुद्धौ सन्नि
। द्वितीययोजनायां नञध्याहारः, वैदेशिकपदाध्याहारः, अभ्यासपदे
त्रिदोषः । अतो योजनाद्वयमपि त्रिदोषम् । सन्निवेशप्रयोजनञ्चासिद्धम्
पुच्छमभ्यासादित्युक्तेपि आवृत्तस्य सूत्रस्य ब्रह्मपुच्छं निगमनश्लोकप्रतिपाद्यं
ब्रह्मशब्दाभ्यासदर्शनात् , अभ्यस्यमानं ब्रह्मशब्दं प्रत्यानन्दमयस्य
स्यार्थत्वाभावादित्यर्थसम्भवात् । एवं सति पूर्वयोजनायां लक्षणादो
तीययोजनायां नञध्याहारदोषश्च चिकित्सितौ भवतः । प्रयोजन
रञ्च अव्यवहितानन्तरसूत्रे दूषयिष्यते । किञ्च, श्लोके ब्रह्मपदयोर्जी
त्वमेव युक्तम् , आनन्दमयस्यैव पर्यायप्रधानत्वात् । यदि लिंग
तेः बलीयस्तया पुच्छब्रह्मपरत्वमेव; तर्हि प्रधानपरत्वमेव श्लोकस्यास्तु
दे प्रधानपरत्वं श्लोकस्य प्रकरणाद्गतमित्युच्येत; तर्हि प्रकरणस्य
स्यत्वे श्लोकस्य शिरःप्रभृतिसम्बन्धिपरत्वन्तस्यैव पर्यायप्राधान्यं शि

ापूर्वं मयडन्तार्थसम्बन्धित्वेनैव शिरःप्रभृति पुच्छान्तमवगतम् , तद्प्येषश्लोक ' इति च सर्वत्र पर्यायेषु तच्छब्देन शिरःप्रभृतिसम्ब-ेव परामृश्यते, अत एवमाद्यनेकप्राकरणिकार्थानुसारादानन्दमयपरत्व श्लोकस्य युक्तम् । एतत्सर्वं पृष्ठीकृत्य ब्रह्मश्रुत्यनुसरणे प्रधानविष-ं बाधित्वा श्लोकस्योपसर्जनपुच्छविषयत्वमेवाङ्गीक्रियताम् ।

किञ्चात्रेदं विवेचनीयं किन्तत्तत्पर्यायेष्वन्नमयादीनां प्राधान्यात-ायतया श्लोकस्य प्रधानविषयत्वम् ? उत श्लोकप्रतिपाद्यत्वात्तेषां ान्यम्? आद्ये कथं श्लोको भृत्यं राजपदेऽभिषिञ्चेत् ? न द्वितीयः; श्लोकप्रति ं प्रधानमिति श्रुतिवाक्यस्य कैरप्यनध्ययनात् । एवञ्चावयव ातिसम्बन्धिनोः प्रधानोपसर्जनभावस्य लोके सम्प्रतिपन्नत्वादिहापि त्वे सति अवयवसम्बन्धिनामुपसर्जनसम्बन्धित्वं प्रतिसम्बन्धिसम्बन्धिनां नसम्बन्धित्वञ्च सिद्ध्यति, ततश्च श्लोकस्य प्रधानसम्बन्धित्वमुप नसम्बन्धित्वं वा प्रमाणबलादवगन्तव्यम् , न हि श्लोकः प्रधानसम्ब-तेवा उपसर्जनसम्बन्धीतिवा प्रमाणं दृश्यते । प्रकरणानुरोधे आनन्दमय यत्वेनैव प्राधान्यं स्यात् , ब्रह्मश्रुत्यनुरोधे पुच्छविषयतया अप्रा ं स्यात् , नपुच्छप्राधान्यमिति । द्वितीयसूत्रे पदार्थवाक्ययोजना स्याभावः स्पष्ट एव । सन्निवेशप्रयोजनञ्चासङ्गतम् ; अवयवशब्दा ुक्तेपि वैयर्थ्यसूचनसम्भवात् , अवयवप्रतिपादकशब्दादित्युक्त्याहि ातिपादने वैयर्थ्यं सूचयितुं शक्यत एव । सिद्धान्ते अवयवपरत्वा प्रायपाठानुग्रहो न स्यात् । पूर्वपर्यायेषु पुच्छशब्दैः सर्वपर्यायेष्वप्य बाचिशिरःप्रभृतिशब्दैश्चावयवपरिग्रह एव हि दृष्टः । तेनानिष्टसाधकं र्यम् । यश्च तथापि प्रायपाठानुग्रहे दृष्टान्तोपन्यासः, सोनुपपन्नः, दृष्टा ा विषमत्वात् । तत्र ब्राह्मिसमिद्धमबुद्धिस्सर्वत्राविच्छिन्नैव । अतो

बृहदारण्यके ब्रह्मप्राप्तिरेव फलं, नत्वैक्यम् , नित्यसिद्धत्वादिति द्योतन
'असतो मा सद्गमये' ति । अत्र 'सद्गमये' त्येव वक्तव्ये असतसङ्गमव
भेदगर्भ एव सत्सङ्गमोपीति ज्ञापनार्थं असत इत्युक्तम् । तदभिप्रायेणै
'मृत्योर्मा मृतं गमये' ति पुनरप्युक्त्वा 'अमृतंमाकुर्वि' ति परमसाम्य
पत्तेः फलत्वेन कीर्तनाच्च । इदमेव 'परमं साम्यमुपैति' 'एषावै ब्रह्मैकं
ति स्पष्टमेव प्रतिपाद्यते । अतोत्र ब्रह्मप्राप्तिरेवोच्यते । ततश्च किन्तद्ब्रह्म
कीदृशं तद्वेदनम्? कीदृशी च तत्प्राप्तेः पुरुषार्थता? इत्यपेक्षायां 'सत्यं ज्ञा
मनन्तंब्रह्मे' ति ब्रह्मस्वरूपन्निर्धार्य, 'यो वेद निहितं गुहाया' मिति हृद
पुण्डरीकमध्याध्यासीनत्वेन वेदनं प्रदर्श्य, तत्फलभूतायास्तत्प्राप्तेर्निरतिश
पुरुषार्थरूपत्वं 'सोश्नुत' इत्यादिना प्रतिपादितम् । 'ब्रह्मणे' ति स
योगे तृतीया । तथाच ब्रह्मणा सहानवधिकातिशयासङ्ख्येयकल्याणगुण
दीननुभवति । एवमनुभाव्यतयोक्तब्रह्मगुणान्तर्गतं द्विविधं कारण
नियमनमपि 'आत्मन आकाशस्सम्भूतः' 'सोकामयत' 'भीषास्माद्वा
पवत' इति दर्शितम् । अनन्तरमनुभाव्यगुणान्तर्गतस्यानन्दस्यापरिच्छे
द्यत्वं 'यतो वाचो निवर्तन्त' इत्युक्तम् । तिष्ठत्वयन्तत्वार्थः; 'यतोव
इत्यादेः निर्विशेषपरत्वे प्रकरणावगतमानन्दप्राधान्यं दुरपह्नवम् ।

सप्तमेपि शब्दास्वारस्यं स्पष्टम् । किञ्च समानप्रकरणे भृगुवल्ल
आनन्दे उपदेशपरिसमाप्तिदर्शनात् तस्यचानन्दमयत्वस्य 'एतमा
न्दमयमात्मानमुपसंक्रम्ये' त्यवगमादिहाप्यानन्दमय एवोपदेशपरिसमा
प्तस्यैव प्राधान्यं युक्तम् । प्रतिपर्यायं शिरःप्रभृत्यवयवानां उपदेशस्यार्थान्त
पदेशत्व एव ब्रह्मपुच्छोपदेशस्याप्यर्थान्तरोपदेशत्वं स्यात् । न च भृगुवल्ल
जीव एव समाप्तौ 'इमान् लोका' निति फलश्रुत्यसम्भवः, निर्विशेषब्रह्माभे
भिव्यक्तिरूपफलस्याश्रवणेन दोषाभावादेतादृशफलस्यान्यतोपि सम्भवाद

...वाक्यस्योपदेशो सत्यन्तरात्मोपदेशस्य पुच्छपर्यन्तत्वात्... ...नव्यवसितम् ; ईक्षतिसूत्रेणैव सङ्कल्पश्रुतिमतीषु श्रु ...निरवकाशीकरणेन तच्छङ्काया अनुन्मेषात् । चरमसूत्रे ...साध्यान्तराध्याहारात् । किञ्च — वाक्यान्तरे ... ...नुरोधेनात्रापि तथा वैपरीत्यं दुरवह्नम् । अस्य च पूर्ववाक्यान्य ...लकानि सन्ति । समुच्चयोप्यनुपपन्नः; उपक्रमोपसंहारयोः पुन ...शेषत्वे एकवाक्यताया इष्टत्वात् , शेषत्वाभावे उपक्रमानुसारेणानन्दमय ...नाथ...न्भावेन एकवाक्यताया असम्भवात् । तस्माद्यथावृत्ति ... ...नुगृहीतरीत्यैवानन्दमयब्रह्मवादोंगीकार्यः ।

अत्र यदुक्तमानन्दमयो ब्रह्मेति न युज्यते, अन्नमयादिगतविकारार्थ समायपठितेन मयटा तस्य विकारार्थत्वावगमात् । ननु — प्रायप सिद्धः, अन्नमये विकारार्थस्योपक्रान्तत्वेपि प्राणमयादिषु तत्परित्याग प्राणवृत्तिप्राचुर्येण हि पञ्चवृत्तिर्वायुः प्राणमय इति व्यपदिष्टः, न तु प्राणक त्वेन ; एवमन्तःकरणजीवावपि मनोवृत्तिविज्ञानप्राचुर्येण मनोमयो विज्ञान इति निर्दिष्टौ ; ततश्चानन्दमयेपि प्राचुर्यमेव मयडर्थः ; नचानन्दप्रा मपि ब्रह्मणि सम्भवति, प्राचुर्यस्य समानाधिकरणविजातीयाल्पत्वप्र योगिकतायाः 'ब्राह्मणप्रचुरो ग्राम' इत्यादौ दृष्टत्वेनानन्दस्य प्राचुर्यार्थस्व व्यात् ईषद्दुःखसंभिन्नत्वादिति वाच्यम् , प्रचुरप्रकाशस्सवितेत्यादौ व्य करणविजातीयाल्पत्वप्रतियोगिकताया अपि दृष्टत्वेन ब्रह्मणि जीवग ल्पत्वमपेक्ष्य तत्प्राचुर्यसम्भवात् ; इतिचेन्न;- 'स वा एष पुरुषोन्नरसः' इत्यत्र हि न देह एवोच्यते, तस्यान्नपरिणामवाचिना रसशब्देन विव वाचिनाऽन्नमयशब्देनवोक्तिसम्भवे 'अन्नरसमय' इत्यस्य वैयर्थ्यात् । ... शब्दस्यच चेतनवाचित्वादन्नात्पुरुष इत्यव्यवहितपरामर्शस्यैष इत्यनेन सि तया स इत्यस्य व्यवहिताकाशादिकारणात्मपरामर्शित्वात् । किञ्च

ाशादिकारणत्वेन निरूपितः, एषः— अनुपदमन्नकार्यत्वेन निरूपितश्च

, अन्नरसमयः —— अन्नरसं देहमनुप्रविश्य तदवच्छिन्नतया तत्कार्य

यते, तथाचान्नात्पुरुष इति निर्दिष्टमाकाशादिकारणरूपस्य पुरुषस्यान्न

ं अन्नकार्यदेहावच्छेदलब्धपरिच्छिन्नाकारतयेति विवृतं भवति । एवं

यो मनोमयो विज्ञानमयश्च प्राणमनोबुद्ध्यवच्छिन्नतया तद्विकारभूतो

एवेति युक्तम् । किञ्च मयटः प्राचुर्यार्थत्वं वदतस्तत्रापि मते जीव

न्दमय इति सिद्ध्यति, आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भ-

। प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेपि

यत्वे समानाधिकरणविजातीयाल्पत्वमेव निरूपकमिति व्युत्पत्तिसिद्धम्।

एव प्रचुरब्राह्मणो ग्राम इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वा-

पि ब्राह्मणप्रचुरो ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं

ते । न च प्रचुरप्रकाशस्सवितेतिवत् प्रकाशप्रचुरस्सवितेति प्रयोगेपि

दिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यमतीयते, न तु सवितृगततमोल्पत्वा-

, तत्र तमसो बाधितत्वादिति शङ्क्यम् ; तत्रापि तुहिनसैहिकेयाच्छा-

पिततमोल्पत्वमपेक्ष्यैव घनाद्यपसरणसमये तथाप्रयोगात् , तदभावे

ुत्पन्नप्रयोगाभावात् । अपिचान्यत्र व्यधिकरणसजातीयाल्पत्वमपेक्ष्य

प्रयोगसम्भवेपि प्रकृते त्वदभिमतप्रायापाठानुसारेण समानाधिकरण-

ीयाल्पत्वमपेक्ष्यैव तत्प्रयोगो निर्वाह्यः । तथा हि — प्राणमये तावत्

तेवायुगतमेव व्यानादिवृत्त्यल्पत्वमपेक्ष्य , ततोन्यत्र प्राणवृत्तीना

त् ; एवम्मनोमयेपि मनोवृत्तिप्राचुर्यं मनोगतवृत्त्यभावमपेक्ष्यैव,

मयेपि जीवे ज्ञानप्राचुर्यन्तद्गतज्ञानात्मकसंस्काराल्पत्वमपेक्ष्यैव पर्य

। । किंबहुना ? एवं त्रिषु प्राचुर्यार्थत्वमुपगतवतोन्नरसमयेपि देहे-

तराल्पत्वमपेक्ष्यान्नपरिणामरूपावयवप्राचुर्यमेव मयडर्थ इति वैरूप्य-

ार्थं बलादायाति। एवमानन्दमयेपि समानाधिकरणात् ख्याल्पत्वापेक्षया-

न ब्रह्म; शिर:पक्षाद्यवयवयोगात् ; न च कल्पितमवयवित्वं न ब्रह्मत्व विरोधि, अन्यथा ब्रह्मणोऽवयवत्वमपि नास्तीति पुच्छब्रह्मणोऽप्यब्रह्मत्व प्रसङ्गादिति वाच्यम्, पुच्छपदस्याधारलक्षकतयावयवकल्पनानङ्गीकारेण दृष्टान्तासम्प्रतिपत्तेः । पुच्छत्वेन निर्दिष्टात् ब्रह्मण आनन्दमयस्य व्यतिरेक प्रतीतेश्च नानन्दमयो ब्रह्म । ननु- आनन्दमयस्य 'पुच्छं ब्रह्मे' ति निर्देशो न ब्रह्मत्वविरोधी, अन्नमयस्य स्वस्मादनतिरिक्तैः स्वावयवैरेव 'तस्येदमेव शिर' इत्यादिना शिर:पुच्छादिमत्त्वकल्पनदर्शनात् , अनतिरिक्तैः पक्ष पुच्छादिमत्त्वकल्पनप्रायपाठानुगुण्येन ब्रह्मानन्दमययोरभिन्नयोरेव पुच्छतद्वद्भावनिर्देशे तात्पर्यकल्पनस्योचिततया ततो व्यतिरेकाप्रतीतेरिति चेन्न;— शिर:प्रभृतीनां अन्नमयादिशब्दोदितचेतनातिरिक्तत्वात् , अन्नमयादिशब्दानाञ्चेतनपर्यन्तत्वानङ्गीकारेपि मनोमयपक्षशिर:पुच्छानां ऋक्सामयजुरथर्वाङ्गिरसानामातिरिक्तत्वेनान्नमयादिष्वप्यवयवावयविभावादिकृतभेद-सद्भावेन च तथा प्रकरणासिद्धेः स्वरसतःप्रतीयमानस्य व्यतिरेकस्य त्यागायोगात् । अन्नमयादिपर्यायेषु प्रधानानान्तत्पर्यायगतश्लोकविषयत्व-दर्शनेन स्वपर्यायगतश्लोकाविषयस्यानन्दमयस्याप्राधान्याच्च नानन्दमयो ब्रह्म । न चानन्दमयस्य श्लोकाप्रतिपाद्यत्वमसिद्धम् , श्लोकानां पुच्छवद्विषयत्व नियमदर्शनादिति वाच्यम् ,— मनोमयपर्यायगतस्य 'यतो वाचो निवर्तन्त ' इति श्लोकस्य ब्रह्मविषयस्य पुच्छवद्विषयत्वाभावात् ; 'तस्यैष एव शारीर आत्मा, यः पूर्वस्ये' ति अन्नमयादीनामिवानन्दमयस्याप्यात्मान्तरश्रवणादपि नानन्दमयो ब्रह्म । ' अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्धयन्तामि ' ति शुद्धयत्वश्रवणाच्चेति ।

अत्रोच्यते—

प्राणमयादिषु मयटःकथञ्चिद्विकारार्थत्वसिद्धयेऽन्नमयादीनां यज्जीवपरत्वमुक्तन्तदनुपपन्नम्, मयटःप्राचुर्यार्थत्वे विकारार्थत्वे वान्नमयशब्दस्य शरीर परत्व

त्; नच सिद्धान्ते प्राणमनश्शब्दयोर्वृत्तिपरत्वेनास्वारस्यं
म्, परपक्षे पञ्चानामपि मयटामस्वारस्यात्, उपक्रमपर्याय
नुसारेण तावन्मात्रस्य सह्यत्वाच्च। ब्रह्मण आनन्दरूपतायाः
कारवृत्तिविशिष्टरूपताया वानन्दाधीनत्वादानन्दविकारतया त्वद-
ेवाभेदाद्वा कथंचिद्विकारार्थमयटो ब्रह्मण्यपि सम्भवेनानन्दमयस्या
धनासम्भवाच्च। "अन्नमशितं त्रेधा विधीयते" इत्याद्यनुसारेण
म्। "सवा एष पुरुषोऽन्नरसमय' इत्यत्र तच्छब्देन न कारण
। तथाहि— "ब्रह्मविदाप्नोति परमि"ति ब्राह्मणं सत्यादिवाक्येन
य, सत्यत्वादीनाञ्छान्दोग्यानुसारेण चेतनाचेतननियन्तृत्वानन्याधीन
ार्वेश्यत्रिविधपरिच्छेदराहित्यादिरूपतया तस्य वाक्यस्य चिद-
ुणवस्तुप्रतिपादकत्वेपि व्याख्यानेन विना तदप्रतिपत्तेस्तद्व्या-
ा कारणत्वं नियमनादिव्यञ्जकमुपदिश्य, आत्मशब्देनाप्यचेतनं
; आत्मशब्देन किं जीव एवोच्यते उतान्यः? 'अन्नात्पुरुष' इति
नोक्तस्यात्मन एव कथं कार्यत्वमुच्यते? कथं चात्मनो भूतोपादानत्व
विचिकित्सां प्रतिपत्तॄणां वारयितुं विशिष्टोपादानपरत्वस्फोरणाया-
ः जीवान्तर्यामिपर इति ख्यापनाय पञ्चकोशावतारः। तत्रा-
शब्दानां पुरुषशब्दपर्यन्तानां वस्तुतः परमात्मपरत्वात् प्रसिद्ध-
ेन प्रणाड्या परमात्मानं प्रत्याययितुं पुरुषशब्देन विशेष
नेर्दिष्टं शरीरं पृथङ्निर्दिशति "स वा एष पुरुषोन्नरसमय" इति।
न्नात्पुरुष' इत्यत्र उपसर्जनतया निर्दिष्टः, एषः— प्रत्यक्षदृष्ट
ख्यः, पुरुषोन्नरसमयः। अतो न तच्छब्देन कारणपरामर्शः।
ा परमात्मनो लिलक्षयिषितत्वादेव पुरुषशब्दश्शरीरपर एव
यद्वा इयमरुन्धतीति स्थूलनक्षत्रवत् 'एषोन्नरसमयस्सपुरुषः

भूत आत्मे ' ति वा शरीरे परमात्मारोपः क्रियते । उत्त
येष्वप्यारोपार्थं स एष इत्यनुवर्तनीयम् , अर्थाद्वा तदर्थलाभः
प्रयोजनवशादाहार्यारोपः । किञ्च - स वा एष पुरुषोन्नरसमय ' इत्
त्मनश्शरीरावच्छेदपरत्वे ततः प्राचीनं वाक्यमनवच्छिन्नात्मपर
प्रतीतेः स्थूलारुन्धतीन्यायेन ज्ञातव्यन्न किञ्चिदिह शिष्यते । प्राचु
व्यधिकरणसजातीयापेक्षत्वं युज्यत एव । या च विशेषणत्वविशेष्य
व्युत्पत्तिभेदकल्पना, सा आशामोदकमात्रमेव, घनाद्यपसरणसमये इ
प्रचुरप्रकाश इत्येव बहुशः प्रयोगात् , चन्द्रादयं प्रकाशप्रचुरस्स
त्यादिप्रयोगाच्च । अहो नु खलु काकस्य कार्ष्ण्याद्धवळः प्रस
यद्घटपदव्युत्पत्त्यनुसारेण पटपदमपि तत्रैव व्युत्पादयितुमुद्युङ्क्षे ।
मयडेव प्रचुरशब्दः । यत्तु समानाधिकरणविजातीयापेक्षाया एव प्र
पूर्वपर्याये दर्शनादिहापि तथा भवितव्यमिति ; तन्न, तथापि म
वैरूप्यस्य तुल्यत्वात् , पूर्वपर्यायेपूपाधिसम्बन्धस्य कार्यतया उ
सम्बन्धिन उपाधिविकारत्वमुच्यते, आनन्दमये तूपाधिप्रतिबिम्बि
पाध्यवच्छिन्नस्य वानन्दाधीनत्वमात्रेण तद्विकारत्वमुच्यते । इ
विशेषः, विकारार्थत्वपक्षे मयडर्थ एव वैरूप्यम् , प्राचुर्यार्थत्वप
मयडर्थवैरूप्यम् , किन्त्ववधिमात्रमिति । वस्तुतस्तु प्राचुर्यं विव
सारात सापेक्षन्निरपेक्षं च, बहुत्ववत् ; यथात्र बहवो वर्तन्त
निरपेक्षम् , तस्माद्देशादस्मिन् देशे बहव इति सापेक्षम् , एवमि
क्वचिद्व्यधिकरणसजातीयसापेक्षं क्वचित्समानाधिकरणविजातीयसापेक्षं
न्निरपेक्षम् । एवञ्च सर्वत्र नैरपेक्ष्यस्यापि सम्भवान्नानन्दमयस्य ज
सिद्धिः । यदि तु प्रकरणं बहुमन्यामहे तदा "सैषानन्दस्य मीमांसे" त्य
व्यधिकरणं जीवानन्दाल्पत्वमपेक्ष्यैव ब्रह्मानन्दस्य प्राचुर्यप्रतिपाद

सजातीयापेक्षामिच्छावस्तदा व्यधिकरणसजातीयांशस्य बाधितत्वात्
त्वमात्रं सिद्ध्यति, तच्च सापेक्षत्वं यथाप्रमाणं समानाधिकरणसजातीये
पादनीयमिति । अवयवित्वं च न ब्रह्मत्वविरोधि, प्रियमोदादि
ह्मत्वानन्दत्वरूपोपाधिभेदेन भेदकल्पनया ब्रह्मणोऽप्यवयवित्वरूपणोप
। पुच्छपदस्याधारलक्षकत्वे रूपकप्रकरणविरोधः स्पष्टः । एतेन पुच्छि
पे निर्व्यूढः, औपाधिकभेदोपपादनात् । यदि स्वाभाविकभेद एष्टव्यः,
तर्हि जीवब्रह्मणोरैक्यम । पूर्वपूर्वपर्यायेष्ववयविन एव प्राधान्य
ादिहाप्यानन्दमयस्यैव प्राधान्यात्तस्यैव ब्रह्मत्वात् श्लोकस्यापि तद्वि-
षात्, 'असन्नेवे' ति श्लोकानुरोधेन न काप्यनुपपत्तिः । 'तस्यैष
शारीर आत्मे' त्यत्र उत्तरोत्तरस्य पूर्वपूर्वशारीरात्मत्वपक्षे शारीरा
मुपपन्नमेव । पक्षान्तरे प्यात्मत्वानन्दप्राचुर्यरूपोपाधिभेदेन शारीरत्व
ादनन्यात्मत्वोपदेशपरत्वाद्वा शारीरत्वमुपपन्नम् । यदुक्तं पूर्वापर-
प्रस्थानामिवानन्दमयपर्यायस्थितस्यापि "तस्यैष एवे" ति वाक्यस्य
ब्रह्मरूपात्मान्तरपरत्वोपपत्तौ प्रक्रमविरुद्धार्थकल्पनमयुक्तमिति; तन्न,
र्यायेष्ववयवातिरिक्तस्यैव शारीरत्वोक्त्या प्रक्रमविरोधस्य त्वन्मते
रिहारात् । शुद्धिश्च यथायोग्यमेव । अत एवेदं कर्पूरोदकमिद-
दकमिदमुशीरोकमिदं शुद्धोदकमिति प्रचुरप्रयोगः । कस्य चित्पुरुषस्य
नश्चित्क्रोधे सति अयमस्मिन्कलुषहृदय इति वक्तारो भवन्ति,
तु निवृत्ते इदानीमयमस्मिन् शुद्धहृदय इति । केवलशब्दसमा
कतया च शुद्धशब्दो लोके बहुळं प्रयुज्यते । कैवल्यं च यथा
क्षमिष्यते, यथोचितश्च विवक्ष्यते । ततश्च ब्रह्मण्यनादिभवसञ्चि
कजीवापराधकलुषिते मुक्त्यर्थं प्रसाद्यस्वरूपं शोध्यत्वं सम्भवत्येव ।
ादानन्दमयस्य ब्रह्मत्वे न किञ्चिद्बाधकम् । साधकानि च भूयांसि ।

व, ब्रह्मणि जन्यानन्दानामपि यथाप्रमाणमङ्गी तथैवोत्सर्गतः प्राप्तम् । क्वचित् बाधात्तदभावे सति । श्लोकाश्चावयविविषया एव दृश्यन्ते । "तदप्येष तत्- तत्र, एष श्लोको भवतीत्यर्थः । तत्रेत्यवयव्येव ापि 'तदप्येष श्लोको भवती' ति वाक्यं असन्नेवेति । एव । मनोमयश्लोको मनोविषय एव, मनस ्कत्वात्, निवृत्त्युक्त्या प्रसक्तिमुखेनातिशयप्रसिद्धेः । आनन्दो ब्रह्मे' ति स्थाने 'आनन्दमयमात्मानमुप- ा स्थानप्रमाणेन तत्रानन्दमयस्य ब्रह्मत्वसिद्धेरिहापि ्मयशब्दार्थनिर्णयाच्चानन्दमयो ब्रह्मैव । नचोप- ्यत्राप्यानन्दमयो न ब्रह्मेति वाच्यम्, उपसङ्क्रम ्त्वेन हानार्थत्वाभावात् ।

्द्याः परश्शता युक्तयः । परस्सहस्रानपि शङ्का ्यस्य ब्रह्मत्वसाधने वाक्यशैल्यैव निरपेक्षा प्रभवति। ्व्यतया सत्यज्ञानानन्तात्मकतया आकाशादिकारणतया क इत्यपेक्षायामरुन्धतीन्यायेन दर्शयितुं वा, आत्मका- ्ङ्क्या जीवस्यैवोपस्थित्या तस्य कथं कारणत्वोपपत्तिरित्य क्षणस्तदन्तर्यामी तच्छरीरक इति सुखप्रतिपत्त्यर्थं ्न्तरकल्पनया तद्दृष्टान्तमुखेन प्रतिपादयितुं वा, ्कृतः । पक्षद्वये प्यन्तरात्मतयैव ब्रह्मणो लिलक्षयिषि- या आनन्दमय एव समाप्तेः पुच्छतयोक्तेऽन्तरात्म ्ासत्यसम्भवाच्च महावाक्यतात्पर्यनिष्ठाऽऽनन्दमय एव । ननु भूमविद्यायां "श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति त्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिषूत्तरोत्तरमर्था-

त्यादि प्रश्नप्रतिवचनाभ्यामेवेति, शैल्याः प्राण एव समापनेपि शिनैः
तादृशे प्रश्नप्रतिवचने प्रवृत्तस्य " एष तु वा अतिवदति यस्सत्येनाि
वदती " त्यादिस्तुशब्दश्रुत्या " आत्मनः प्राणा " इति ततः प्राणोत्पत्ति
लिङ्गाच्च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैवात्मोपदेशपर्यवसानमभ्युप
गम्यते, नतु प्राचीने प्राणे, एवमिहापि पुच्छब्रह्मण्येव पर्यवसानमस्त्विति
चेन्न ; — प्राणस्य जीवस्योपादेयत्वद्योतनाय पूर्वानुक्तातिवादित्वोक्त्य
शिष्येण तत्रैवोपदेशपरिसमाप्तिशङ्कया प्राणादधिकस्या ऽप्रश्नेपि शिष्या
जिघृक्षयाऽऽचार्येण" एषसु वा अतिवदति यस्सत्येनातिवदती " त्युपदेशा
भूयस्त्वं सत्यस्यावगम्यते, इह तु सर्वपर्यायसाधारणपुच्छावयवत्वोपदे
सति कथमन्तरात्मोपदेशः पुच्छपर्यन्त इत्यवगम्येतेति ।

परपक्षे च दोषा भूयांसः— " स वा एष पुरुषोऽन्नरसमय " इत्य
' एष ' इति प्रत्यक्षविषयस्वरसस्य परोक्षविषयत्वाङ्गीकारः, तच्छब्दस
व्यवहितपरत्वाङ्गीरः, " अन्नात्पुरुष " इति साध्यसाधनभावस्य मुख्य
सम्भवत्यपि पुरुषपदस्यात्मपर्यन्तत्वाङ्गीकारेणामुख्यसाध्यत्वाङ्गीकारः, " अ
रसमय " इत्यत्र मुख्यविकारार्थत्वे प्राचुर्यार्थत्वे वा सम्भवत्यप्यमुख्यवि
राङ्गीकारः, मयट्पञ्चकेऽप्यस्वरसार्थाङ्गीकारः, वाक्यस्वरसतात्पर्यविरुद्ध
प्रक्रान्तान्तरात्मोपदेशसमाप्तेः पुच्छनिष्ठत्वस्याङ्गीकारः, "सोकामयत" त्य
तच्छब्दस्य पुल्लिङ्गस्य सन्निहितानन्दमयपरत्वे सम्भवति व्यवहिता
परत्वाङ्गीकारः, भृगुवल्लीविरुद्धार्थाङ्गीकारः, प्रकरणावगतस्य रूपण
त्यागः, " तदप्येष श्लोको भवती " ति स्वरससिद्धस्य प्राकरणिक
मयविविषयत्वस्य परित्यागः, श्लोकस्यापि तादृशस्यैव तस्य परित्याग
विज्ञानमयतच्छ्लोकयोः स्वारसिकात्मविषयत्वपरित्यागः, " अन्योऽन्त
आत्मे " त्यत्र स्वाभाविकभेदार्थकत्वे सम्भवत्यपि तत्परित्यागश्चेति

एवमादिन्यायानभिप्रेत्यैव सर्वज्ञशिरोमणिना महामीमांस

यदि तत्सूत्रमपि शून्यवादादिपरतया योजयन्ति, न तान्प्रतिषेधा परन्तु श्रुतिपरमाचार्यद्रोहिणो नरकार्चिष्मदिन्धनभूतानल्पश्रुतां स्त पुरा शोचामः । "आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुर कम्पने नरकार्चिष्मदिन्धनमि" ति वचनात् । परमात्मानं श्रु प्रतिपादयति ततोन्यथा जल्पनादात्मद्रोहः स्पष्टः । सूत्रयोजनाया दता सुस्पष्टा । वृत्त्यतिलङ्घनादुज्झितसत्पथत्वमतिस्पष्टम् । एभि मौढ्यं स्फुटम् ।

योजनान्तरेपि निरन्तरश्रृङ्खलितवाक्यसन्दर्भगतानन्दाभ्य सन्निधोपस्थितेरभ्यासपदस्यान्यपरता न युक्ता । किञ्चानन्दशब्दाभ्यास कथं पूर्वपक्षनिरासः ? जीवस्याप्यानन्दरूपत्वात्, घटाकाशस्य वदानन्दस्योपाधियोगे ऽप्यानन्दत्वानपायात्; तथा सति नन्दादेरसिद्धिप्रसङ्गात्, जीवस्य स्वस्मिन्परमप्रेम्णो विरहप्रसङ्ग किञ्च ब्रह्मणि शारीरत्वासम्भवाङ्गीकारेण परिहारोनुप जीवस्य शारीरत्वे ब्रह्मणोपि तस्यावर्जनीयत्वात् । नहि काशधर्म आकाशे नास्ति । द्वितीयसूत्रे किं प्राचुर्यं व्यक्तिबाह अथवा ऽऽनन्दवल्ल्युक्तरीत्या स्वरूपोत्कर्षः ? नाद्यः, व्यक्तिया जीव एव सम्भवेन पूर्वपक्षस्यैव स्थैर्यात् । येपि उत्कर्षः किमानन्दगतापकर्षप्रतियोगिकः, उत उपाधि प्रतियोगिकः ? नाद्यः, आनन्दभेदानङ्गीकारात् । न उत्कर्षस्य विजातीयगतापकर्षप्रतियोगिकत्वासिद्धेः । तस्मादा निरूपणीयोत्कर्षापकर्षाणामुपाधिगतत्वान्नश्यम्भावेन चतुर्मुखानन् प्युपाधिगत एवेति प्राचुर्यमप्यानन्दमयस्य जीवत्वमेव हि साध किञ्चानन्दत्वप्राचुर्ययोर्जीवे ऽनुपपत्तावपि ब्रह्मरूपेण तत्सम्भवत्ये

एतेन तृतीयमपि निरस्तम् , चकारानन्वयाच्च । परमसाध्यान्वय
हि चकारोर्थवान् , समुच्चेतव्यसद्भावात् । ननु प्राचुर्ये मयड्वि-
मात्रान्न प्रकृते प्राचुर्यार्थसिद्धिः, प्रकृते प्राचुर्यस्यासिद्धौ तदर्थकत्वा
भवात् , अतः प्राचुर्ये मयड्विधानं प्रकृते तत्सम्भवश्चेति उभयं
ादितमेव हेतुः, अतो हेत्वंशसमुच्चयार्थश्चकार इति चेन्न; - "विकार
ब्दान्नेति चेदि " त्यत्र पूर्वसूत्रप्रतिज्ञातं नेति शङ्कितं 'न प्राचुर्यादि ' ति
ा निषिध्यते, प्राचुर्यादित्यत्र शङ्काखण्डेन मयट उपस्थितत्वात्
ुर्यस्य तत्सम्बन्धित्वं प्रतीयते, ततश्च मयटः प्राचुर्यार्थत्वाच्छंकितन्नेति
मसाध्यप्रतिज्ञैव हि स्यात् , अतोवान्तरप्रतिज्ञान्तराभावात् परमसाध्य
वपेक्षयैव समुच्चयः । किंच " एष ह्येवानन्दयाती " त्येतत् कथमा-
दप्राचुर्योपपादकम् ? अप्रचुरानन्दः कथमानन्दं ददात्विति चेत् , हन्त
कुसूलस्थमानन्दं यावज्जीवं स्वोपजीवनाय निधायैत्रार्थिने मात्रयानन्दं
ातीत्यभिमतम् , येनैवमात्थ । किमीश्वरः प्रचुरदुःख एव दुःखं ददाति,
वा गौरी पुत्रवत्येव पुत्रन्ददाति ? तस्मादयमपन्याय एव । चतुर्थसूत्रे
न्त्रवर्णिकमानन्दमयशब्देनोच्यत इत्यनुपपन्नम् , मान्त्रवर्णिकं निर्विशेष
ाति पराभिमतेरानन्दमयस्य सविशेषत्वस्य मयटैवावगमाज्जीवपरत्वा
श्यम्भावस्य स्थापितत्वाच्च । पञ्चमसूत्रे हेतोः परमसाध्येन संयो-
नमनुपपन्नम् , चकाराश्रवणात । अस्मिन् खल्वधिकरणे प्रधानहेतु
रेषु सर्वत्र समुच्चयार्थश्चकारः श्रूयते, अत्र तदनुपलम्भात् किंचिदवा-
रसाध्यमन्वेष्टव्यम् , तच्च साध्यमितरस्य जीवस्य मान्त्रवर्णिकत्वनि-
धः । षष्ठे " अन्योन्तर आत्मानन्दमय "इति स्पष्टमुपलभ्यमाने तद्विहाय,
दव्यपदेशपदस्य यत्किंचित्परत्वमनुपपन्नम् । सप्तमे प्रधानस्याप्रसङ्ग एव ।
च हेत्वन्तरेण निरासार्थमिह प्रसङ्गात्पुनस्तन्निरास इति वाच्यम् ,
ईक्षते ' रित्युक्तहेतोरेव 'कामादि ' ति पुनःकीर्तनात् , अपेक्षापदवैय-

द्वैतव्यस्यायोगशब्दास्वारस्याच्च । किंच योगशब्दस्याभेदपरत्वे जीव[illegible] नमानन्दमयस्य कुतः स्यात्? प्राप्यप्राप्तृभेदस्यावश्यकत्वादिति चेन्न भेदस्यैव प्राप्यत्वेन तदसिद्धेः । अभेदस्य साध्यत्वात्ततः प्राग्भे[illegible] च्य इति चेत्? सभेदः किमभेदेन विरुद्धयते, उत न? आद्ये मोक्ष[illegible] कादाचित्कतया मोक्षदशायामपि भेदप्रसङ्गः, कादाचित्काभेदस्य ब्र[illegible] स्वरूपत्वासम्भवात्; अविरोधे सर्वदैवाभेदसम्भवेन उत्तरकाले भे[illegible] म्भवेन च प्राग्भेदो वाच्य इत्यनुपपत्तेः । श्रुतौ च प्रतिष्ठाशब्[illegible] भेदपरः, तत्राव्युत्पत्तेः; किन्तु ज्ञानपरः, "ब्रह्मसंस्थोऽमृतत्वमेति श्रोत्रियं ब्रह्मनिष्ठमि" त्यादिप्रयोगात् । अन्तरशब्दश्च भगवज्ज्ञ[illegible] विच्छेदपरः । अनेनाविच्छिन्नस्मृतिसन्तानरूपस्य ध्यानस्य मोक्षसाधन[illegible] कं भवतीति ।

अपरपक्षे किं सूत्रमन्नमयादीनामपि बोधकमिति विवक्षितम्, [illegible] यायतात्पर्येणान्नमयादीनामपि परमात्मत्वसिद्धिरिति? नाद्यः, आनन्द[illegible] शब्दस्य तद्बोधनासामर्थ्यात् । उपलक्षणत्वे स एव दोषः । उपल[illegible] त्वं चान्नमयेनैव युक्तम्, प्राथम्यात् । यदुक्तम्- 'ब्रह्मण आनन्दम[illegible] यत्वेनोक्तेर्नानन्दमयो ब्रह्मेति पूर्वपक्षयुक्त्याधिक्यात् प्रधानेवयवि[illegible] नन्दमये सति तदवयवत्वेन श्रुतस्य ब्रह्मणः कथं जिज्ञास्यत्वमित्या[illegible] रूपसङ्गतेश्चानन्दमयग्रहण' मिति; तन्न, "अन्नात्पुरुष" इत्यस्य '[illegible] य' इत्यत्र मयटो विकारार्थतानिर्धारकत्वात् उत्तरत्र मयटो विका[illegible] तायास्तन्मूलत्वात्, "सवा एष पुरुषोन्नरसमयः" "इदमेव शिरः" इत्याद्यपरोक्षनिर्देशरूपपूर्वपक्षयुक्त्याधिक्यात्, गतिसामान्याक्षेपरूप त्वदभिमतायास्सङ्गतेः कारणत्वश्रवणेनान्नमयेपि सत्त्वेनान्नमयग्रहणस्[illegible] युक्तत्वात् । युक्तिश्चासिद्धा, "सोकामयते" त्यादिनानन्दमयस्य [illegible] कारणत्वश्रवणात्, "असन्नेव सभवती" त्यादिना ब्रह्मशब्दाभ्यासा

एतदधिकरणराद्धान्तात् प्राग्जगत्कारणभूतं सर्वस्मात्परं ब्रह्मशब्दमुख्यार्थभूतं वस्तु सिद्धं न वा? आद्ये ब्रह्मणः कथम्, जिज्ञास्यत्वप्रयोजकस्य कारणत्वादेरवयवत्वेपि सत्त्वात्। नेव जिज्ञास्यत्वविरोधि, तदा 'सोकामयते' त्यादिना जगश्रुतस्य 'असन्नेव स भवती' त्यादिना ब्रह्मशब्दाभ्यासवत रूपस्य परब्रह्मणोवयवे ब्रह्मशब्दप्रयोग इति वा, 'सोकामयत' ' त्यादिवाक्यपरामर्शे ' तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायत ' ह्मशब्दः परब्रह्मान्यविषय इति वा स्यादिति कथं जिज्ञास्यद्वितीये ब्रह्मशब्दाभ्यासरूपसिद्धान्तहेतूपन्यासासम्भवः। ब्रह्मणो यां कारणतायां यद्गतिसामान्यमुक्तम्; तदयुक्तम्, ब्रह्म आनन्दमयस्य 'सोकामयते' त्यादिना कारणत्वावगतेः; च जिज्ञास्यत्वनियमादिति पूर्वोक्ताक्षेपेण पूर्वपक्षप्रवृत्तेराक्षे-

तिरित्यवान्तरसङ्गत्युपपादकत्वदुक्तिविरोधश्च। किंचात्रानन्द मत्वनिरूपणे साति तुल्यन्यायेनान्नमयादावपि परमात्मत्वं नवा? मुधैवोभयथापि लक्षणा। नापि द्वितीयः, अभ्यासस्य धानात्तस्य ब्रह्मशब्दाभ्यासरूपतायास्त्वयाभिधानाच्च तस्यान्न द्धचान्नमयादावेतन्न्यायाप्रवृत्तेः। यच्च ब्रह्मशब्द एव हेतुतया विज्ञानमयानन्दमययोर्ब्रह्मशब्दाभ्यासस्यापि सत्त्वात्तत्कीर्तनमि तन्न, ब्रह्मशब्दाभ्यासाच्चेत्यनुक्तेः, अतोभ्यासस्यैव हेतुतया कीर्त्यविषयत्वमन्नमयादीनामनुपपन्नम्। अथ स्यात्, प्रतिपर्यायं ब्रह्म एवाभ्यास इति विवक्षितः, आनन्दमयशब्दश्चोपलक्षणमेव, यादयः परमात्मा, प्रतिपर्यायं ब्रह्मशब्दप्रयोगादिति; तन्न, ब्रह्मशब्दस्यैव हेतुतयाभ्यासपर्यन्तधावनवैयर्थ्यात्। ततदग्रहणेन विना यो हेतुर्न प्रतीयेत स एव हेतुतया विवक्षित

स्मत्वम्, "अन्नात्पुरुष" इत्यन्नप्रसूतत्वेनोक्तं 'सवा' इति प 'एष' इत्यपरोक्षनिर्देशेन, इदं शिरः अयं पक्षः अयमात्मा इदं मित्यपरोक्षनिर्देशेन च प्रसिद्धशरीरस्यैवान्नरसमयत्वावगमेन तस्य स्मत्वासम्भवात्। प्रतिपर्यायं 'अन्योन्तर आत्मे' ति निर्देशश्च भेद एव स्वरसः।

यदुक्तं "आत्मन आकाशस्सम्भूत" इत्यात्मः मान्त्रवर्णिकं ब्रह्मोच्यते, आकाशशब्देन भूताकाशतदभिमानि तद्विग्रहैतत्त्रितथान्तर्यामिणो गृह्यन्ते; 'आकाशाद्वायु' रिति सुख्यभेदेन चतुर्विधादाकाशादुक्तविधया चतुर्विधस्य वायोः सृष्टिरु एवं 'वायोरग्नि' रित्यादिकमपि योज्यम्, 'अन्नात्पुरुष' इति च दन्नाच्छरीरतदभिमानितदन्तर्यामिरूपस्य त्रिविधस्य पुरुषस्य सृष्टिरु अत्र सर्वत्र 'सम्भूत' इति यथायोग्यमुत्पत्तिप्रादुर्भावा वुच 'स वा एष पुरुष' इति प्रकृतमपि भूतादिकं सर्वन्त्यक्त्वा आ देहपर्यन्तमागतं तेन तेन शब्देन प्रकृतं हरिमेव परामृशति, सृष्टिकर्तुरशरीरेऽन्नमयादिपञ्चरूपत्वज्ञापनाय 'स' इत्यात्मपदं परामृश्यते, 'एष' इति जीवशरीरगः परामृश्यः प्रत्यक्षे जीवशिरआदौ ईश्वरशिरःप्रभृतीनां व्यवस्थितेः 'इदमेव इत्यादिनिर्देशः अप्रत्यक्षेपि वस्त्रप्रावृते प्रत्यक्षवस्तुसन्निधानादि निर्देशवत्, 'अन्योन्तरआत्मे' ति निर्देशश्च विशेषनिबन्धनः, तत्र किमाकाशादिशब्दा अक्षादिशब्दवच्छक्तिप्रवृत्तिनिमित्तभेदेन काशादिनानार्थान् बोधयन्तीति विवक्षितम्, उतैकेन प्रवृत्तिनिमित्ते शक्त्या इमानर्थान् बोधयन्तीति? आद्ये एकस्य प्रयोगस्यैकाः चारितार्थ्यादनेकार्थबोधनासम्भवः। क्वचिन्मन्त्रादावेकस्मिन्प्रयोगे त्वाङ्गीकारो निरुक्तिवचनप्रामाण्यात्। तादृशनियामकाभावेप्ये

सामंजस्यम् । मुख्यार्थप्रतीतावप्यमुख्यार्थप्रतीत्यङ्गीकारे अमुख्यत्वात्प
त्यागः क्वापि न स्यात् । द्वितीयेपि किं प्रवृत्तिनिमित्तं शक्तिर्वा एकैक
परिसमाप्य वर्तते, उत द्वित्वादिवद्व्यासज्य ? आद्ये कथं सर्वव्यक्तिबोधः
तादृशप्रवृत्तिनिमित्ते च न मानम् । न द्वितीयः, शक्तेर्व्यासज्यवृत्तौ तादृ
धर्मे च मानाभावात् । किंच भगवत आकाशादिशब्दार्थत्वेऽर्थान्तरा
किमर्थमिष्यन्ते ? किं युगपद्बोधनियमात्, उत प्रयोजनवशात् ? अ
मसिद्धम् । द्वितीये किन्तत्प्रयोजनम् ? शरीरे सृष्टिकर्तुरन्नमयादिपञ्चर
प्रतिपादनमिति चेत् ? माभूत्तत्प्रयोजनम् । नहि प्रयोजनानुसारि प्रमाण
किन्तु प्रयोजनमेव प्रमाणानुसारि । किञ्चैवमपि देवताविग्रहयोः किम
परिग्रहः । अपिच पञ्चानां विग्रहाणां शरीरे सत्त्वे न किञ्चिन्मानम्
ऋगादीनाञ्च कथं शरीरान्तर्वर्तिता ? कथञ्च शिरःप्रभृतिरूपता ? ऋग
शब्दानां प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पनं च न प्रमाणपदवीमा
रोहति । 'स वा एष पुरुषविध एवे' ति प्रथमपर्याये न श्रुतम्, कि
द्वितीयादावेव, अतोनेन वाक्येन रूपणमेवावगम्यते । एवशब्द इवार्थ
अन्यथा वैयर्थ्यात् । पुरुषे चक्षुरादिविधान्तराणामपि सत्त्वाच्छिरःप्रभृ
नामेव रूपणमिति ख्यापनार्थं 'तस्य पुरुषविधताम्, अन्वयं पुरुषविध
इत्युक्तम् । पूर्वोक्तपुरुषविधानुसारेणै वैतत्पुरुषविधत्वरूपणमित्यर्थः । एवं
शरीरे कथं पञ्चविग्रहसिद्धिः । यदुक्तं—स एष आनन्दमयः पुरुषाकार ए
तस्यानन्दमयस्य पुरुषाकारतानुसारेणायं विज्ञानमयः पुरुषाकारः त
दुद्भूत इत्यर्थ इति ; तन्न, उद्भूतत्वबोधकपदाभावात् । 'तस्य पुरुषविधत
अन्वयं पुरुषविध' इति 'तस्ये' त्यनेन पूर्वपर्यायोक्तपरामर्शस्यायमिर
नैतत्पर्यायस्थपरामर्शस्य च स्वरसत्वाच्च । विशेषस्यान्यशब्दनिबन्
त्वं चानुपपन्नम्, विशेषो हि भेदकार्यकर इत्युक्तम्, ततश्चाभे
विरोधस्यापि भेदकार्यत्वादभेदे सति भेदवदेव विशेषस्यासम्भवः । भेद

नर्भीत्यादिमुखेन । अतो भेदव्यवहारजनकत्वं भेदव्यवहारविषयत्वमे
तत्र किं भेदव्यवहारो विशेषे मुख्यः, उतामुख्यः ? मुख्यत्वे किं भेदश
एकार्थः, उत नानार्थः ? आद्ये विशेष एव भेदः स्यात् । अन्त्यस्त्वसि
मानाभावात् । न द्वितीयः, प्रकृते मुख्ये बाधकाभावात । ननु मुख्यार्थप्र
बाधकमस्ति, तथाहि - अन्नमयादिपर्यायेषु 'येन्नं ब्रह्मोपासते' 'ये
ब्रह्मोपासते' 'आनन्दं ब्रह्मणो विद्वान्' 'ब्रह्म ज्येष्ठमुपासते' 'विज्ञानं
चेद्वेदे' ति ब्रह्मशब्दः श्रूयते, तथा 'एतमन्नमयमात्मानमुपसंक्रामती'
त्मशब्दो मुक्तप्राप्यत्वञ्च श्रूयते, नच शरीरपरिग्रहे तद्युज्यते, 'त
मेवशिरः' 'अयन्दक्षिणः पक्षः' अयमुत्तरःपक्षः, अयमात्मा, इदं पु
प्रतिष्ठ' त्युपदेशश्च व्यर्थः, शरीरशिरःप्रभृतेः प्रत्यक्षत्वेन उपदेशान
णात् ; 'अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यत' इति चानुपन्न
भूतान्नत्वभूताद्यत्वयोश्शरीरेऽसम्भवात् ; 'सर्वंवै तेन्नमाप्नुवन्ती' त्यन्न
ज्ञानान्मोक्षः श्रूयते, नच शरीरज्ञानान्मोक्षस्सम्भवति ; किंच 'सर्व
त आयुर्यन्ती' ति प्राणमयज्ञानान्मोक्षः श्रूयते, कदापि मरणाभावो
सर्वमायुः, नचासौ विना मोक्षाद्युज्यते; तथा 'प्राणंदेवा' इति सर्वदेव
कत्वं प्राणमयस्य श्रूयते, नच तदुभयं प्राणपरिग्रहे युज्यते; किंच - '
वाचो निवर्तन्त' इति वाङ्मनसागोचरत्वम्मनोमयस्य श्रूयते,
'विज्ञानं देवास्सर्वे, ब्रह्म ज्येष्ठमुपासत' इति सर्वदेवोपास्यत्वं ज्ये
च विज्ञानमयस्य श्रूयते, नच कोशपरिग्रहे तद्युज्यते; इतिचेत् ? उच्य
न तावद्ब्रह्मशब्दसामानाधिकरण्यानुपपत्तिः, 'एष' इति प्रत्यक्षसि
शरीरस्योपक्रम एवान्नमयपर्याये निर्देशात्पर्यायान्तरेषूपक्रमे 'एत
दन्योन्तरआत्मे' ति निर्देशाच्चोपक्रमानुसारेणोपसंहारस्थस्य ब्रह्मशब्द
नेयत्वात् ; मनोमयविज्ञानमययोश्च न ब्रह्मशब्दप्रयोगोस्ति; 'यतोव
इत्यस्यार्थः प्रागेव वर्णितः; विज्ञानश्लोकस्यायमर्थः—विज्ञानशब्देन

ाविस्यत्वमुक्तम् , निरुक्तोभयविधपाप्मनिवृत्त्युपायं सदाचारं प्रदर्शय
ाह 'विज्ञानन्देवा' इति, विज्ञानशब्दो ब्रह्मविशेषणम् , 'विज्ञानंब्रह्मे'
' विज्ञानशब्दः कर्तृनिर्देशकः, कर्माकाङ्क्षाया ब्रह्मपदेन शान्तेः
र्त्राकाङ्क्षाया निवर्तकान्तराभावाच्च, देवग्रहणेन तेषामेवोपासनाधिकार
ते भ्रमं वारयितुं विज्ञानमिति जीवमात्रनिर्देशः कृतः, 'पाप्म न' इति
न सुकृतन्न दुष्कृतं सर्वे पाप्मानोतो निवर्तन्त' इत्युक्तयोरिह यज्ञकर्म
ब्दनिर्दिष्टयोस्सुकृतदुष्कृतयोर्ग्रहणम् , 'एतमन्नमयमात्मानमुपसंक्रा
ती' त्यत्रात्मशब्दः प्राप्यपरान्नमयादिशब्दानां परमात्मपर्यन्ततां ख्याप
ातुम् , पूर्वमन्नमयादिसामानाधिकरण्येन काप्यात्मशब्दाप्रयोगात् इ
। प्राप्ये सर्वत्रान्नमयसामानाधिकरण्येनात्मशब्दप्रयोगाच्च पूर्वं कोशमात्र
ात्पर्यमुत्तरत्र परमात्मतात्पर्यं च स्पष्टमेवावगम्यते ; 'तस्येदमेव शिर
त्याद्युपदेशश्च उत्तरपर्यायेषु एभिरेव शिरःप्रभृतिभिः पञ्चभिरवयवैः पुरु
षेधत्वं रूपयिष्यत इति ज्ञापनार्थः; 'अद्यतेत्ति च' त्यत्र भूतश्शारीरि
न्नमद्यते भूतानि शारीरिण अन्नमात्राधिक्यादत्ति - हिनस्तीत्यर्थः, अत
ात्तृत्वाद्यनुपपत्तिः; 'सर्वं वै तेन्नमाप्नुवन्ती' त्यत्रान्नं ब्रह्मतयोपासीनस्
ार्वविधान्नप्राप्तिरेवोच्यते, अन्यस्यान्यथोपासनं च स्थापयिष्यते; 'सर्वमे
। आयुर्यन्ती' त्यत्रापि न मोक्ष उच्यते, आयुश्शब्दो हि द्वादशमा
ारिमितजीवनकालपरः, स च कालो मोक्षे नास्त्येव, अत आयुश्शब
्व सांसारिकं फलं द्योतयति; सर्वशब्दश्शतसंख्यापरः, 'शतायुः' पुरु
ःत्यभिधानात् ; 'प्राणन्देवा अनुप्राणन्ती'त्यत्र प्राणाधीनजीवनमेव स्वरस
ागम्यते, अतो नार्थान्तरोत्प्रेक्षावकाशः; तस्मादन्यशब्देन भेद ए
गृहीतुं युक्तः, न तु तदतिरिक्तो विशेषः । यच्च विशेषसमर्थनम् , 'वि
ज्ञानमानन्दं ब्रह्मे'त्यत्र विज्ञानत्वानन्दत्वब्रह्मत्वानां धर्माणां धर्मिणो वा भे
भावेन विज्ञानादिशब्दानामपर्यायत्वाय विशेषो ऽङ्गीकरणीयः; किंच भे

धर्मिणोर्धर्माणांच परस्परं भेदाभावात् , अयञ्च विशेषो वस्त्वभिन्न इति
स्तत्र न तावद्विज्ञानादिशब्दानामपर्यायत्वाय विशेषकल्पनम् , धर्म्यभिन्ने
विशेषेणैव धर्म्यभिन्नैर्धर्मैरेवापर्यायत्वोपपादनसम्भवात् ; नापि धर्मधर्मि
भावाय धर्मानेकत्वाय वा तत्कल्पनम् , भेदस्य धर्मधर्मिभावधर्मानेकत्वं
कल्पादकत्वे तदभावे तदनुपपत्तेः ; यदि भेदाभावधर्मधर्मिभावयोः प्रमा
सिद्धयोरुभयोरप्यपह्नवासम्भवः, तर्हि भेदो न धर्मधर्मिभावप्रयोजकः,व्यभिच
रात् । यदि च तत्र स प्रयोजकः, तर्हि प्रयोजकाभावेपि प्रयोज्यसिद्धिं क
मन्यसे । प्रयोजकान्तरेणेति चेत् ? किं तद्वस्तु तस्य प्रयोजकत्वञ्चान्य
क्लृप्तम् , किंवात्रैव कल्प्यते ? नाद्यः, असिद्धेः । न द्वितीयः, लाघवेना
प्रयोजकनैरपेक्ष्यस्यैव कल्पयितुमुचितत्वात् । तस्माच्छ्रुतिविरुद्धमन्नादी
परमात्मपरत्वम् । द्वितीयसूत्रमभ्यासग्रहणस्य ब्रह्मशब्दगोचरतां वारयति
हेत्वाक्षेपसमाधानार्थत्वे ह्यत्रास्य सन्निवेशोपपत्तिः । हेत्वाक्षेपकत्वञ्च म
डर्थस्य हेतुत्व एव । अतो मयडर्थप्राचुर्योपपादकाभ्यास एव हेतुतः
विवक्षितः, न तु ब्रह्मशब्दाभ्यास इति । तृतीयसूत्रे तच्छब्दास्वारस
स्पष्टम् । 'कोह्येवान्या' दित्यत्र च 'एष ह्येवानन्दयाती' त्युत्तरवाक्या
सारादननप्राणनयोरैहिकामुष्मिकानन्दरूपता स्वरसतोवगम्यते, अतोर्थान्त
कथनमनुपपन्नम् । चतुर्थसूत्रे मान्त्रवर्णिकस्यानन्दमयपदेनैव गानाद
मयादिशब्दैरपि गीत इत्यसङ्गतम् , अन्नमयादीनामब्रह्मत्वस्य स्थापनात्
पञ्चमसूत्रार्थो प्यनुपपन्नः, 'सर्वे वै तेन्नमाप्नुवन्ती' त्यादीनां मो
परत्वाभावस्योक्तत्वात् । सप्तमसूत्रे ऽपेक्षापदमस्वरसम् । अष्टमसूत्रेऽस्मि
न्निति व्यर्थम् , तद्धेतुव्यपदेशादित्यादाविवाधिकरणग्रहणाभावेपि प्रकृतत
देवाधिकरणलाभात् ।

अन्येषामेकदेशिमते तद्धेतुव्यपदेशाच्चेत्यत्र यो विशेष उक्तस्सो
पपन्नः. "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" त्यत्र जीवा

नन्दाश्रयत्वे जीवानन्दे नाशोत्पत्तितरतमभावाः जीवस्य किञ्चिज्ज्ञत्वा
। च विरुद्धेरन् , ज्ञानस्यैवानन्दरूपत्वात् । ब्रह्मगतसार्वज्ञ्यस्य
प्रसङ्गे तस्य किञ्चिज्ज्ञत्वविरोधः । तारतम्येनाभिव्यक्तेः सर्वमुपपद्यत
चेत् ? किमभिव्यक्तौ तरतमभावो विवक्षितः? तथा सत्यानन्दस्यैव
भिव्यक्तिरूपतया तत्र नानात्वानित्यत्वतरतमभावाः ब्रह्मणि किंचि
वं जीवे सर्वज्ञत्वञ्च प्रसज्येरन् । अभिव्यक्तेरन्यत्वेपि तस्यास्तरत
वो विषयबाहुळ्याल्पत्वाभ्यां वाच्यः, सोनुपपन्नः, अभिव्यङ्ग्यस्या
स्यैकत्वात् । किञ्च - अस्यानन्दस्य ब्रह्मण्यभिव्यक्त्यन्तरापेक्षाऽस्ति नवा?
। स्वप्रकाशत्वभङ्गः । द्वितीये कुतो जीवेऽभिव्यक्त्यन्तरापेक्षा । ततश्चा
ला एव पूर्वोक्ता दोषाः । अभिव्यक्त्यन्तराङ्गीकारे गौरवमधिकम् ।
तरतमभावेनाभिव्यक्तिर्नाम — तरतभावविशिष्टतयाभिव्यक्तिः; तत्र
भिव्यक्तिस्तत्रोत्पत्तिः तत्र सत्वं तत्र प्रतीतिर्वा स्यात् ? आद्ये व्या-
:, नहि ब्रह्मानन्दस्यात्रोत्पत्तिसम्भवः । द्वितीये तत्तदधिकरणावच्छेदेन
मभाव उत्पद्यत इति स्यात् , तत्तु व्यक्त्यैक्ये सत्यनुपपन्नमेव ।
ये यदि सा प्रमा तदा दोषतावस्थ्यम् , यदि भ्रमस्तदा 'अधिकन्तु
ष्टन्न तद्धानिकरं' इति न्यायेन सर्वेषान्निरतिशयानन्दत्वमपरिहार्यम् ।
मभावारोपस्तत्स्वरूपतिरोधानेनैवेत्युक्तावानन्दाप्रकाशः प्रसज्यते ,
वयवत्वात् । किञ्चित्स्वरूपन्तिरोहितम् , किञ्चित्प्रकाशत इत्युक्तच्च
ावः, तरतमभाववैयर्थ्यं च । अथ तरतमभावोपन्नान्तःकरणवृत्त्यव
इ एव तारतम्येनाभिव्यक्तिः ? तथा सति जीवानन्दस्य ब्रह्मानन्दात्
शेषः । उपाधिगतस्यात्रारोपे तूक्त एव दोषः । अथ ब्रह्मानन्दस्य
ातस्यानुभवेन कस्यचित्प्रीतिमान्द्यं कस्यचित्तदुत्कर्षश्च तारतम्येनाभि
क्तेः; तथासत्येतस्यैवेत्यवधारणविरोधः । अवधारणेन जीवे ब्रह्मानन्दा

नानन्दिन इति, ततश्चोपजीवन्तीति तमेवानन्दं भुञ्जत इत्य तन्न, स्रक्चन्दनादिभोगानुभवविरोधात् । तस्मादियं श्रुतिरा चतुर्मुखाद्यानन्दानां ब्रह्मानन्दापेक्षया खद्योतकल्पत्वा "रसो वै सः, रसंह्येवायं लब्ध्वानन्दीभवती" त्यत्रापि भोग्यत्वमेव प्रतीयते, नतु तदानन्देनानन्दवत्त्वम् । रसेनानन्दव ब्रह्मणैवानन्दवत्त्वं स्यात्, नतु ब्रह्मानन्देन । तस्मात्, 'रसो ह्येवायं लब्ध्वानन्दीभवती' ति महानन्दलक्षणमोक्ष उक्तः भवतीत्यपेक्षायां 'एष ह्येवानन्दयाती' त्युच्यते । तदुपपादयं न्यात्कः प्राण्यादि' ति । प्रकर्षेणानन्दः सुखेन जीवनम् । यिलब्ध्यानन्दयित्रोरनेन सन्दर्भेण भेदप्रतीतिस्सूत्रे विवक्षिता परमसाध्य एव हेतुः ।

एकदेश्यन्तरमते गुहाविवरणरूपता कुतः प्रतीयते ? य परमे व्योमन्ि' ति अधिकरणद्वयनिर्देशादुत्तरत्राप्यधिकरणद्वयं तदा विवरणविवरणिभावः प्रतीयेत । यदि वा परमव्योम निर्दिश्येत, तदापि प्रतीयेत । नच तन्निर्देशोस्ति । ब्रह्म प्रतिष्ठे' ति प्रतिष्ठात्वेन निर्दिष्टम्, नत्वाधेयत्वेन, तत्रापि साधारणोपसर्जनावयवत्वेन । अत इदं कथम्परमव्योमा भवेत् । अत आनन्दमयादान्तरस्यानभिधानात् ब्रह्मेत्युपक्रा हितत्वेनोक्तः 'तस्माद्वा एतस्मादि' ति आत्मशब्दनिर्दिष्टः त्यादिना वक्ष्यमाणः । अतएव प्रकरणप्रधानप्रतिपाद्यश्चा वगम्यते । तेन तद्विरुद्धा विवरणरूपता । गुहाविवरणार्थत्वे आत्मे' ति अन्तरात्मत्वेनोपदेशो न समञ्जसः । अतः न्यायेन ब्रह्मलिलक्षयिषैव प्रकरणस्य प्रतीयते । हृदयस्थै

न तद्विवरणयोग्यस्सन्दर्भः । सूत्रार्थोऽप्यनुपपन्नः । तथाहि – 'भीषा
ातः पवते, भीषोदेति सूर्य' इति- 'अस्मा'दित्यानन्दमयः परामृश्यते।
मेव 'सैषानन्दस्ये' त्यानन्दशब्देन परामृश्यते तदा 'अस्माद्वात'
दस्य मीमांसा भवतीत्येव स्यात् , नत्वानन्दस्येति । तस्मा
दग्रहणं आनन्दमयविशेषणानन्दपरिग्रहार्थमेव । अत आनन्दमयः
ानन्दाश्रय एव, नतु प्रचुरानन्दरूपः । पूर्वापरसूत्रेषु चिच्छक्तेर-
ृवेन चिच्छक्तिरिति साध्यनिर्देशश्चानुपपन्नः । द्वितीयसूत्रार्थोऽप्यनु-
:, जीवानन्द इव ब्रह्मानन्देपि प्राचुर्यासम्भवात् । प्रचुरत्वं जीवानन्दाल्प
क्षम् , ब्रह्मानन्दस्यैव जीवानन्दरूपतायास्त्वयाभ्युपगमात् कथन्तत्र प्राचु
। अत्र हि प्राचुर्यम् – प्रभूतत्वं दशवर्णस्वर्णस्य स्वर्णान्तरादिवो
, ततश्च स एवानन्दोन्यत्रापीति कथमुत्कर्षः । अतः प्राचुर्यार्थो-
न्नः । एतेन तृतीयपपि निरस्तम् , अत्र विवक्षितप्राचुर्यस्यावयवबाहुल्य
ाकेदारन्यायविषयत्वासम्भवात् । एवमुत्कर्षविवक्षयैव हि 'शतं एक'
ग्त्यते । दृष्टश्च यूनो युवतिसम्भोगजन्यानन्दात्स्थविरस्य तद्भोगजन्या-
ास्यापकर्षः ।

अन्नमयादयश्चेतना इत्येकदेशिपक्षोप्यनुपपन्नः, पूर्वान्नमयादिव्या
र्थमेव 'आत्मानमुपसङ्क्रामति , आत्मानमुपसङ्क्रम्ये' त्यात्मपदसामा
करण्येन प्रयोगात् । अत एवान्नमयादीनां शोध्यत्वोपपत्तिः, तस्मि
पे आत्मपदप्रयोगाभावश्च । "नेतरोनुपपत्तेरि" त्यादेरधिकरणान्त-
र्णनञ्चानुपपन्नम् , हिरण्यगर्भविषयचिन्तातात्पर्यसूचकाभावात् ।
ाद्यधिकरणेषु तत्तच्चिन्तासूचकानि दृश्यन्ते । प्रतिज्ञाचकाराभावयो
ारप्रतिज्ञात्वेनोपपत्तिः प्रागेवाभिहिता । 'कामाच्च नानुमानापेक्षा'
। अपेक्षापदवैयर्थ्यं स्पष्टमेव । इति ।

इतरपक्षे अभ्यासशब्दोस्वरसः 'ते ये शतं' 'स एकः' इतिवद्विषये

विवक्षिततया व्याख्यातत्वात् । "कामादि" ति सूत्रार्थः परपक्ष
नैव निरस्तः । इति- आनन्दमयाधिकरणम् ॥६॥

## अथ अन्तराधिकरणम् ।

'सयश्चायमि' ति वाक्ये आदित्यमण्डलान्तर्वर्तित्वेनोक्तो
नैवेति पर्यवसाययितुमन्तरादित्यविद्यां निरूपयति ।

१- अन्तस्तद्धर्मोपदेशात् ॥ १ - १ - २१ ॥

इदमाम्नायते छान्दोग्ये - "य एषोन्तरादित्ये हिरण्मयः
दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य
कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः
उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक्च
च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गाता तस्य हि गाता स एष
स्मात्पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानाञ्चेत्यधिदैवतम् , अथाध्य
अथ य एषोन्तराक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं त
द्ब्रह्म, तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ
यन्नाम तन्नाम स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनु
नां चेति, तद्य इमे वीणायां गायन्ति तस्मात्ते धनसनय" इ
अत्रादित्यशब्दो "दित्यदित्यादित्यपत्युत्तरपदाण्ण्य" इति ण्यप्र
मण्डलवाची, "य एतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेक्ष
बृहदारण्यके, "य एष एतस्मिन्मण्डलेर्चिषि पुरुष" इति तै
पुरुषस्य मण्डलवत्त्वश्रवणात् ; हिरण्मयशब्दो रमणीयत्वपरः,
योगिभिरित्यर्थः । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्म
रिति श्रुत्यैकार्थ्यात् ।

"तस्य यथे" त्यस्य वाक्यस्य वाक्यकारेण षडर्थाः पू

ादित्यः, 'कपिचलन' इति धातोर्निष्पन्नः कपिशब्दः; कं पिबतीति पेः, 'कपिर्बिभर्ति तेजनम्'' इति वैदिकप्रयोगः; तस्य,आसं- मण्डलम्; आदित्यमण्डलं हृदयपुण्डरीकञ्च परमात्मन उपासनस्थानं तथो स्याक्षिणी अपि उपासनस्थानमित्येकोर्थः । अयन्नोपपद्यते, समान कान्तयोस्स्वतः प्राप्तसामानाधिकरण्यभङ्गास्वारस्यात्, पुण्डरीकसदृशे पुण्डरीकशब्दस्य गौणत्वप्रसङ्गात्, उपासनस्थानमुपासकस्येति ान्तषष्ठ्यन्तपदयोरध्याहारप्रसङ्गाच्च । तस्येत्युपासकपरत्वे सत्यप्रकृत र्शित्वम्, अनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपार्थता च स्यात् । ाङ्गवर्णनप्रकरणानौचित्यं च । नामविधिवाक्यात्पूर्वं रूपकथनं ह्यचि- । 'यश्चायन्दक्षिणेक्षन्नि' ति दक्षिणस्याक्ष्ण उपासनस्थानत्वश्रवणा णी इति द्विवचनविरोधश्च । 'अन्तरादित्य' इति आदित्यमण्डलस्य तया विहितत्वात् 'एवमक्षिणी' इति अक्ष्णः स्थानत्वे विहिते सति भेदाद्रूपभेदेन विद्याभेदादेकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च भेदस्स्यात् । तस्मादस्य वाक्यस्योपासनस्थानविधिपरत्वमनुपपन्नम् ।

— मर्कटः, तस्यासः- आस्यते उपविश्यते अनेनेति व्युत्पत्त्या जघन ः, मर्कटपृष्ठसाम्यमुच्यत इति; तदप्ययुक्तम् । मर्कटपृष्ठं पुण्ड- ा किमुपमाद्वयम्, उतैकोपमा? नाद्यः, स्वतः प्राप्तसामानाधि- णपरित्यागप्रसङ्गात् । श्लाघ्योपमासम्भवे हीनोपमाश्रयणायोगाच्च । ये मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्, तदा कप्यासपदं स्यात् । नच प्रथमान्तकपिपदरूढ्यनुसाराच्चरमश्रुतस्यासपदस्य गौ- युक्तमिति वाच्यम्, आसपदमुख्यार्थविशेषणसमर्पकस्य कपिपदस्य ानन्वयप्रसङ्गात्, आसपदे लक्षणाप्रसङ्गाच्च । कपिपदे यौगि- स्यैव ज्यायस्त्वात् । उपपन्नश्च योगार्थो वक्ष्यते । कप्यासम्- ईष- सितमित्यपरोर्थः । सोप्ययुक्तः, अवयवशक्त्या रूढ्या वा ईषद्विका

तया वाक्यकाराभिप्रेतमित्यवगतम् । अर्थान्तरत्रयमुपपन्नम् । कं
कपिरादित्यः, तेन, आस्यते- क्षिप्यते- विकास्यत इति कप्यासम्
नाति कपिर्नाळम्, तस्मिन्नास्त इति कप्यासम्; अपच्छितादपि
ळम्थपुण्डरीकस्य शोभातिशयोस्तीति सोत्र विवक्षितः; कं- जल
उपवेशन ' इति धातुरपिपूर्वकः ; ' वष्टिभागुरिरल्लोपमवाप्योरु
ति अपेरकारलोपः, कप्यासम् - सलिलस्थितमित्युक्तं भवति
मस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभि
भगवता भाष्यकारेण वेदार्थसंग्रहेऽभिहितम्- " गम्भीराम्भस्स
नाळरविकरविकसितपुण्डरीकदळामलायतेक्षणः " इति । गेष्णौ
शेषौ । गानपर्वणि प्रस्तावादिसामभक्त्यवयवरूपे सामगासा
स्येव प्रसिद्धेस्साम्नावच्छेदे गेष्णाख्यायास्तेषां प्रसिद्धत्वा
गेष्णाविति ऋक्सामयोः पूर्वत्वोक्त्या स्तुतौ साध्यायां
वत् साधनत्वं विवक्षितम् । एवं च सामाभिव्यक्त्
विषयत्वं ' ऋक्च साम च गेष्णावि ' त्यनेन विवक्षितम्
शरीरावयवपर्वणी इत्यपि केचित् । अस्मिन्नपि पक्षे अनेन
ऋक्प्रतिपाद्यत्वमेव विवक्षितम् । अधिदैवतम्— देवत
अध्यात्मम्—आत्मन्युपासनम् । आत्मशब्दो देहवचनः
आदित्यस्थस्य । तस्मात्ते धनसनयः । " एतन्ते गायन्ती
' हिरण्मयः पुरुषस्तस्मादि ' त्यनेन परामृश्यते । यः
तस्मादेव पुरुषाद्धनवन्त इत्यर्थः । यस्मादीश्वरं गाया
वन्त इत्यपि वदन्ति, तदानीमप्ययमेवार्थः । अत्र संश
कारणं किं प्रकृष्टपुण्यो जीवः, उत अन्य इति, तदर्थं
जीवः उतान्य इति, तदर्थं अक्ष्यादित्यमण्डलान्तर्वर्ती

अत्र पूर्वपक्षः- उपचितपुण्यविशेषो जीव एव, करचरणाद्यात्म भोगार्थशरीरसम्बन्धश्रवणात । ततश्च 'सयश्चायं पुरुष' इत्यादित्यम लान्तर्वर्तिनानन्दमयस्यैक्यावगमादानन्दमयो जीवः । एवमानन्दमयस् जीवत्वे निश्चिते 'एको ब्रह्मण आनन्द' इत्यादिकं कथञ्चिदुपपादनीयम् प्रजापतिशब्दो दक्षादिपरोस्तु, आनन्दयितृत्वप्राप्यत्वविपश्चित्त्वभेदव्य देशानन्दहेत्वनुभवविषयत्वादिकमुपचितपुण्यविशेषस्य जीवान्तरापेक्षः सम्भवत्येव । तादृशपुण्यमाहात्म्यादेव शरीरानपेक्षसङ्कल्पसम्भवोपि अस्य 'भीषोदेति सूर्य' इति सूर्यभयहेतुत्वं च द्वादशादित्येषु प्राधान्य तदतिरेकाद्वोपपद्यत इति ।

राद्धान्तस्तु - अक्ष्यादित्यमण्डलान्तर्वर्ती जीवादन्य एव, जी सम्भावितापहतपाप्मत्वादिधर्मोपदेशात् । तत्रैव सम्भावितधर्मोपदेशादि सूत्रार्थः । करचरणाद्यात्मकशरीरसम्बन्धश्च-'अजायमानो बहुधा विजायते इत्यवतारत्वश्रवणादुपपन्नः । अत्रोपदेशग्रहणं अपहतपाप्मत्वादीनां क श्चिन्नयनं वारयितुम् । सर्वोपदेशस्य सङ्कोचो न युक्त इति हृदयम्

२· **भेदव्यपदेशाच्चान्यः** ॥१–१-२२॥

"य आदित्ये तिष्ठन्नि' त्यादिना जगत्कारणात् भेदव्यपदे दपि जगत्कारणमादित्यमण्डलान्तर्वर्त्यानन्दमयो जीवादन्यः । अयं चा शब्द उत्तरसूत्रेऽप्यनुवर्तते । अत्रेदमवधातव्यम् - ईक्षतिसूत्रे साध्य र्दिष्टम, आनन्दमयसूत्रे साध्यन्न निर्दिष्टम्, अस्मिन्नधिकरणे द्वित सूत्रे साध्यन्निर्दिष्टम्, एवन्निर्दिशतोयं भावः - ईक्षतिसूत्रे अन्य इ निर्देशे तस्यैवोत्तरत्राप्यनुवृत्तिसम्भवेन सूत्रलाघवे सत्यपि निर्विकार ब्रह्मणः कथमुपादानत्वमिति शङ्कायां प्रकृतिशरीरकत्वेन तदुपप

ानन्दमयसूत्रे तदधिकरण एव नेतर इत्यन्यार्थप्रतिज्ञाया आवश्यकत्व
ास्यैवान्वयसम्भवात् साध्यनिर्देशो न कृतः । अत्र 'आकाशस्तल्लिंगादि
यनेन सन्निधानात् झटित्यन्वयसिद्धये कृत्स्नहेतूपन्यासानन्तरं साध्यनिर्दे
ोनांजस्यासिद्धेश्च द्वितीयसूत्रे साध्यं निर्दिष्टम् । अत एवानन्दमयसू
एवान्य इति निर्देशे तस्यैव सर्वत्रान्वयसम्भवे ऽस्मिन्नधिकरणे साध्यनि
र्देशो न कार्य इति शङ्कापि निरस्ता । नेतर इत्यत्रेतरपदस्य साध्योप
स्थापकत्वाभावाज्जीवोपस्थापकत्वाच्च साध्यसाकांक्षे वाक्ये झटित्यन्वय
सम्भवादिह साध्यनिर्देशः । यद्यपीहान्यशब्दो जीवादन्यपरः, तद
कस्य च नोत्तरत्रान्वयसम्भवः, तथापीह सूत्रे पूर्वपक्ष्युक्तान्यतात्पर्य
कत्वस्य सिद्धत्वादस्योत्तरत्र सर्वत्रान्वयस्सम्भवतीति ।

परेतु - अन्तरादित्येन्तरक्षिणि चोपास्यः पुरुषः किमादित्यजी
रूपसंसारी कश्चित्, किं वा परमेश्वर इति संशयः । 'हिरण्यश्मश्रु' रित
दिरूपश्रवणात् 'य एषोन्तरादित्ये' 'य एषोन्तरक्षिणि' इत्याधारश्रवणा
'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाञ्च ये चैतस्मादर्वाञ्च
लोकास्तेषां चेष्टे मनुष्यकामानाञ्चे" त्यादित्यपुरुषाक्षिपुरुषयोरैश्व
मर्यादाश्रवणाच्च संसारीति पूर्वपक्षः । सिद्धान्तस्तु - अन्तरादित्येन
क्षिणि चोपास्यः पुरुषः परमेश्वर एव, न संसारी; कुतः ? अपहतपा
त्वोपदेशात्, "सैवक्र्तत्सामेत्या" दिना ऋक्सामाद्यात्मकत्वोपदेशात
आदित्यपुरुषे उद्गातृकर्तृकगानविषयत्वोक्तेरक्षिपुरुषे लौकिकवीणागानवि
त्वोक्तेश्च । भेदव्यपदेशाच्चान्यः । अस्ति चादित्यादिशरीराभिमानि
जीवेभ्योन्य ईश्वरोन्तर्यामी, "य आदित्ये तिष्ठन्नि" त्यादिना श्रुत्यन
भेदव्यपदेशात् । तत्र हि 'आदित्यादन्तरो यमादित्यो न वेदे" ति वे
रादित्याद्विज्ञानात्मनोन्यो ऽन्तर्यामी स्पष्टं निर्दिश्यते, स एवेहाप्यन्तरादि

अपरेतु– " अन्तःप्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानं चरन्तमि " त्यादितैत्तिरीयवाक्यं विषय । अन्तस्स्थो विष्णुः, इन्द्रा मो वेति सन्देहः । पूर्वपक्षस्तु- इन्द्राद्यन्यतम एवान्तस्स्थः, " इन्द्रो जगतो य ईशे त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम् , ब्रह्मेन्द्रमग्निं : प्रतिष्ठाम् , दिव आत्मानं सवितारं ब्रह्मस्पतिम् " इति इन्द्रादि ति । राद्धान्तस्तु- अन्तस्स्थो विष्णुरेव, "अन्तस्समुद्रे मनसा चरन्तं ण्डकोशं शुष्ममाहुः प्राणमुल्बमि " ति समुद्रशायित्वब्रह्माण्डवीर्यत्व द्धर्मोपदेशात् । नचेन्द्रादिश्रुतिभिस्तद्बाधः, निरवकाशलिङ्गबलेन ाशश्रुतीनामेव बाधौचित्यात् । ननु यदि निरवकाशलिङ्गबलादन्तः विष्णुः, तर्हि स्वतः प्रबलेन्द्रादिश्रुतिबलादिन्द्रादिरूपोप्ययमस्त्वित्या ाह- भेदव्यपदेशाच्चान्यः। अन्तस्स्थ इन्द्रादिभ्योन्यश्च,"इन्द्रस्यात्मा ः पञ्चहोता अन्तरादित्ये मनसा चरन्तामि"त्यादि भेदव्यपदेशादिति ।

अन्येतु– "अन्तस्तद्धर्मोपदेशात्" इत्यत्र "नेतरोनुपपत्ते" रिति तर इत्यस्यानुवृत्तिमुक्त्वा; आदित्यान्तर्वर्ती परमेश्वरः, न तु ाभिमानी पुरुष इति चोक्त्वा, अस्तु परमेश्वरः, सतु मण्डलाभि ः पुरुषादन्यो न भवतीति शङ्कायाम् , " भेदव्यपदेशाच्चान्य " ूत्रं मण्डलाभिमानिनः पुरुषाद्भेदपरमित्याहुः ।

इतरेतु– अन्तराक्षिवाक्यमेव विषयः । तत्र संशयः, अक्ष्यन्तःपुरुषः जगदादिश्रीमदादिगुरुरेव, उत छायापुरुषजीवप्रत्यगात्मान इति । ुरुष एवायम् , 'दृश्यत' इति अपरोक्षाभिधानात् ; यद्वा विनाश्य त्वे फलप्रापणायोगाज्जीवो वा स्यात् , तस्यापि दर्शने अक्षिसान्नि

विशेषात् पृथगेव वा स्यात्; तस्य नित्यचेतनत्वतः फलयो
त्वादिगुरुर्भगवान्, शारीराक्ष्यन्तरवस्थाने मानाभावात्, इति
उच्यते - अन्तस्तद्धर्मोपदेशात्। अक्ष्यन्तःपुरुषो भगवानादिगुरु
गर्भो ब्रह्मैव, तदसाधारणापहतपाप्मत्वादिधर्मोपदेशात्। यद्वादि, श
हशारीरादन्यास्थितिर्निर्मातेति; तत्राह - भेदव्यपदेशाच्चान्यः। प
शारीरादन्यः शरीरान्तः परमेश्वरोऽप्यन्तर्यामी, भेदव्यपदेशात् -
भेदेन शरीरान्तरेव चान्तर्यामिणः परमेश्वरस्य श्रुतिस्मृतिभ्यामुपदे
श्रुतिः "यश्चक्षुषि तिष्ठन्" इत्यादिः, स्मृतिश्च - "उपद्रष्टानुम
कर्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः॥'

परपक्षे पूर्वपक्षे आधारत्वस्य युक्तिता न युक्ता, तत्र हि
रूपाधारत्वं श्रूयते, किन्तु रूपविशिष्टस्यैव, तच्च परमेश्वरेऽपि सम्भ
यदि रूपाभावात्तत्र सम्भवतीति पूर्वपक्षिणोऽभिमानः, तर्हि पृथ
न युक्ता। अत एव सिद्धान्ते तस्य पृथक्परिहारोपन्यासोऽपि
ऐश्वर्यमर्यादाश्रवणमपि न पूर्वपक्षसाधकम्, आदित्याक्षिपुरुषैक्यः
क्षिणोऽप्यभिमतत्वेन मर्यादाया असिद्धेः। अत एव किमादित्य
संसारी कश्चित् किं वा परमेश्वर इति संशयोपन्यासः। आचार्यै
दाश्रवणं पूर्वपक्षहेतुतया परमतानुसारेणोपन्यस्तम्, स्वमते तस्य
म्भवात्। यदि पूर्वपक्षे आदित्यमण्डलाक्षिपुरुषयोर्भेदो विवक्षित
क्षिपुरुषस्य कारणत्वं न सिद्ध्येत्। यद्यभेदो विवक्षितः, तदा न
सिद्धान्ते च ऋक्सामाद्यात्मकत्वयुक्तिरयुक्ता, तत्र प्रकरणे ह
ऋक्सामाद्यात्मकत्वेन स्तुतिदर्शनात्। किंच त्वन्मते सर्वत्र सद
सत्तातादात्म्यमेव सर्वत्र वाच्यम्, न तु परमेश्वरतादात्म्यम्। हि

[स्फूर्तिमात्रात्कथञ्चिदन्तर्यामित्वोक्तावपि सत एव तत्स्यात्, न तु
ारस्य । श्रुतिसाम्यञ्चायोगव्यवच्छेदपरत्वोपपादनस्थले दूषितमेवेति ।

अपरपक्षे 'अन्तःप्रविष्ट' मित्याद्युदाहरणमनुपपन्नम्; तथाहि—
रवस्थानं प्राधान्येन प्रतिपाद्यते, तदेवोदाहरणं युक्तम्, अन्त
निर्देशेन तादृशवाक्यस्यैव बुद्धौ विपरिवृत्त्या तत्परित्यागे हेतव
्; नहि "अन्तःप्रविष्ट" मित्यादिवाक्यं प्राधान्येनान्तर्वर्तित्व
यदीमं न्यायमुपेक्ष्यान्तश्शब्दश्रवणमात्रेण स्वर्णघर्मानुवाकवाक्य-
ोदाहरणत्वमिष्यते, तदाप्यन्तरादित्यवाक्यस्याप्यन्तस्तद्धर्मोपदेशयो
तस्याप्युदाहरणता कुतो न स्यात्? नन्वक्षिविद्याविषये "अन्त
" रिति वक्ष्यते, यद्यन्तराक्षिविद्यायां अक्ष्यन्तर्वर्ती भगवानिति
यते, तदाऽक्षिविद्यापि तत्तुल्यार्थेति निश्चयान्न तदधिकरणारम्भ
इति चेन्न;— तदधिकरणपर्यालोचनायां तच्छङ्कानुदयात्; तच्च
स्फुटीभविष्यति । द्वितीयसूत्रमप्यनुपपन्नम्, परस्परानुपजीवि
द्वयपरत्वेनाधिकरणभेदप्रसङ्गात्, चकारास्वारस्याच्च ।

अन्यपक्षोऽप्यनुपपन्नः, अस्मिन्नेवाधिकरणेऽन्यशब्दे विद्यमाने
ण सूत्रद्वयोक्तहेतुद्वयस्य तदन्वये स्वरसतः प्रतीयमाने चाधिक
राश्चेतर इत्यनुस्यूतस्यायोगात् । आदित्यान्तरुपास्यत्वेनोक्तो मण्डला
ी न भवति, किन्तु परमेश्वर एव, परमेश्वरो मण्डलाभिमानि
इत्येवं सूत्रद्वयेपि प्रतिज्ञाद्वयविवक्षायां चशब्दवैयर्थ्यम् । नन्वस्त्व
मुच्चयार्थश्चकारः, आदित्यान्तरुपास्यत्वेनोक्तो नारायणादन्यस्य इति;
हेतुसमभिव्याहृतस्यास्य चकारस्य हेत्वन्तरसमुच्चयं विना समुच्चया
ोगात्, तदर्थानुपपत्तेश्च । तथाहि सवितृमण्डलमध्यवर्ती हिरण्मय
ायण एव, "अथ य एष" इति वाक्ये आदित्यमण्डलस्थं पुरुष

पुण्डरीकसादृश्यं विधीयते, एतच्च पूर्ववाक्यप्रतिपन्नाया देवताया द्व्य
लिङ्गं सत्त्वचक्षं व्यावर्तयति, उद्देश्यविशेषणानामपि प्रतीतिरस्त्येव, प
तद्विरुद्धार्थस्य प्राप्तौ कथञ्चित्तदनुगुणानुवादत्वादुद्देश्यविशेषणमविव
मित्युच्यते; एवञ्चात्र विरोधाभावात् द्विवचनस्य कथञ्चिद्वर्णनीयत्वाभ
द्वित्वानुवादो द्व्यक्षस्यैव तत्रावस्थानं सूचयति; पुण्डरीकाक्षाभिधानये
धीनतत्प्रत्यभिज्ञा, " हिरण्मयः पुरुषः " " आप्रणखात्सर्व एव सुवण
इत्याभ्यां " सुवर्णज्योतिस्सरिरस्य मध्ये " इत्येतत्प्रत्याभिज्ञा, अपहतप
त्वञ्च अत्र लिङ्गानि । अपहतपाप्मत्वञ्च सुबालोपनिषदादिषु भगवदस
रण्येन प्रसिद्धम् । पूर्वत्रापि " अथ यदेतदादित्यस्य शुक्लं भास्सैवर्क्
यन्नीलं परः कृष्णस्तत्साम, अथैतदेवैतदादित्यस्य शुक्लं भास्सैव सा,
यन्नीलं परः कृष्णस्तदिदं स तत्सामे " त्यादित्यान्तर्वर्ती भगवानेवेति
मवगम्यते । अत्र ' अथयन्नील ' मित्येतत् यदादित्ये नीलमिति शङ्क
व्याख्यातम्। नीलं- नीलद्रव्यं। तत्किमित्याकांक्षायां तद्व्याचष्टे 'परः कृ
इति, परमात्मा कृष्ण इत्यर्थः । " परः कृष्ण " मिति पाठे लिङ्गव्यत्
श्छान्दसः । एवं श्रुत्यैव भगवत्त्वावगतिः । पूर्वत्र सर्वत्रेयमित्यादिना पृ
व्यादिकं निर्दिश्य, " सैवर्क् तदम " इत्याद्युक्तम्, अतोऽत्रापि " यन्
तत्साम तदम " इत्येतावत्येव वक्तव्ये " परः कृष्ण " इत्यतिरिच्यते
अत इदमिह विज्ञायते, पूर्वमेकेनैव पदेन पदान्तरनिरपेक्षेण द्रव्यविशे
समर्पणान्न तत्र पदान्तरप्रयोगः, इह तु नीलपदेन द्रव्यविशेषाप्रतीतेस्त
तीत्यर्थं " परः कृष्ण " इत्युच्यते; इयंशब्दस्य सामान्यशब्दत्वेपि प्र
प्राचुर्येण द्रव्यविशेषप्रतीतेर्न पदान्तरप्रयोगः । अतो द्रव्यविशेषप्रतीत
मेवेदं विवरणम् " परः कृष्ण " इति । नैल्योत्कर्षविवक्षाभ्रमवारणार्थं
वत्सलतरा भगवती श्रुतिरुपस्थितत्वान्नीलपदेन निर्दिष्टव्येपि कृष्णपदेन

श्रुतेरपराधोऽस्ति । यदि तु कृष्णशब्दः कृष्णद्रव्यपरः कार्ष्ण्यपरो वा
च लिंगव्यत्ययश्छान्दसः, तदेदं लिङ्गम् । अस्मिन् पक्षे परकृष्णा
किंचित्प्रयोजनं दृश्यते । एवमक्षिविद्यायामप्यक्षिसन्निहितस्यैव ।
दृश्यते । उपबृंहिता चेयं विद्या योगार्णवे "आदित्यमण्डले तत्र
द्विष्णुं परात्परम् । सर्वाधारं वासुदेवमीशानं शिवमच्युतम् ॥ आत्मा
जगतां पुरुषं हेमरूपिणम् । हिरण्यश्मश्रुकेशं च हिरण्मयनखं ह्य
कप्यास्यासनवन्नेत्रं सृष्टिस्थित्यन्तकारणम् । पद्मासनस्थितं सौम्यं
कमलेक्षणम् ॥ ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् । विज्ञानन्तं सव
धारणाद्धर्ममुत्तमम्" इति । अत्र "परात्पर" मिति "परः कृष्ण" इत्य
शब्दो व्याख्यातः । 'आस्यासनव" दिति कप्यासशब्दस्यार्थद्वयमु
द्वितीयो वाक्यकारोक्तः, प्रथमो ऽपूर्वः । "प्रबुद्धकमलेक्षण " मिति
करविकसितत्वरूपार्थान्तरमुक्तम् । कं जलं पिबतीति कपिस्सूर्यः, तेन
इति कप्यासम् , आदिकर्मणि क्तविवक्षया जले अध्यास्त इत्ययम
लब्धः । "सर्वलोकाभयप्रद" मित्यनेन कृष्णशब्दस्य यौगि
विवृतः । तैत्तिरीयमहोपनिषदि आदित्यान्तर्वर्तित्वं भगवतः श्रूयते
"य एषोन्तरादित्ये हिरण्मयः पुरुषः" इति, अस्य च नाराय
पूर्वस्मिन्नारायणानुवाके तस्य प्रकृतत्वादवगम्यते । किञ्चानन्दव
"सयश्चायं पुरुषे यश्चासावादित्ये स एक" इति पुरुषे आदित्ये
वर्तमानत्वेन प्रसिद्धवन्निर्दिष्टस्याभेदः श्रूयते, नारायणानुवाके तदन
नुवाके च तदपेक्षिता प्रसिद्धिराधेया, तयोः परस्परसन्निधानात् ।
स्वप्रकरणे "यो वेद निहितं गुहायां" मिति पुरुषान्तर्वर्तितया
त्वादयमिति निर्देशः । नारायणानुवाकरूपप्रकरणान्तरे तथा प्रकृत
स इति निर्देशः । अनेन नारायणानुवाकस्योपस्थित्या तदनन्त
कस्यापि [illegible]

"यो वेद निहितं गुहाया" मिति पूर्वनिर्दिष्टस्य "अन्योऽन्तर
न्दमय" इत्यव्यवधानेन प्रकृतस्यानन्दमयस्य तदिदंशब्दाभ्यां
स्सम्भवति, तथापि भृगुवल्ल्यां "सयश्चायं पुरुष" इत्यत्र तच्छ-
व्यवहितप्रकरणस्थपरामर्शित्वदर्शनेन तत्समानरूपेऽस्मिन्नपि वाक्ये
स्य व्यवहितप्रकरणस्थपरामर्शित्वमेव युक्तम् । ननु "अय"
रात्मपरम्परापर्यवसानभूमित्वेनोक्तः परामृश्यते, 'स' इति 'य आ
त्यन्तर्यामिब्राह्मणोक्तः, "यश्चासावादित्य" इत्यप्यन्तर्यामि
क इति चेन्न;– आदित्यान्तरात्मनो जीवान्तरात्मनश्चैक्यस्यान्त
णसिद्धत्वेन तदुपजीविवाक्येनावरुव्धत्वात् । स्वशाखास्था
प्रश्नगतवाक्योपजीवनसम्भवे परशाखागतोपजीवनायोगाच्च । इह
जीवान्तरत्वेनोक्तस्य सर्वान्तरस्य विशिष्यादित्यान्तर्याम्यभेदोप
योजनाभावाच्च । एवञ्च "यश्चासावादित्य" इति सविग्रह
मण्डलान्तरवस्थानमेव परामृश्यत इति तत्सारूप्यात् "स
" मित्यत्रापि पुरुषे सविग्रहस्यावस्थानमेव प्रतिपाद्यत इति ।
इत्यपि 'य आत्मनि तिष्ठन्नि' त्येतदपेक्षं न भवति । किञ्चात्र
ब्दस्य शरीरपरत्वं प्रकरणादवगतम्, अतश्च 'अयं पुरुष'
'यो वेद निहितं गुहाया' मित्युक्तहृदयसम्बन्धपरम्, हृद
रीरैकदेशत्वात्, ततश्च 'स' इत्यपि 'पञ्चकोश' मित्यादिना
हृदयसम्बन्धपरम्, हृदयसम्बन्धश्च सविग्रहस्यैवेति तत्सारूप्यात्
ावादित्य' इत्यपि विग्रहविशिष्टावस्थानपरमिति नान्तर्यामिब्राह्मणा
वाक्यम् । नच 'ऋतं सत्य' मिति मन्त्रबलात्पूर्वोत्तरयो
ं शङ्कनीयम्, तस्यापि "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टा"
भिर्वेदान्तविजये भगवत्परतया निर्णीते अम्भसीत्यनुवाके श्रुतेन
र्तं तद् सत्यमाहुस्तदेव ब्रह्म परमं कवीना" मित्यनेन वाक्येन

ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । उमापतिः पशुपतिः पिन
ह्यमितद्युतिः ' " ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधि
ब्रह्मणोऽधिपति " रिति तापनीयानुसारेण " तन्मध्ये दहराकाशं तन्मध्ये
मण्डलम् । तन्मध्ये परमानन्दवपुषं कृष्णपिङ्गलम् । नारायणं
नाथं वासुदेवमनामयम् " इति योगार्णववचनानुरोधेन, " विष्णुः कृ
केशवो मञ्जुकेशः श्रीवत्साङ्कः श्रीपतिः पीतवासाः । विष्वक्से
विश्वरूपो मुरारिश्शौरिश्शार्ङ्गी पद्मनाभो मुकुन्दः " इति हलायुधवचन
विश्वरूपशब्दस्य भगवति रूढत्वेन च भगवत्परत्वात्, तापनीये
शब्दो लक्ष्म्यात्मकसकलजगत्सृष्टिमूलभूतभगवद्बुद्धिशक्तिपरः । वा
" पूर्वं नारायणस्त्वेको नासीत् किंचिद्धरेः पर" मित्यादिना " एको ह
नारायण आसी " दित्युपनिषदर्थमनुक्रम्य, " तस्य द्वितीयं सिषृक्षो
बुद्ध्यात्मिका बभौ " इति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ " उमे
संज्ञया सा तु तदादित्वे व्यवस्थिता । ओमित्येकाक्षरीभूत्वा सासृजे
भुवन्तु सा " इत्युमासंज्ञकत्वाभिधानात् । पिङ्गलत्वञ्च लक्ष्मीभूषाम्बरा
रुपपन्नम् । विरूपाक्षत्वञ्च वाराहे तस्मिन्नेवाध्याये " तस्य चि
यतो नेत्रात्तेजस्समभवन्महत् । दक्षिणं वह्निसंकाशं वामं तुहिनसन्निभ
इति शीतोष्णत्वेन वैरूप्याभिधानान्निर्व्यूढम् । " ऊर्ध्वरेत " मिति
रेतोभ्यो विकारेभ्य ऊर्ध्ववर्ति, विश्वविकारोत्तीर्णम्, छान्दसस्सकारलो
ऐतरेयके " अथातो रेतसस्सृष्टिः प्रजापतेरेतो देवा देवानां रेतो
वर्षस्य रेत ओषधयः ओषधीनां रेतोऽन्न " मिति विकारे प्रयोगात् ।
" ऋतं सत्य " मित्यत्र विरूपाक्षशब्दरूढ्या रुद्रपरत्वाशङ्का,
प्रथमान्तस्य ब्रह्मविशेषणत्वेन नपुंसकलिङ्गत्वात्; पुल्लिङ्गस्यैव
रूढत्वात् । " यदा ऋतं परं ब्रह्म याति विष्णुं सदाशिवः । ऊर्ध्व
ध्यायतीह शङ्करो नीललोहितः " इत्यथर्वणि श्रूयते, तदनुसार

उत्तरभागस्तु प्रथमान्तो रुद्रपरः; ध्यायातेपदञ्चाध्याहृत्य ;
ऋतं सत्यं परं ब्रह्म कृष्णपिङ्गळं पुरुषं विरूपाक्ष ऊर्ध्वरेतास्सन्
तीति वाक्यार्थः । पूर्वोत्तरभागयोरेकविषयत्वे कृष्णपिङ्गळशब्देन
लोहितशब्दस्य पौनरुक्त्यप्रसङ्गात् । " ऋतं सत्य " मिति तैत्तिरं
रप्येवमेवार्थः । ननु " सर्वो वै रुद्र " इत्यारभ्य, " नमो हिरण
हिरण्यपतयेम्बिकापतय उमापतये नमो नम" इति श्रवणात्तत्र बाहुग्रह
लक्षणत्वेनादित्यान्तर्वर्तिहिरण्मयपुरुषप्रत्यभिज्ञानाच्च रुद्रएवादित्यान्त
चेन्न;—" आदित्यो वा एषः" " आदित्यो वै तेज " इति चा
वाकाभ्यां अन्तरादित्यविद्यां सफलामभिधाय, तदन्ते ' इत्युपा
इत्युपसंहारेण तद्विद्याप्रकरणविच्छेदात् । " हिरण्यबाहव " इति
व्रीहिणा हिरण्यालंकृतबाहव इत्यर्थः । अन्यथा लक्षणाप्रसङ्गात् ।
प्रत्यभिज्ञा । अतस्सिद्धं भगवानेव तैत्तरीयमहोपनिषद्यादित्यान्तवर्ती
इति । तथैव चेयमुपबृंहिता श्रीविष्णुपुराणे – " सर्वशक्तिः परा
ऋग्यजुस्सामसंज्ञिता । सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति
सैव विष्णुस्स्थितः स्थित्यां जगतः पालनोद्यतः । ऋग्यजुस्साम
स्सवितुर्द्विज तिष्ठति ॥ मासि मासि रविर्योयस्तत्र तत्र हि सा पर
मयी विष्णुशक्तिरवस्थानं करोति वै ॥ अङ्ग एषा त्रयी विष्णोः
स्सामसंज्ञिता । विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ॥
नास्तमेता च कदाचिच्छक्तिरूपधृक् । विष्णुर्विष्णोः पृथक्तस्य
स्सप्तविधोप्ययम् । एवं सा वैष्णवी शक्तिर्नैवापैति ततो द्विज ।
मासं भास्वन्तमध्यास्ते तत्र संस्थितम्" इति । अत्र "सैषा त्रयी तप
" सैषा त्रय्येव विद्या तपती " ति वाक्यस्यैव किंचिद्विकृतस्य
च्छक्ते ऋग्यजुस्साममयत्ववर्णनाच्च तदुपबृंहणत्वं स्फुटम् । शक्तिश
ग्रहविशेषाविशिष्टपरः, " ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मश

दिषु तथा दर्शनात् । " विष्णोः पृथक्तस्य गुण " इत्युक्त्या मण्डला
तृविग्रहविशिष्टाद्विष्णोः पृथक्त्वस्य विवक्षितत्वादादित्यान्तर्वर्ती पुरुषो
मयो विष्णुरिति दर्शितं भवति । स्वरूपात् पृथक्त्वस्यात्रैव पुराणे
ो निषेधात् । " मासि मासी " ति वीप्सया " नापैती " त्युक्त्याच
वेशेषे विष्णोर्मण्डलाधिकारित्वात्तस्यादित्यान्तर्वर्तितोक्तिः क्वचिदिति मूर्ख
ोपास्तः, तैत्तिरीय एव " प्रजापतिरिन्द्रमसृजतानुजावरं देवानां तं
णोत परे हि एतेषां देवानामधिपतिरेधी ति "तं देवा अब्रुवन् कस्त्वं
वयं त्वच्छ्रेयांसस्स्म इति देवा अवोच " न्निति, अथ वा "इदं तर्हि
तौ हर आसीत् यदस्मिन्नादित्ये तदेनमब्रवीत् एतं मे प्रयच्छ अथाह
ां देवानामधिपतिर्भविष्यामीति " इत्यारभ्य, " तदस्मै रुक्मं कृत्वा
ुञ्चत् ततो इन्द्रो देवानामधिपतिरभवत् " इति सूर्यमण्डलान्तर्वर्ति
ो रुक्ममयग्रैवेयीकृतस्य इन्द्राय प्रदानमुक्तम् ; तस्य रुक्माभरणीकरणं
न्त्रप्रतिकृत्यादिरूपेण रुक्माभरणे विन्यासः; तच्च तेजो विष्णुरूपमेवेति
ुतानुवाकार्थप्रत्यभिज्ञापकपूर्वतापनीयखण्डादवगम्यते । सोयं खण्डः—
न्द्रः किल देवानामानुजावर आसीत्तं प्रजापतिरब्रवीत् गच्छ देवाना
ातिर्भवेति सोऽगच्छत् तं देवा ऊचुः आनुजावरोसि त्वमस्माकं कुतस्तवा
यमिति स प्रजापतिमभ्येत्योवाच मां देवा ऊचुः आनुजावरोसि कुतस्तवा
यमिति तं प्रजापतिस्सौवर्णैः कलशैरमृतपूर्णैरानुष्टुभमन्त्रितैरभ्यषिंचत्
दर्शनेन दक्षिणतोऽरक्षत्पाञ्चजन्येन वामतः द्वयेनैव सुरक्षितोऽभवत् रौक्मे
े सूर्यवर्चसं मन्त्रमानुष्टुभं विन्यस्य तदस्य कण्ठे प्रत्यमुञ्चत् तदस्य
ीक्षोभव" दित्यादिः । हरशब्दस्य तेजोवाचित्वंच "ज्योतिर्हर उच्यते
हरांस्युच्यन्त" इति नैरुक्तवाक्यादिभ्योवगन्तव्यम् । किंच "स्वर्णवर्मा
केन महापुरुषविद्यया " इति भागवते एकादशस्कन्धे भगवदर्चायां
योगात "[illegible]

... सिद्धत्वर्णवर्मानुवाकोप्यादित्यान्तर्वर्तित्वे भगवतः प्रमा
... " अन्तरादित्ये मनसा चरन्तं'मरीचीनां पदमिच्छन्ति वेधसः'
... ... ज्योतिर्नभसा सर्वदेती " त्यादिषु परमात्मकीर्
...विषयत्वमुख्याभिधानात् मरीचीनां पदं सूर्यमण्डलम्। तथा आरुण
... प्रपाठके " केदमग्नं निविशत " इत्यनुवाके अन्नादीनां निवार
... " विद्युत् सूर्ये समाहिता अनवर्णे इमे भूमी इयं चासौ च
... " इति सूर्यमण्डलस्य द्यावापृथिवीधारकत्वमुक्त्वा, किं स्विदत्रान्त
... येनेमे विधृते उभे " इति अस्मिन् सूर्यमण्डलान्तः किं भूतं वर्ते
...विनास्य द्यावापृथिवीधारकत्वमुपपद्येतेति " गुह्यम्महो विभ्रदिती " ...
...वाक्योक्तगुह्यतेजोविषयकप्रश्नमवतार्य, " विष्णुना विधृते भूमी "
...नुवाक्येन सावित्रान्तर्वर्ति गुह्यं महो भगवानेवेति व्याख्यातम् । तथ
...णीयोपनिषदि षष्ठे प्रपाठके "विश्वसृग्वैनामैषा तनूर्भवतो विष्णोर्यदिदम
... रसः प्राणस्य मनो विज्ञानं मनस आनन्दं विज्ञानस्येत्येवं विद
...म् ... विज्ञानवानानन्दवांश्च भवती"त्यारभ्य,"अग्निहोत
... मोहजालं भिनत्ति अन्तस्सम्मोहं छित्वा क्रोधं स्तुन्वानः का
...ध्यायमानश्चतुर्जालं ब्रह्मकोशं भिनत्ति ततः परममाकाशम् "। अत्र ...
...म्याग्नेयसात्विकानि मण्डलानि ततश्शुद्धसत्त्वान्तरवस्थमचलममृ
...विष्णुसंज्ञितं सर्वाधारं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चै
...स्वे महिम्नि प्रतिष्ठमानं पश्यति, अत्रोदाहरन्ति- " रविमध्ये स्थित
...तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये
...ऽच्युतः ॥ शरीरप्रादेशमात्रमङ्गुष्ठमात्रमणोरण्वणुतरं ध्यातः प
... गच्छति अत्र हि सर्वे कामास्समाहिता इति, अत्रोदाहरन्ति अङ्गुष्
...शरीरमात्रं प्रदीपप्रतापवद्द्विधा त्रिधा हि ब्रह्माभिष्टूयमानम्महो देवं
...न्याविवेश ओन्नमो ब्रह्मणे नमः " इत्युक्तम् । तथा- हिरण्मयेन

[illegible] पुरुषः सोसावह" मिति "एषवै सत्यधर्म" इति । अत्र
[illegible] "क्रियार्थोपपदस्य कर्मणि स्थानिन" इति चतुर्थी । एषेभ्यो
[illegible] । विष्णुं द्रष्टुमित्यर्थः । घटायोन्मीलितचक्षुरितिवत्
[illegible]दित्ये पुरुषस्सोहमस्मीति' तदनन्तरसंभूतदर्शनाभिलापः । बृहदा-
'सत्यधर्माय दृष्टय" इति पाठादयमेवार्थः । तत्र च सत्य
भगवानभिधीयते, सत्यधर्मशब्दस्य भगवत्परतायाः प्रागभि
[illegible]सत्यधर्मायेति चतुर्थी "षष्ठ्यर्थे चतुर्थी वक्तव्ये" ति अहल्यायै
। इयञ्चोपनिषद्योगयाज्ञवल्क्येनाप्यनुगता "ईश्वरं पुरुषा-
[illegible]धर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वामृतमुपाश्नुते ॥
[illegible]ति ह्येष बाह्ये सूर्यस्य चान्तरे । अभ्रावधूमके प्येष ज्योति
[illegible]य" मिति । सावित्रीव्याख्यानावसरे च "सवितुस्तद्वरेण्यन्तु
[illegible]नीश्वरम् । हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् । सूर्यमध्ये
[illegible]स्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्वं सत्वमध्ये
[illegible]तः । सोऽक्षं प्राणा मनश्चैव ज्ञानमानन्द एव च । निमेषादिः
[illegible] तस्मादुत्पद्यते यतः । कालकर्ता ततो ज्ञेयः कालाख्यो विष्णु
[illegible]षा विश्वभृतो नाम तनुर्विष्णोस्सनातनी । अन्नरूपेण विज्ञेया ययेदं
[illegible]त् ।' इति । अत्र शब्दतोर्थतश्च प्रत्यभिज्ञानात् स्पष्टं मैत्रावरुण
[illegible]त्वम् । यमस्मृतावपि 'रविमध्ये स्थित' इति श्लोकं पठित्वा,
[illegible]ष देवस्तु मर्त्यानां पटैरिव पिधीयते । अज्ञानपटसंवीतैरिन्द्रियै
[illegible] । एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः"इति पठितम् ।
[illegible]वपि 'रविमध्येस्थित' इति श्लोकः पठितः । दत्तात्रेयस्मृतौ च
[illegible]योसौ विष्णवाख्य आदित्ये पुरुषोन्तर्हृदि स्थितः । सोहं नारायणो
लोकभावन' इति 'योसावादित्ये पुरुषस्सोसावह' मिति मैत्राय
'योसावसौ पुरुषस्सोहमस्मी' ति बृहदारण्यकेशावास्याम्नात
[illegible]ठितम । किञ्चैतरेयकब्राह्मणे नारायण [illegible]

स्पष्टमाम्नायते- "चत्वारः पुरुषा इति बाध्वः, शरीरपुरुषश्छन्दःपुरुषो वेदपुरु
महापुरुष इति, शरीरपुरुष इति यमवोचाम स एवायं दैहिक आत्मा त
योयमशरीरः प्रज्ञात्मा सरसः, छन्दः पुरुष इति यमवोचामाक्षरसमाम्ना
एव तस्याकारो रसः, वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वे
यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मारसस्तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो य
स्योल्बणं पश्येत्, महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसय
न्यानि भूतानि तस्यैतस्यासावादित्यो रसस्स यश्चायमशरीरः प्रज्ञा
यश्चासावादित्ये एकमेव तदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादि
भवति तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्या
आ प्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेत्येतामनु
संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः; एतं ह्येव बह्वृचा
स्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतम्महाव्रते छन्दोगा एतमस्यामेतं
व्येतं वायावेतमाकाशे एतमप्सु एतमोषधीष्वेतं वनस्पतिष्वेतञ्चन्द्रमस
नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते- स एष संवत्सरसमम
श्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मे' ति शरीरपु
दीनाञ्चतुर्णामधिकरणत्वेन प्रज्ञात्मादयो रसा उच्यन्ते । अकारस्यापि
वाक्प्रकृतित्वेन पूर्वोक्तस्य युक्तं विकृतित्वेनोक्तवर्णान्तराधारत्वम् ।
विदो वेदधारणप्रसिद्धेः ऋत्विग्विशेषे ब्रह्मण्यपि युक्तम् । आदित्ये तु
ब्रह्मस्थानत्वं स्पष्टम् । दैहिक इति शरीरपुरुषस्य तच्छब्दवाच्यः
पादकावयवार्थसम्बन्धः कथ्यते । अक्षरसमाम्नाय इत्युक्तचैव अक्षरस
स्मकच्छन्दसा सम्बन्धो द्वितीयपुरुषस्य लभ्यते । वेदपुरुषे तु येन
वेदेति तृतीयया लभ्यते । महापुरुषशब्दस्तु कर्मधारयः । तत्रैव
च्छब्दस्यात्वविधानात् । ततस्तत्रावयवार्थमहत्त्वयोगः प्रध्वंसयन्नन्न
भूतानीत्यनेनोक्तः । संवत्सरशब्दश्च परे ब्रह्मणि वाराहे विंशेध्याये

धेष्ठातरि संवत्सराभिमानिनि विष्णुरूपे प्रसिद्धः— " एते मासा
ः स्वयं संवत्सरो हरिः । " इति । एते आदित्याः मासाभि
ण्डलाधिकारिणः सर्वमासानुवृत्तसंवत्सराभिमानी सर्वमासेष्वधिष्ठाता
। भारते च सहस्रनामसु " अहस्संवत्सरो व्याळ " इति संव-
विष्णोर्नामसु पठ्यते । एवं च तस्यैतस्येति संवत्सरात्मा महा
यते । आदित्यशब्दश्च रूढ्या मण्डलं तदभिमानिजीवं वाऽऽहेति
शब्देनाधारत्वेनोच्यते , आदित्यशब्दात् " दित्यदित्यादित्यपत्यु
" इति ण्यप्रत्ययान्तत्वमाश्रित्यादित्यान्तर्वर्तिवाचित्वे रूढिहानेः ,
वादित्य " इत्यनेन वैरूप्याच्च । ' स यश्चायमशरीर ' इत्यन
शरीरात्मरसत्वेनास्मिन्नेव प्रकरणे पूर्वोक्तोऽनूद्यते । पुरुषद्वयव्यव
ब्दः एतत्प्रकरणस्थत्वादयामिति यश्चासावादित्यइति वाक्येनन्तरोक्तो
ऽसाविति प्रत्यक्षतया निर्दिश्यते । उत्तरत्र " एतं ह्येव बह्वृचा"
ब्देन संवत्सरत्वेनादित्यान्तर्वर्तितया प्राज्ञतया चोक्तो महापुरुष एव
। महापुरुषशब्दश्च " महादेवं वा महापुरुषं वार्चयेत् , अथातो
स्याहरहः परिचर्याविधिं व्याख्यास्यामः " इति बोधायनादि
" महापुरुषशब्दं च बिभर्त्येष सनातन " इति नारायणो
दिगतद्वैपायनादिवचनाच्च नारायणवाचकत्वेन सिद्धः ।
यश्रुतिः पाद्मे पुराणे उपबृंहिता वत्सापहारानन्तरं ब्रह्मस्तोत्रे—
पुरुषो ब्रह्मन्महापुरुष एवच । शारीरपुरुषस्त्वंस्याच्छन्दः पुरुष
चत्वारः पुरुषास्त्वं हि त्वमेव पुरुषोत्तमः ' इत्यारभ्य, 'उक्थे
मांस्यमेतद्ब्रह्म प्रचक्षते ' इति । तथाऽनुशासनिकेच ' तमध्वरे
स्तुवन्ति रथन्तरेसामगाश्च स्तुवन्ति । तस्मै हविरध्वर्यवः कल्पयन्ते स
ह्म गुहां प्रविष्टः' इति। अत्र ' एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त'
ाक्यमुपबृंहितम् । बृहदारण्यके च ' इद्धो वै नामैष योयं द-
पुरुषस्तं वा एतमिद्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्ष

प्रिया इव हि देवाः प्रत्यक्षद्विषः अथैतद्वामेऽक्षिणि पुरुषरूपमेषाऽ
विराट्तयोरेष संस्तावो य एषोन्तर्हृदय आकाश" इति । इह चोक्तां
ब्देन परोक्षाभिधानं 'राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी' ।
ठके श्रीदेव्यामिन्द्रपत्नीति प्रयोगात् भगवतो विष्णोरेवेति गम्
भूसूक्ते च 'विष्णुपत्नीं महीं देवी' मितिवच्च 'नमाम्यच्युतव
मितिवच्च 'इन्द्रपत्नी व्यापिनी' ति भूम्यां प्रयोगाच्चावगम्यते । '
संस्ताव' इत्यक्ष्यन्तर्वर्तिनो हृदयाकाशान्तर्वर्तित्वं श्रूयते । हृ
शान्तर्वर्तिनश्चादित्यान्तर्वर्तित्वं 'स यश्चायं पुरुष' इति वाक्यान्नि
एतद्बलादपि भगवत एवादित्यान्तर्वर्तित्वं सिद्धम् ।

किञ्च 'आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् । ध्याय
त्यादित्यतन्निष्कामो मुच्यते द्विजः ॥' 'आदित्यमण्डलान्तस्
ब्रह्माधिदैवतम् । छन्दोनिवृत्तस्याद्गायत्री मया दृष्टा सनातनी ॥'
स्मृतिवचनैरादित्यान्तर्वर्ति परं ब्रह्म गायत्रीप्रतिपाद्यमिति तावद्व
तथाहि—गायत्रीमन्त्रार्थतया स्मृतिवचनैः प्रतिपाद्यमानं परं ब्रह्म
तेव, तस्यैव परब्रह्मत्वात् ; "नारायणपरं ब्रह्म" "नारायणः
"सर्वभूतस्थमेकं नारायणं कारणरूपमकारं परं ब्रह्मो" मित्यादिश्रुतेः
सत्यं परं ब्रह्म" ति मन्त्रश्च भगवत्परतया व्यवस्थापितः । किञ्च
शब्दः सहस्रनामसु भगवन्नामतया पठ्यते 'सविता रविर्लोचन
किञ्च मैत्रायणीयोपनिषदि 'हिरण्मयेन पात्रेणे' ति पूर्वोक्तमन्त्रे
न्तर्वर्ती विष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरमाम्नायते "यत
मध्येऽक्षिण्यसौ चैतत् ब्रह्मैतदमृतमेतत् भर्गएतत्सत्यं धर्मइति यत
मध्य उदुत्वा मयूखे भगवत एतत्सवितुर्वरेण्यं सत्यधर्म एतद्यजुरेतत
त्तप एतदग्निरेतद्वायुरेतत्प्राण एतदपान एतच्छुक्रमेतदमृतमेतत् ब्रह्मवि
भानुवर्णस्तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्त्येषा वै ब्रह्मै
ह्रि सर्वे कामास्समाहिता" इति च भर्गशब्दस्य वरेण्यशब्द

सवितृसम्बन्धित्वादसङ्कोचेन धर्मादिगोचरधीप्रचोदकत्वस्मृत्या च सकल
प्रचोदकस्य सवितुश्चाक्षुषज्ञानसहकारिभूतप्रसिद्धसवितुरन्यत्वेन परमात
त्मा तद्धिग्रहपरत्वौचित्येन ब्रह्मादिशब्दास्तत्परा एव। अतएव ब्र
विषयत्वं भानुवर्णत्वञ्चोक्तम्। तलवकारिणां श्रुतौ सावित्रीविषये "कस्स
वेता का सावित्री' ति खण्डे- 'तस्या एष तृतीयस्स्वर्धियो यो नः प्रचो
यादिति, यज्ञो वै प्रचोदयती' ति प्रचोदयिता यज्ञ इति व्याख्यातम्
यज्ञशब्दश्च 'यज्ञो वै विष्णु' रिति श्रुतेः 'यज्ञेन यज्ञमयजन्त' त्यादि
प्रयोगात्, 'पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम्' इति मात्स्योक्तेः, 'यज्ञ
याचरतः कर्म' 'कर्मग्रन्थिर्विलीयत' इति गीतादिप्रयोगात्, कर्मणोऽचेत
नस्य प्रेरकत्वादित्यान्तवर्तित्वानुपपत्तेश्च विष्णुपरः। एवं बृहदारण्य
सप्तमप्रपाठके—'भूमिरन्तरिक्षं द्यौ' रित्यादिना गायत्र्याः पादत्रयं तुरी
ञ्चाभिधाय 'गायत्र्येतस्मिंस्तुरीये दर्शिते तुरीये पदे परोरजसि प्रतिष्ठि
ति चतुर्थपादात्मकपरोरजश्शब्दवाच्ये 'एष वा व स परोरजाः इति
वाच एष तपती" ति काठकश्रुत्या सूर्यान्तर्वर्तिपुरुषतया निर्णीते वस्तु
प्रतिष्ठितत्वमुक्त्वा, पुनश्च गायत्रीमहिमानमभिधाय, आदित्यान्तर्वर्तिपुर
दर्शनप्रार्थनामन्त्र आम्नातः – "हिरण्मयेन पात्रेण" त्यादिः। स
मैत्रायणीयश्रुतौ— "सत्यधर्माय विष्णव" इति पाठाद्विष्णुविष
इत्युक्तम्। परोरजस्त्वञ्च 'लोका रजांस्युच्यन्त' इति यास्कनिरुक्त
नुसारात् सर्वलोकेभ्य उपरिस्थितत्वं रजोगुणकप्रकृतिमण्डलोत्तीर्णत्वं
'क्षयन्तमस्य रजसः पराके' इति विष्णाववगमितं गायत्रीप्रति
भूतस्य विष्णुत्वे लिङ्गम्। भागवते भरतचरिते गायत्री तद्विषय
बृहदारण्यकश्रुतिरन्याश्च भगवद्वासुदेवपरतयोपबृंहिताः- "भगवन्तं हिरण
पुरुषं उज्जिहाने सूर्यमण्डले प्युपतिष्ठन्नेतदुवाच परोरजास्सवितुर
वेदा देवस्य भर्गो मनसेदं जजाने' ति। अत्र 'एष वा व
परोरजा इति होवाच एष तपती' ति काठकश्रुतिं 'उदुत्यं जातवेदस

ेति श्रुतिं, उक्तबृहदारण्यकश्रुतिं, ‘ य एषोऽन्तरादित्ये हिरण्मय
ुरुषः ’ इत्यादितैत्तिरीयच्छान्दोग्यश्रुतिश्चाभिप्रेत्य ‘ परोरजा जातवेदा हिर
मयं पुरुष ’ मित्युक्तम् । योगयाज्ञवल्क्ये — ‘ईश्वरं पुरुषाख्यन्तु
ात्यधर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वाऽमृतमुपाश्नुते’’ इति
ायत्रीव्याख्यानावसरे च “ सवितुस्तद्वरेण्यन्तु सत्यधर्माणमीश्वरम्
हेरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञित ” मिति । सनकस्मृतौ— “ रश्मि
ज्वालासहस्राढ्यं मण्डलं विपुलं रवेः । तदन्तश्शीतलाभन्तु सौम्य
ोमस्य मण्डलम्॥ स्फुरत्स्फुलिङ्गमनलज्वालामालासहस्रकम् । तस्य मध्ये
ुखासीनं तप्तहाटकसन्निभम् । चतुरङ्गुलमात्रन्तु शुकपत्रनिभाम्बरम्
क्तनेत्राम्बरं रक्तपाणिपादनखांशुकम् । शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्ष
म्। एवं ध्यात्वा जपेन्मन्त्रं सावित्रीं नियतश्शुचिः॥’’इति। संवर्तस्मृतौ च-
‘ आदित्यमण्डलान्तस्थं रुक्माभं पुरुषं परम् । ध्यायन् जपेत्तदित्येतान्नि
ष्कामो मुच्यते द्विजः ॥ ” इति । आग्नेयपुराणे नवमे ऽध्याये- “ ध्या
तथाग्निना प्रोक्तं सन्ध्यायाश्च मरीचये । ततेऽर्थतः प्रवक्ष्यामि द्विजान
हितकाम्यया ॥ सन्ध्ये द्वे संस्थितस्सूर्यस्सूर्यमध्ये स्थितश्शशी । चन्द्रमध्ये
हुताशस्तु सर्वतेजोमयो हरिः ॥ अङ्गुष्ठमात्रः पुरुषस्सूर्यमध्ये मयोदितः
शङ्करेण तथा ऽदृश्यस्तत्प्रकाशोऽतितेजसा ॥ स विष्णुर्भुवनाधारो यस्ये
सकलं जगत् ॥ वरेण्यं च तत्सवितुर्भर्गो यो भगवान् गिराम् । धीशब्द
वाच्यां ब्रह्मा च प्रचोदयति सर्वदा । सृष्ट्यर्थं भगवान्विष्णुस्सविता
तु कीर्तितः । सर्वलोकप्रसवनात् सावित्री सा तु कीर्त्यते ॥ ” इति
एवं श्रुतिस्मृतिभिः गायत्र्या भगवत्परत्वे निश्चिते सति यद्यापात
एतद्विरुद्धार्थं किञ्चिदुपलभ्येत तदा तदेतदेतदनुगुणतयैव कथञ्चिन्नेयम्
एवं चायं गायत्र्यर्थः— नो धियो यः प्रचोदयात् तस्य सवितुर्देवस्
तत्प्रसिद्धं वरेण्यं भर्गस्तेजोमयं रूपं धीमहीति । तथा चागस्त्यः- “ र
देवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमु

ननु- सवितुर्वरेण्यमित्यन्वयः, अव्यवधानात्, 'तदक्ष
वरेण्य' मित्यत्र तथा दर्शनाच्च; अतः कर्तरिषष्ठी, भर्गशब्द
तलवकारिणां श्रुतौ 'तस्या एष द्वितीयः पादो भर्गमय' इ
मैत्रायणीयश्रुतौ - 'सविता वै देवो योऽस्य भर्गाख्यस्तं चिन्तय
नात्; 'आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभि' रि
वल्क्योक्तेश्च; भर्गशब्दश्च रुद्रे रूढो धीमहीत्यनेनान्वेति 'सु
त्यादिना स्वादेशेन द्वितीयान्तः, व्यत्ययेन प्रथमान्तो वा; तदि
वाचि, 'तदिति वा एतस्य महतो भूतस्य नाम भवती' इ
एवञ्च देवस्य सवितुर्वरेण्यं तेजःप्रदत्वेन समाश्रयणीयं भर्गं
यो भर्गो नो धियः प्रचोदयादित्यर्थः; उत्तरवाक्यगतत्वाद्यच्छब्द
नपेक्ष इति।तन्न,प्रधानभूतभर्गशब्दान्वयसम्भवे उपसर्जनवरेण्य
योगात्, विशेषणस्याव्यवधायकत्वाच्च । किञ्च सवितुरिति दे
व्यावर्तकत्वात्, ततश्च देवस्येत्यनेनैव वरेण्यशब्दस्य भर्गश
अन्वयो वाच्यः, देवस्येत्यनेन च भर्गशब्दस्यैवाव्यवधानमि
तेनान्वयो वाच्यः । यस्सवितेत्यनुक्त्वा यो देव इति वदन्नगस्त्य
माह । नच वरेण्यशब्दस्य वरणीयार्थकस्य प्रतिसम्बन्ध्यु
सवितृशब्दस्यान्वयो युक्त इति वाच्यम्, वरेण्यशब्दस्य
तया यौगिकार्थस्यानादेयत्वात् । ननु स्मृतिसिद्धस्य आ
परं ब्रह्म गायत्र्या दैवतमित्यस्यार्थस्य सिद्धये
रविपरो वाच्यः, अतो वरेण्यशब्दो वरणीयार्थकस्स
न्वय्येव युक्त इति चेन्न;- सवितृशब्दस्य रविपर
शब्देन तेजोवाचिना परमात्मपरेणान्वयसम्भवेन वरेण्यशब
परित्यागे हेत्वभावात् । सवितृवरणीयत्वार्थांगीकारेपि वा
तस्समाश्रयणीयत्वसम्भवेन तेन मण्डलवर्तित्वालाभाच्च ।
प्रसिद्धिपरेण [illegible]

वरेण्य' मिति श्रुत्यनुसारात्तथान्वयः; तत्र किं प्रकृतशिवापेक्षया व
मिति निर्देशः, किंवा गायत्रीस्थभर्गश्शब्दापेक्षया? नोभयथापि नपुंस
पत्तिः। नच तत्पदस्य ब्रह्मपरत्वाद्भर्गशब्दस्य च तद्विशेषणत्वात्तत्पदा
नपुंसकोपपत्तिरिति वाच्यम्, य इति पुल्लिङ्गनिर्देशानुपपत्ते
अतो गायत्रीस्थवरेण्यशब्दस्य द्वितीयान्तस्य भर्गसो विशे
नपुंसकस्यायं विपरिणामेन प्रथमान्ततया निर्देश इत्यास्थे
अनेन वाक्येन गायत्र्यां सकारान्तभर्गश्शब्दसिद्ध्या घ
प्रभातम्। ततश्च सवितुर्वरेण्येन भर्गसा वान्वयेन किंचिदपि बाधकम्
थापि "सविता वै देवः योस्य भर्गाख्यस्तं चिन्तयामी" ति मैत्रा
श्रुत्या सवितुर्देवस्य भर्गसान्वयस्य दर्शितत्वात्तथैवान्वयः, तस्याः
गायत्र्यर्थपरतया तच्छेषत्वात्। इदन्तु वाक्यं न तत्परम्, किन्तु
शिवस्योत्कर्षप्रतिपादनाय गायत्रीप्रतिपाद्यार्थयोगपरम्। तस्माद्भर्गसे
ण्यपदस्य पुरोवादप्रसिद्धस्यानिर्देशेन विशेष्याविवक्षयैव विशेषणपद
कृतः। यथा—"बुद्धेरात्मा महान्पर" इति महत्त्वविशिष्ट आत्म
"महतः परमव्यक्तमिती" ति मन्तव्यम्।

एतेन "तां सवितुर्वरेण्यस्य चित्रा" मिति मन्त्रोपि व्याख्
एवं परोदाहृतवाक्येनैव सकारान्तत्वं सिद्धम्। अत एव मैत्रायणी
"यदादित्यस्य मध्य उदुत्वा मयूखे भगवत एतत्सवितुर्वरेण्यमेतद
र्भर्ग" इति च नपुंसकलिंगेन निर्देशः; यदिति व्याख्येयगायत्री
श्शब्दलिंगग्रहणौचित्याच्च, "भर्गस्तद्वरेण्यमुपास्महे" इत्याद्युदाहृतस्
नच तलवकारिणां "भर्गमय" इति श्रुतेरकारान्तत्वावगमः,
प्रथमपादार्थकथने "अग्निर्वै वरेण्यं आपो वै वरेण्यं चन्द्रमा वै व
मिति त्रिष्वपि नपुंसकैकवचननिर्देशेन गायत्रीस्थवरेण्यशब्दस्य न
वगमात्; तन्निर्देशस्य व्याख्येयानुरोधित्वात्; अन्यथाग्न्यादिशब्द
नानालिङ्गवचननिर्देशापत्तेः। गायत्र्यां च वरेण्यशब्दस्य विशेष्यलिं

कारान्तं विशेष्यपदम्। भर्गमय इति तु भर्गश्शब्दे सकारं त्यक्त्वा तरांशेन पादो निरूपितः। दृष्टंच पदैकदेशेनापि निरूपणम्—यथा वार न्तीयमिति। तत्र हि वारवन्तीयसामयोनिभूतायामृचि "अश्वं नत्वा वार न्त" मिति द्वितीयान्तवारवन्तशब्देन तद्गतस्साम्नो निर्देशः, "मतौ स्सूक्तसाम्नो" रिति शब्दवाचिनो मत्वर्थे छविधानात्। वस्तुतस्त्वत्र तस्या एष प्रथमः पादो भूस्तत्सवितुर्वरेण्य" मिति पूर्ववत्, "तस्या ष तृतीयस्स्वः धियो यो नः प्रचोदयात्" इत्युत्तरवच्च, "तस्या एष तीयः पाद" इत्यनन्तरं "भुवो भर्गो देवस्य धीमही" ति वक्तव्ये "भर्ग य" इत्यतिरिक्तमाम्नातम्। तस्य चैतत्प्रयोजनम्- 'धियो य' इति लिंगानुरोधाद्भर्गशब्दोयमकारान्तस्तृतीयपादान्वयीति शंक्येत,- तन्माशंकी । द्वितीयपादान्तर्भाव उच्यते। भर्गमयः— भर्गशब्दप्रचुरोयं पादः। तुर्थे चार्थतः स्वरूपतश्च तत्रैवान्वयात्। पादस्य विशेष्यस्य शब्दात्म त्वात्, भर्गशब्दो मयट्प्रकृत्यर्थस्वरसतोऽवगम्यते। भर्गश्शब्दस्य तृतीय दान्वयस्य शंकितत्वात्तस्यैव द्वितीयपादान्तर्गतेर्वाच्यत्वात्सकारं विना प- कदेशनिर्देशः कृतः। सान्तत्व एवात्रान्वयोपपत्तिः, द्वितीयान्तत्वात्, न कारान्तत्व इति तात्पर्यतो रुद्रस्य गायत्रीप्रतिपाद्यत्वाभावासिद्धिः।

नच वाच्यम्— द्वितीयः पादो भर्गमयः- रुद्रमय इति गायत्र्या द्रपरत्वज्ञापनं प्रयोजनमिति; गायत्र्या एव रुद्रपरत्वेन पादविशेषे भर्ग यत्वकथनस्य प्रयोजनविशेषाभावेनानुचितत्वात्; विभक्तिव्यत्ययादि ल्पनारहितप्रयोजनसम्भवे तस्यैव ग्राह्यत्वात्; मैत्रायणीयोपनिषदि "भ- र्ग्यं विष्णुसंज्ञं सर्वाधारं धाम" ति दर्शनेन तद्विरोधाच्च। तस्मादिदं कथं उत्तरान्वयनिषेधमुखेन अकारान्तत्वशंकानिरासार्थमेव। अतो ...

एवञ्च तलवकारिश्रुतिरेव भगवती भर्गशब्दप्रयोगप्रचुर भ्रमवारणाय सकारान्तत्वं ख्यापयितुं प्रवृत्तेन प्रथमपादव्याख्य लिङ्गवचनैर्वरेण्यशब्दस्य नपुंसकैकवचनस्य सामानाधिकरण्येन पादव्याख्याने भर्गशब्दस्य तदन्वयकथनेन, तृतीयव्याख्याने प्रचोदयितृत्ववचनेन, ततस्समस्तां गायत्रीं निर्दिश्य यज्ञस्य वा र्थस्य प्रचोदयितृत्वाभ्यासेन च गायत्री विष्णुपरेति दृढीकरोति मवदातम् ।

"सविता वै देवः योऽस्य भर्गाख्यस्तं चिन्तयामी" ति श्रुतावपि शब्दैकदेशे आख्याशब्द औपचारिकः, छान्दसत्वात् सिद्धत्वाभावो वा, देवापि मार्गं मुञ्चन्तीतिवत् । अकारान्तत्वे च भर्गाख्य" इति सवितृशब्देनान्वयप्रदर्शनं न स्यात् । नहि स इत्यन्वयस्समंजसो भवति । भवति तु सवितुस्तेज इति । किञ्च वचनं भगवतो भर्गश्शब्दवाच्यत्वाय प्रवृत्तम् , किंतु गायत्रीप्रति गायत्र्यां च न विसर्जनीयस्य श्रुतिरिति "भर्गाख्यं विष्णुसंज्ञ" निर्देशोऽपि युक्त एव । गायत्र्या योजनान्तरसत्त्वे भर्गशब्दस्याका भगवत्परत्वे न विवादः । बह्वृचे रुद्रसूक्ते "यश्शुक्र इव सूर्ये य मिव रोचते श्रेष्ठो देवानां वसु" रिति । अत्र सूर्ये शुक्र इवेति अव्यवधानात् । शुक्रशब्दो भगवत्परः, "तन्मण्डलस्थं तेजोमूर्तिश्चतुर्भुजम् । उदुत्यन्तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्य भगवद्वचनेनादित्यान्तर्वर्तितदुपस्थाने विनियोगात्तत्परेण देवहितं पुरस्ताच्छुक्रमुच्चर' दिति मन्त्रेण भगवत एव शुक्रत्वा मोक्षधर्मे—'वैकुण्ठः पुरुषो विष्णुश्शुक्रोऽनन्तस्सनातनः । हरिश्मश्रुस्सर्वभूतपितामहः' इति विष्णौ शुक्रशब्दप्रयोगाच्च शब्दस्य प्रथमान्ततया पाठे तु उक्तरीत्या शुक्रशब्दस्य भग

नीलग्रीवो विलोहित ' इति । अत्र नीलपदं छान्दोग्यस्थं कृष्ण पदं प्रत्यभिज्ञापयति । नीलग्रीवशब्दो मण्डलपरः, ' उतैनं गोप अदृशन्नदृशन्नुदहार्य ' इत्युक्तेः । नीलग्रीवत्वं नीलमध्यकत्वं । तच्च न्द्रनीलश्यामळकोमलभगवल्लीलाकमनीयविग्रहयोगादेव, मानान्तरोनुराधात् मुखस्यार्धशरीरत्वप्रसिद्धेर्मुखेतरांगसन्धिभूतग्रीवावाचिनो ग्रीवापदस्य मध्य परत्वं युक्तम् । अतो मण्डलाभिमानित्वाद्रुद्रस्य तदभिमन्तव्यार्थवादः त्रिधामेति समाख्यापि भगवतो भानुमण्डलान्तर्वर्तित्वे प्रमाणम्, "क्षीराब्धि मण्डलं भानोर्योगिनां हृदयानि च । त्रीणि धामानि मे सन्ति त्रिधामाह ततस्स्मृतः" इति नामनिर्वचनात् । भगवतस्सवितृमण्डलमध्यवर्तित्वे स्मृति विस्तरो वेदान्तविजये द्रष्टव्यः । तस्मादन्योक्तयोजनानुपपन्ना ।

इतरपक्षे छायापुरुषस्य कोटित्वमनुपपन्नम्, "तदेव रूपं यदमुष्य रूप" मित्यादिना हिरण्यश्मश्रुत्वादीनां तत्रासम्भवात् । पाप्मभ्य उदय स्तु जीवस्य सम्भवत्येव, पूर्वं पापसम्बन्धे सति मुक्तिदशायां तन्निवृत्तेः द्वितीयसूत्रार्थश्चानुपपन्नः, पक्षनिर्देशरूपस्यान्तश्शब्दस्य साध्यपरत्वाङ्गी कारेणानुषङ्गकल्पनाप्रसङ्गात्; चकारस्य स्थानचलनप्रसङ्गाच्च ।

एवमधिकरणत्रयेण येषु वाक्येषु संशयो भवति पदानां साधारण्या तानि वाक्यानि निरूपितानि । अथ येषु वाक्येष्वसाधारणपदैर्विपर्यये भवति तानि वाक्यान्यधिकरणचतुष्टयेन विचार्यन्ते । तत्र प्रथमे वस्त्वन्त रसिद्धशब्दविशेषेण प्रत्यवस्थानमर्थाविरोधेन परिहारः, द्वितीयेर्थाविरोधशङ्कया प्रत्यवस्थानं विरोधोद्घाटनमुखेन परिहारः, तृतीये विरोधिलिङ्गाभावेना ल्पानुकूललिङ्गसद्भावेन च प्रत्यवस्थानं स्ववाक्ये विरोधिलिङ्गाभावेप्यु क्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः, चतुर्थे उपक्रम एवानुकू

पूर्वाधिकरणे पुण्डरीकाक्षयोगार्थोपस्थापकवाक्यमुखेन पुंण्डरीक श्रुत्युपस्थित्या भगवति कारणत्वपर्यवसायकं वाक्यन्निरूपितम् । इदा श्रुत्यैवानन्तश्रुत्युपस्थित्या ' सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वा ह वा इमानि भूतान्याकाशादेव जायन्त' इति पूर्वतापनीयप्रत्यभिज्ञया भगवति कारणत्वपर्यवसायकं वाक्यं निरूपयति ।

आकाशस्तल्लिङ्गात् ॥ १-१-७ ॥

इदमाम्नायते छान्दोग्ये- " अस्य लोकस्य का गतिरिति आक इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आक प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरी न्नुद्गीथस्स एषोऽनन्त" इति ।

तत्र संशयः, जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किं प्रसिद्धाकाश उत तदन्य इति विचारः । तदर्थं 'अस्य लोकस्य का गतिरिति आका इत्यत्राकाशशब्दः किं प्रसिद्धाकाशपरः, उतान्यपर इति ।

पूर्वपक्षस्तु—प्रसिद्धाकाश एव जगत्कारणवादिवाक्यप्रतिपाद्यं वस " यतो वे " त्यादिवाक्यप्रतिपन्नसर्वभूतोत्पत्तिस्थितिलयकारणत्वस्य विशे साकांक्षस्य " सर्वाणि ह वा इमानि भूतानी " त्यादिना भूताकाशे पर सानवर्णनात् । तत्र हि " सर्वाणि ह वा इमानि भूतान्युत्पद्यन्त " इत्य वादः । " आकाशा " दिति विधिः । एवञ्च सद्ब्रह्मात्मादिशब्दा अ विशेषसाकांक्षास्तत्रैव पर्यवस्यन्ति । आत्मशब्दोपि मृदात्मको घट इत्या प्रयोगेण साधारणो विशेषसाकांक्षस्तत्रैव पर्यवस्यति । ननु—"आत्मन उ काशस्सम्भूत " इत्युत्पत्तिमत्त्वेन श्रुतस्य भूताकाशस्य कथं सर्वभूतस्थि लयकारणत्वम् ? मैवम् , " आत्मेश्वर " मिति अनन्येश्वरत्व इवास्या नन्योत्पाद्यत्व एव तात्पर्यात् । अतः प्रसिद्धाकाश एव जगत्कारणम

स्सम्भूत" इत्यस्य स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपस्सम्भूत इत्यर्थः
एवमाकाशविशेषश्रुत्यनुसारादाकाश एव जगत्कारणमिति निश्चिते सतीक्षा
दयस्तदनुगुणाः कथञ्चिद्वर्णनीयाः । नन्वाकाशस्य कारणत्वमुपादानत्वमे
अतः कर्तुरीक्षणादिकमुपपद्यत इति किमर्थं कथञ्चिद्वर्णनमिति चेन्न; इ
सदित्युपादानपरसद्वाक्यस्याकाशे पर्यवसाने सति तत्राद्वितीयमिति क
निषेधेन कथञ्चिन्नयनस्यावश्यकत्वात् । आकाशस्य जगत्कारणत्वादे
"यदेष आकाश आनन्दो न स्यात्," "आकाशो ह वै नामरूपयोर्नि
हिते" त्येवमादिनिर्देशोऽप्युपपद्यते । नामरूपनिर्वोढृत्वं नामरूपभाक्त्वम्
"ते यदन्तरा तद्ब्रह्मे" ति च सकलनामरूपभागाकाश एव ब्रह्मेत्यर्थ इति

एवं प्राप्ते सिद्धान्तः- आकाशस्तल्लिङ्गात् । आकाशः प्रसिद्ध
काशादन्यः, तल्लिङ्गात् - अन्यत्वगमकादित्यर्थः । निखिलजगदेककारण
सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि ह्याकाशस्य प्रसिद्धाकाशादन्यत
गवगमयन्ति । भूतशब्दस्य महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्या
हाराभावे ऽचित्संसृष्टचेतनपरत्वं स्वतःप्राप्तम् , "यतो वा इमानि भूता
जायन्ते" "न हिंस्याद्भूतानि" "भूतानां प्राणिनः श्रेष्ठा" इत्यादिप्रयो
स्वारस्यात् । नहि भूताकाशस्य चेतनवर्गकारणत्वमुपपद्यते । यद्यपि जीवस्य
कार्यत्वञ्च स्वरूपेण, किन्तु शरीरविशिष्टरूपेण, विशिष्टरूपे च कारणत्व
विशेषणकारणस्याकाशस्य सम्भवत्येव, अथापि न तावन्मात्रेण सदिदमित्यादि
सामानाधिकरण्योपपत्तिः ; तदुपपत्तिर्हि विशिष्टोपादानोपादेयभाव एव
चेतनानां परमप्राप्यत्वरूपं परायणत्वञ्चाचेतनस्यापुरुषार्थस्य हेयस्य
भूताकाशस्य नोपपद्यते । नवा सर्वतो ज्यायस्त्वम् , चेतनापेक्षया ज्याय
स्त्वासम्भवात् । यदुक्तं जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेष
समर्पणादन्यत्सर्वं तदनुरूपमेव नेयमिति; तत्र "सर्वाणि ह वा" इति वाक्ये

अतः पुरोवादाकाङ्क्षायां "सदेव सोम्येदमग्र आसीत्" इत्यादि वाक्य
पुरोवादत्वेनावतिष्ठत इति तत्रेक्षितृत्वादिभिश्चेतनत्वेन सिद्धं सच्छब्द
धेयं कारणवस्त्विहाकाशशब्देन परामृश्यत इति वक्तव्यत्वात्। वि
पर्यवसानाकाङ्क्षा चानन्तपदेनैव पूर्णा नत्वाकाशपदेन, "स एषोऽन
इति तस्यैव विधेः। 'स एष' इति पूर्वप्रकृतमनूद्य 'अनन्त' इति वि
स्पष्टमेव प्रतीयमाने "सर्वाणि ह वा" इति वाक्ये भूतोत्पत्त्यनुवादेनाकाः
कारणतया विधिरस्त्विति शङ्का नोत्थानमर्हति। आकाशशब्दश्च आक
आकाशयति चेति पुरोवादसिद्धकारणपरस्सन्ननुवादः। नच लिङ्गाच्छ्
न्यथाकरणमयुक्तमिति वाच्यम्, अनन्यथासिद्धश्रुतिसिद्धतया लिंग
बलवत्त्वात्। "ऐन्द्या गार्हपत्यमुपतिष्ठत" इत्यत्र हीन्द्रप्रकाशनरूप
नानन्यथासिद्धश्रुतिसिद्धम्, इन्द्रप्रकाशकपदस्यानन्यथासिद्धगार्हपत्य
श्रुत्यनुसारेण लक्षणयान्यथासिद्धेः। नच मन्त्रबलाद्विधिवाक्ये लक्ष
विधिवैयर्थ्यात्। इह त्वीक्षणलिंगमनन्यथासिद्धेक्षतिरूपश्रुतिसिद्धम्,
वादतया स्वोपजीवकवाक्याननुरोधिवाक्यस्थत्वादीक्षतिरनन्यथासिद्धएव
भूतकारणत्वाद्यपि परस्परसंवादिवाक्योपस्थापिततया बलवदेव।
वाक्यानां परस्परसंवादितया अन्यथासिद्धिसम्भावनाविरहात्। बह
लक्षणाप्रसंगेन अन्यथासिद्धेरशक्कनीयत्वात्। अत्राधिकरणद्वयेप्यैकरूप्
धर्मपदेन लिंगपदेन वा हेतूपस्थापनं सम्भवति, अथवा लाघवार्थं पूव
करणे धर्मलिंगान्यतरपदेन हेतुं निर्दिश्य "आकाशश्च" इतिवा निर्देष्टुं शक्य
चशब्दमहिम्ना पूर्वहेत्वनुकर्षसिद्धेः, तथाच पूर्वाधिकरणे धर्मशब्देन अनः
राधिकरणे लिंगशब्देन च हेतुं निर्दिशतोऽयं भावोऽवगम्यते– लिंग
मनन्यथासिद्धिरूपप्राबल्याभिप्रायकम्, इदमवश्यं साधकमेवेति विवक्षि
त्वात्, श्रुत्यवलम्बनपूर्वपक्षस्य लिंगमात्रेण निरासासम्भवात्, पूर्वत्र
पूर्वपक्षस्य लिंगमात्रेण निराकरणसम्भवात्तद्धर्मपदेन हेतुनिर्देश इति।

परेतु—प्रसिद्धिबलाद्भूताकाश इति पूर्वपक्षे—कारणत्वादिभिरानन्त्येनच जैबलिना "अन्तवद्वै किलते शालावत्य सामे" ति पृथिवीलोकं परिच्छि दूषितवता किन्तद्धपरिच्छिन्नं वस्तु तस्य कारणमिति कथनेन तस्या प्रसिद्धेः तस्य च भूताकाशे असम्भवादिति सिद्धान्त इति। चानन्तशब्दार्थमेवमेवाहुः। सर्वेषामपि पक्षे ऽनन्तशब्दार्थो। तथाहि— शालावत्य दाल्भ्य जैबलिभिस्त्रिभिरारब्धायां कथनथमं शालावत्यदाल्भ्ययोः प्रश्नोत्तरपरम्पराप्रसक्ता - "का साम्नो स्वर इति होवाच, स्वरस्य का गतिरिति प्राण इति होवाच, का गतिरिति अन्नमिति होवाच, अन्नस्य का गतिरिति आप इति अपां का गतिरिति असौ लोक इति होवाच, अमुष्य लोकस्य का न स्वर्गं लोकमतिनयेदितिहोवाचे' ति। एवं दाल्भ्येन सामकारणपरम्पराविश्रान्तिभूमित्वेन स्थापिते तस्य पक्षश्शालाषेतः— "अप्रतिष्ठितं वै किल ते दाल्भ्य सामे" ति। एवं दूतया शिष्यभावं प्राप्तस्य दाल्भ्यस्य शालावत्यस्य च प्रश्नद्वय च प्रवृत्तम्— "अमुष्य लोकस्य का गतिरिति अयं लोक इति स्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति हो— । ततश्शालावत्यपक्षो जैबलिना दूषितः— "अन्तवद्वै किल ते सामे" ति। ततो जैबलिशिष्यभावं प्राप्तस्य शालावत्यस्य प्रश्नोत्तरे "अस्य लोकस्य का गतिरिति आकाश इति होवाचे" प्रकरणस्य साम्नो मूलकारणे प्रश्नोत्तरयोस्तात्पर्यम्मूलकारणमसौ दाल्भ्यमतम्, अयं लोक इति शालावत्यमतम्, आकाश एवेति । स एव सिद्धान्तः। अत्र सावधिकत्वेन हि मूलकारणत्वं च "अप्रतिष्ठितं वै किल ते दाल्भ्य सामे" त्यमुष्य लोकस्य परम्पराविश्रान्तिभूमित्वाभावाभिप्रायेण साम्नो ऽप्रतिष्ठितत्व

त्य सामे " त्यत्रापि अस्य लोकस्यापि कारणरूपावध्यन्तरसत्त्वेन तस्य
ामकारणपरम्पराविश्रान्तिभूमित्वाभावाभिप्रायेणान्तवत् सामेत्युच्यते । य-
स्य लोकस्य वस्तुपरिच्छेदादिनैव, दोष उद्भाव्येत तदा ' अस्य लोकस्य
ा गति ' रिति प्रश्नोनुपपन्नः । इदमपि सकारणमित्युक्तौ किं तस्य कारण
ाति प्रश्न उपपद्येत । तस्य कारणत्वासम्भवे उद्भाविते " अमुष्य लोकस्य
ा गति " रिति वा, साम्नः का गतिरिति वा प्रश्नस्स्यात् । एवं च साम
ब्देन किं विवक्षितं यस्येदं वैभवमुच्यते इति, आकाशशब्देनच किमभि
तमित्याकांक्षायामुक्तं " स एष परोवरीयानुद्गीथस्स एषोनन्त '
ते । अनेनैव समभिव्याहारेण उद्गीथप्रधानप्रणवप्रतिपाद्यो
गवानेव जगत्कारणमिति ख्यापयितुमेव " का साम्नो गति "
त्यादिसंरम्भ इत्यवगम्यते । अतो देवतानिर्धारणार्थ एवायमनन्त
ब्दः, नतु दूषणोद्धारार्थः । ननु कारणरूपावधिमत्त्वेन पूर्वमते दूषितेपि
त्रानन्तशब्देन रूढिपरिग्रहो न युक्तः, अनन्तशब्देन कारणरूपावध्य
ावस्यैव वक्तुमुचितत्वात् , तस्यानुक्तौ "आकाशस्य का गति" रिति
श्नप्रसङ्गादिति चेन्न;-- आकाशस्य चरमकारणत्वद्योतनार्थमेव ' सर्वाणि ह
ति वाक्यप्रवृत्तेः । प्रश्नानुत्थानार्थमेवच तद्द्योतनम् । यदि हि
ीरीत्या 'अमुष्य लोकस्य का गति " रितिवत् 'अस्य लोकस्य का गति'
तिवच्च 'आकाशस्य का गति' रिति प्रश्नमुक्त्वा, "न स्वर्गं लोकमति
ादि" तिवत् 'न प्रतिष्ठां लोकमतिनये'दितिवच्च तत्स्थाने 'स एषोऽनन्त'
ुत्तरमुच्येत, तदानन्तशब्दोवध्यभावपर इति निर्धार्येत । नच तादृश
दर्भो दृश्यते । अतोयमनन्तशब्दो रूढ एवेति ।

अनन्तशब्दे योगरूढ्योस्तुल्योन्मेषत्वं मन्यमानं प्रति रूढिबलीय
न्यायावलम्बनेन भगवति कारणत्वपर्यवसायकं वाक्यन्निरूप्य, तन्नच्याया

पदचिह्नितेन कठवल्लीस्थेन " यदिदं किञ्च जगत्सर्वं प्राण एजती " वाक्येन नृसिंहपदचिह्नितापनीयवाक्योक्तभयहेतुत्वेन प्रतिपादितस्य स्य प्रतिपादकवाक्यं विचारयति—

१- अत एव प्राणः ॥१—१—२४॥

छान्दोग्ये श्रूयते " प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते " प्रस्तुत्य, " कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इम भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस मन्वायत्ते " ति । अत्र प्राणशब्दोऽप्याकाशशब्दवत् प्रसिद्ध व्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनि मादिलिङ्गात्- प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु- कृत्स्नस्य भूतजा प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्, बृहदारण्यके- " यदा वै पुरुषः पिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनो यदा ध्यते प्राणं देवा अधि पुनर्जायन्त " इति प्रसिद्धवन्निर्देशरहितया श्रु प्राणस्याप्ययोद्गमनहेतुत्वावगमाच्च, प्रसिद्धप्राण एव जगत्कारणम् । स्य चाचेतनस्य प्रस्तावदेवतात्वं अन्नस्याचेतनस्य प्रतिहारदेवता दुपपद्यते । अन्नस्याचेतनत्वञ्च " अन्नमेव प्रतिहरमाणानि जीवन्ती त्यनेनावगम्यते;—इति ।

परिहारस्तु- शिलाकाष्ठादिषु चेतनस्वरूपे च तदभा " सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इति नोपपद्यते, "प्राणं तर्हि वागप्येती" त्यादिश्रुतिरिन्द्रियव्यापारविषयो अतः " प्राण इति सर्वाणि भूतानी " ति प्राणशब्देन परं ब्रह्मैव धीयत इति ।

अपरे त्वेतदधिकरणं " तद्वै त्वं प्राणो अभवः। महान् भोगः प्रजापतेः। भुजः करिष्यमाणः। यद्देवान्प्राणयो नवे" ति तैत्तिरीयवाक्यां योजयन्ति। तन्न, सूत्रास्वारस्यात्। 'अत एव' त्यस्य पूर्वो हेतुपरामर्श एव स्वारस्यात्, पूर्वप्रकृतकारणत्वादीनामुदाहृतवाक्ये णाभावात्। अतएवेति परामर्शनीयतया तदुक्तस्य "अद्भ्यस्सम्भू इत्यनुवाकोक्तस्य श्रीभूपतित्वस्याकाशाधिकरणे विवक्षितत्वाभावादि

इति प्राणाधिकरणं – नवमम्।

---

## अथ ज्योतिरधिकरणम्।

" इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते " इति सर्वशाखासु सकलशाखातात्पर्यग्राहकपुरुषसूक्तप्रत्यभिज्ञया भगवति कारणत्व सायकं वाक्यं निरूपयति—

१- ज्योतिश्चरणाभिधानात् ॥ १- १–२५ ॥

छान्दोग्ये श्रूयते- " अथ यदतः परो दिवो ज्योतिर्दीप्यते। पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मि पुरुषे ज्योति" रिति। पृष्ठेषु- उपरितनेषु, " त्रिपादूर्ध्वः " " परिष्टा " दित्यादि श्रुतिभ्यः। व्यष्टिसमष्टिविवक्षया " विश्वतः स इत्युक्तम्। अनुत्तमेषु- स्वस्मादन्य उत्तमो नास्तीत्यनुत्तमः। वाक्यं कारणविषयम्, निरतिशयदीप्तियोगस्य कारणत्वाक्षेपक " न तत्र सूर्यो भाति " " तस्य भासा सर्वमिदं विभाती " ति " तथाक्षरात् सम्भवतीह विश्व " मिति निरतिशयदीप्तियुक्तस्य वस्तुः णत्वश्रवणात्। तत्प्रकरणस्य कारणविषयत्वं ह्यविगीतम्, विषयत्वे हि विमतिः।

अत्र संशयः— निरतिशयदीप्तियोगात्कारणभूतं ब्रह्म भवे

प्रसिद्धज्योतिरेव ज्योतिश्शब्दार्थः । "इदं वा व तद्यदिदमस्मिन्नन्तः
ग्रोति " रिति कौक्षेयज्योतिषैवैक्यमुपदिश्यते । तस्य च भौतिकत्वं
षा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा
त्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उप शृ-
' ति उष्णत्वघोषगुणकत्वाम्नानात् सिद्धम् । एवं कौक्षेयज्योति
देशदीतिभ्यामुपोद्बलितया प्रसिद्ध्या ज्योतिश्शब्दस्य महाभूत
त्वे निश्चिते सति, तदनुसारेण कारणवाक्येषु श्रूयमाणो भूतशब्दो
सृष्टचेतनपरः, किन्त्वचिन्मात्रपरः । अत्रापि पूर्वाधिकरणवत्
पेण निखिलजगत्कारणत्वं विवक्षितमिति ।

राद्धान्तस्तु— ज्योतिश्शब्दनिर्दिष्टोऽर्थः प्रसिद्धज्योतिषोऽन्यः, चर
नात्—उपक्रमे " पादोस्य सर्वाभूतानि त्रिपादस्यामृतं दिवी "
द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात्, स्वस्यापि सर्वान्तर्भावेन
पादवत्त्वस्य प्रसिद्धज्योतिष्यसम्भवात् । सूत्रे ' चरणाभिधानादि '
युक्त्यन्तरमपि संगृहीतम् । " पादोस्य सर्वा भूतानि त्रिपादस्यामृतं
' ति वाक्यमुखेन पुरुषसूक्तं प्रत्यभिज्ञायते । तस्य च सर्ववेदतात्पर्य
त्वद्योतनार्थमेव सर्ववेदेषु पाठात्, " वेदेषु पौरुषं सूक्त " मित्यत्र
र्ववेदापेक्षयाभ्यर्हितत्वश्रवणाच्च, तदनुरोधेनेतरेषां वाक्यानां नेय-
रुषश्रुत्यनुसारात्, ' अमृतत्वस्येशान ' इति मोक्षप्रदत्वश्रवणाच्च

शब्दो न महाभूततृतीयपरः, किन्तु पुरुषपर इति । पादाभि
त्युक्ते शब्दप्रत्यभिज्ञा स्यात्, न त्वर्थतः, अर्थतोऽपि प्रत्यभिज्ञां
तुं चरणग्रहणम् । ' पादोस्य सर्वा भूतानि ' ' पादोस्य विश्वा
' त्यनयोः स्तुतिपरत्वेन्यतरस्य स्तुतिपरत्वेनार्थतः प्रत्यभिज्ञा न
, बाधकाभावादुभयमप्यर्थपरमिति चरणग्रहणस्य भावः ।

ननु सर्ववेदतात्पर्यनिर्धारकपुरुषसूक्तेन चिदचिद्विलक्षणपरमा
सिद्धेर्वाक्यान्तराणां सर्वेषां तदनुरोधित्वाच्चायोगव्यवच्छेदाधिकरणान
नारम्भ एव प्रसज्यत इति चेत्? सत्यम्, तत्तद्वाक्यस्वारस्यपर्यालोच
यैव सर्वेषां वाक्यानां परमात्मपरत्वं व्यवस्थापयितुं पुरुषसूक्तानाकल
नैव पूर्वपक्षमुत्थाप्य तदनाकलनेनैव सिद्धान्तकरणात्; इह तु स्ववाव
स्वारस्येन सिद्धान्तकरणायैव पुरुषसूक्तस्योपन्यासः। कौक्षेयज्योतिषैक
पदेशश्च चिदचिद्विलक्षणे वस्तुन्यपि सम्भाव्यते, "अहं वैश्वान
भूत्वा प्राणिनां देहमाश्रितः" इत्युक्तेः। दीप्तियोगश्च 'आदित्यवर्ण
मित्येतत्प्रत्यभिज्ञापकः। विग्रहद्वारा च तदुपपत्तिः।

२. छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि
दर्शनम् ॥ १-१-२६ ॥

उपक्रमे— 'गायत्री वा इदं सर्वं भूत' मिति गायत्र्याख्
छन्दोभिधाय, 'तदेतदृचाभ्यनूक्त' मित्युदाहृतायाः 'तावानस्य महि
मे" त्यस्या ऋचोपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानम्; यद्य
छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वभूतपादव
लिङ्गबलात्परमात्मविषयत्वं अकाशाधिकरणनयेन सिद्ध्यति, तथा
गायत्रीशब्दस्य ब्रह्मपरत्वे चतुष्पदेत्यस्य 'टाबृची' ति विहितट
न्तत्वानुपपत्तेः छन्दोविषयत्वमावश्यकमिति चेन्न;— न गायत्रीशब्दे
छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वभूतपादवत्त्वानुपपत्तेः। अ
हेत्वनुपन्यासः पूर्वसूत्रस्थहेतोरेवान्वयात्। ततश्च ब्रह्मण एव गाय
चेतोर्पणमिह निगम्यते—ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यते
गायत्रीवाक्यनिर्वाहस्यापि उक्तहेतुसहकारित्वान्निगमादिति पञ्चम्यन्तनिर्देश
'तथा हि'- अन्यत्रापि सादृश्याच्छन्दोभिधायी शब्दो अर्थान्तरे प्रयु

पद्यन्ते ' इत्यारभ्य. ' सैषा विराडन्ना ' दित्युच्यते । वाय्वग्निचन्द्र
सलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसंख्यत्वाद्विराट् । अन्नं
तदत्ति चेत्यन्नात् । अनुसन्धानफलं च श्रूयते ' पूर्णामप्रवर्तिनीं श्रियं
ते य एवं वेदे ' ति । पूर्णत्वमपरिच्छिन्नत्वम् । अप्रवृत्तित्वमचलत्वं–
रत्वम् । अनन्तास्थिरा श्रीर्मुक्तैश्वर्यम् । ननु हार्दाकाशविशिष्टपरमात्मो
नफलं हि तच्छ्रूयते; " यद्वै तद्ब्रह्मेतीदं वा व तद्योऽयं बहिर्धा पुरुषा
काशो यो वै स बहिर्धा पुरुषादाकाशः, अयं वा व स योऽयमन्तःपुरुष
काशो यो वै सोन्तःपुरुष आकाशः, अयं वा व स योऽयमन्तर्हृदय आ-
शस्तदेतत्पूर्णमप्रवर्ती " ति हि श्रूयते, अतो न गायत्रीसादृश्यानुसन्धान
मिदमिति । उच्यते, स्वतोऽपरिच्छिन्नत्वेऽपि ब्रह्मणः परिच्छिन्नः पदार्थै
तुष्पात्त्वोपदेशस्योपासनार्थत्वाभावे वैयर्थ्यात् , प्रकरणे तस्य फला
ाविधानाच्च गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते;
भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्का
ावृत्त्यर्थं पूर्णत्वाप्रवृत्तित्वगुणकतयैव चतुष्पाद्ब्रह्मण उपासनं विधीयते ।
ुष्पदेति च गम्भीरायां नद्यां घोष इत्यत्रेव गायत्रीविशेषणमेव ।

उपक्रमस्थगायत्रीशब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन नि-
ग्रम् , ननु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति
ायां, उपक्रम एव गायत्रीपरत्वे स्वारस्यहानिरुच्यते—

२. भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १–१–२७ ॥

उपक्रमे ह्येवं श्रूयते—" गायत्री वा इदं सर्वं भूतं यदिदं किञ्च
वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च, या वै सा गायत्री
वा व सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नाति
यते, या वै सा पृथिवी इयं वा व सा यदिदमस्मिन् पुरुषे शरीरमस्मिन्

व तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता
नातिशीयन्ते, सैषा चतुष्पदा षड्विधा गायत्री " इति । " गाय
इदं सर्वं भूत " मिति गायत्रीशब्दश्चतुष्पाद्ब्रह्मपरः, सर्वभूतशब्द
परः, आत्मवर्गस्य पादत्वं सामानाधिकरण्येनोक्तम् , तस्यैव ब्रह्मण
त्राणादिभिष्षाड्विध्यं च विवक्षुः श्रुतिः गानत्राणोपपादनाय वाग्रूप
" वाग्वै गायत्री " ति । गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूप
मित्यर्थः । " रसोहमप्सु कौन्तेये " त्यारभ्योच्यते— "शब्दः खे
नृष्वि" ति । तथा भगवत्पराशरवचनम्- "शब्दमूर्तिधरस्यैतद्रूपं वि
ष्मनः" इति । ततः किं विवक्षितषाड्विध्यस्येत्यत्राह– " वाग्वा
भूतं गायति च त्रायते चे " ति । वाग्विशिष्टं परं ब्रह्म सर्वं भूतं
अभिधत्ते, हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः । एवमेकः पा
त्राणरूपविधाद्वयं चोक्तम् । तदनुवादपूर्वकं द्वितीयं पादं सामाना
नाह— " या वै सा गायत्री इयं वाव सा येयं पृथिवी " ति
कारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ । या सा सर्वभूतरूपैकपादा
गायत्र्याख्यं ब्रह्म, तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मक
त्राह- " अस्यां ही " ति । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्व
हि केवलपृथिव्यास्सर्वभूतधारणशक्तिरित्यर्थः । प्रतिष्ठात्वं च नियत
" एतामेव नातिशीयत " इति । पृथिवीं भूतजातं नातिवर्तते, ब
ष्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः । पृथिवीमयब्रह्माण
भोक्तृवर्गः परिवर्तते । एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर
विधाद्वयं चोक्तम् । अथ तृतीयं पादमाह- " या वै सा पृथिवी इ
सा यदिदमस्मिन् पुरुषे शरीर " मिति । पुरुषशब्दश्शरीरविशिष्ट
पृथिवीरूपपादविशिष्टा या सा गायत्री- गायत्र्याख्यं ब्रह्म, सा श
शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन

अपि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च । शरीरस्य
त्मकत्वं प्राणप्रतिष्ठात्वतदनातिवर्त्यत्वाभ्यामुपपादयति—"अस्मिन् हीमे
ः प्रतिष्ठिता एतदेव नातिशीयन्त " इति । चतुर्थं पादमाह– " यद्वै
रुषे शरीरं इदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे हृदय " मिति । शरी
पादविशिष्टं यत् गायत्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः । पूर्ववद्
त्मकत्वमुपपादयति- " अस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नाति
न्त " इति । प्राणाः- प्राणापानादयः, इन्द्रियाणि वा, तेषां हृदयसम्ब-
ाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वा
तिवर्त्यत्वरूपं विधाद्वयं चोक्तम्। "सैषा चतुष्पदा षड्विधा गायत्री"-
चतुष्पदा षड्विधा सा गायत्रीत्यन्वयः । एतद्ब्रह्म चतुष्पदत्वेन षड्
त्वेन च प्रसिद्धा गायत्रीत्यर्थः । विधेयानुसारात् स्त्रीलिंगनिर्देशः ।
न्द्रश्शचीपतिः वलेन पीडितः । दुश्च्यवनो वृषा । समित्सुसासहिः "–
चतुष्पदा षड्विधा च गायत्री प्रसिद्धा । तस्याश्च षड्विधत्वं तत्पा-
षडक्षरत्वात् । चतुष्पदेति गायत्रीपदमुख्यार्थस्यैव निर्देशः , तस्य
य ऋग्वाचकत्वाभावे " टाबृची " ति विहितटाबनुपपत्तेः । अतश्चतु-
ति पदं गभीरायां नद्यामित्यत्र गभीरपदवद्गायत्रीपदमुख्यार्थं विशि
। षड्विधेति पदमपि तत्समभिव्याहारात्तद्विशेषणमेव । एवंच ब्रह्मणि
त्र्यां च चतुष्पात्त्वषाड्विध्योक्तेः ब्रह्मणि गायत्रीसादृश्ये तात्पर्यमव
ते । एवं च गायत्रीपदस्य विशेषणद्वयसमभिव्याहारलब्धोयमर्थः—
वेधाख्यां गायत्रीसदृशं ब्रह्मेति । एवं भूतपृथिवीशरीरहृदयानां पादत्वेन
देशो ब्रह्मण एव गायत्रीशब्दाभिधेयत्व उपपद्यते । चरणाभिधानादिति
पादाभिधानादिति वक्तव्ये व्यपदेशग्रहणं " पादोस्य सर्वा भूतानी "
त् भूतादीनां पादत्वस्य कण्ठोक्त्यभावात् । सामानाधिकरण्याद्गायत्री

व्यपदेशादिति वक्तव्ये उपपत्तिग्रहणं गायत्रीपदस्य ब्रह्मणि ' तथा चेत
निगमा ' दि ति विवक्षितगायत्रीसादृश्याद्वृत्तावेवोपपद्यते नतु मुख्य
त्यां लक्षणया ब्रह्मणि वृत्तौ वेतीममर्थं स्फोरयितुम् । लक्षणया ब्रह्मणि
हि चतुष्पात्त्वोपदेशस्य षाड्विध्योपदेशस्य च नातीव प्रयोजनम् । एवं
निर्देशः परमसाध्यानन्वयेनाव्यवहितावान्तरसाध्यान्वयो यथा स्यादिति

४-उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥१-१-२

पूर्ववाक्ये " त्रिपादस्यामृतं दिवी " ति दिवोधिकरणत्वेन
शात्, इह च "दिवः पर" इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूप
पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेन्न;- "उभयस्मिन्न
पदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात् । यथा- वृक्षाग्रे श
वृक्षाग्रात्परतः श्येन इति ।

परेतु-कौक्षेयज्योतिषि सम्पाद्योपास्यं ज्योतिः किं प्रसिद्धमग्न
त्यादि ज्योतिः, उत परमेश्वर इति संशये— प्रसिद्धमेव तज्ज्योतिर्न
प्राणाकाशवाक्ययोरिव वाक्यशेषे श्रुतिभञ्जकतल्लिङ्गाभावात्; प्रत्युत
बह्निषयदीप्त्याधारबहुत्वकौक्षेयज्योतिरध्यासचक्षुष्यत्वविश्रुतत्वरूपाल्पप
पासनोपास्यत्वलिङ्गैर्वाक्यशेषगतैः प्रसिद्धज्योतिषि स्वारसिकैः श्रुतेर
म्भनादिति पूर्वःपक्षः । राद्धान्तस्तु- ब्रह्मैवेदं ज्योतिः, " त्रिपादस्य
दिवी " ति सर्वाणि भूतान्येकं पादं कृत्वा पादत्रयरूपेणोक्तस्य
स्सर्वनामत्वेन- प्रकृतपरामर्शित्वस्वभावेन- यच्छब्देनाभिधानात्
छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शन
"तावानस्ये" ति मन्त्रे ब्रह्मणः प्रकृतत्वमसिद्धं, पूर्वत्र गायत्रीशब्देन छ
एवाभिधानेन मन्त्रेणापि तस्यैव प्रतिपादनादिचेत्? नायं मन्त्रश्छन्दोवि

ादत्वाद्ययोगात्; तथा "गायत्री वा इदं सर्वमि"
विषयः, छन्दसस्सर्वात्मकत्वायोगात्; किन्तु तत्र
एस्वविकारानुगतब्रह्मानुसन्धानोपदेशात्तल्लक्षकः, वि-
ष्णुपलक्षणमिति न सर्वात्मकत्वानुपपत्तिः। तथाच
ब्रह्मानुसन्धानोपदेशो दृश्यते— "एतं ह्येव बह्वृचा
इत्यादौ। तथेत्यस्य तेन विकारानुगतत्वेन प्रकारेणे

श्चरणाभिधानात्। बह्वृचाः पठन्ति "वि मे कर्णा
ं ज्योतिर्हृदय आहितं यत्। वि मे मनश्चरति दूर
रे किमु नू मनिष्ये" इति। मम कर्णौ ज्योतिषो विरुद्धं
द्धं पतति, यदिदं हृदय आहितं ज्योतिः तदत्यन्तं
मनश्चातिविरुद्धञ्चरति, अतो व्यामनुद्धिग्न्यह किन्नु
अनुचिन्तयेयम्, इति मन्त्रार्थः। अत्र हृदयाहितज्योतिः
ष्णुरिति सन्देहः। अग्निरिति पूर्वः पक्षः, अस्य मन्त्र
नाग्निप्रकरणत्वात्प्रसिद्धेश्चेति। राद्धान्तस्तु विष्णुरेवेदं
मेतज्ज्योतिर्विरुद्धचरणाभिधानात्। कर्णादिविदूरत्वं
तनुवा वृधाने" त्यादिना विष्णोरेवावगम्यते। मीयते
ा- इन्द्रियगणः। त्वंपरोसीत्यर्थः। न च प्रकरणविरोधः,
ाधोपपत्तेः। न च श्रुतिविरोधः, श्रुतेर्विष्णावपि सावकाश-
धानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्।
यदतः परो दिवो ज्योतिर्दीप्यत" इत्यादौ ज्योतिः श्रूयते,
र पठ्यते, "गायत्री वा इदं सर्वमि" त्युपक्रमात्, सा
ष्णुः उत छन्दोविशेष इति संशयः। पूर्वपक्षस्तु—गायत्री
गायत्रीशब्दस्य तत्रैव रूढत्वात्

तस्माज्ज्योतिश्शब्देनापि स एवाभिधीयते न विष्णुरिति । सिद्धान्तस्तु
यत्रीपदेन विष्णुरेव निगद्यते,- गायत्रीशब्दार्थोसावित्युपासनार्थम् । उ
ज्योतिश्शब्देनापि स एव निगद्यते । कुत एतदितिचेत् ? गायति
त्रायते चेति गानत्राणकर्तृत्वलिङ्गश्रवणात् । तस्य च्छन्दस्यसम्भवा
अतो विष्णुरेव गायत्री, ज्योतिरपि स एव । भूतादिपादव्यपदे
पपत्तेश्चैवम् । " एतावानस्य महिमा, अतो ज्याय
पुरुषः, पादोस्य सर्वा भूतानि, त्रिपादस्यामृतन्दिवी " ति गा
मधिकृत्योदाह्रियते । सर्वाणि भूतान्यस्यैकः पादः, अस्यामृतं स्वरूप
पादत्रयं दिवि तिष्ठतीति पादोस्येत्यादेरर्थः। एवं गायत्र्या भूतादिपादव्य
शाच्च सा विष्णुः, तस्य विष्णावेवोपपत्तेः , अन्यत्रानुपपत्तेश्चेत्यर्थः । इ

अत्येतु--दिवि श्रूयमाणं परं ज्योतिः किं सूर्यो जाठराग्निः परमे
श्वेति संशयः । पूर्वपक्षस्तु- द्योशब्दस्याकाशवाचित्वात् परोदिव इत्या
वर्ती सूर्य एवात्र प्रतिपाद्यते; अथवा 'यदिदमस्मिन्नन्तः पुरुषे ज्योति
ति पुरुषान्तर्वर्तितया जाठराग्निरिति । सिद्धान्तस्तु- "परो दिवो ज्योति
ति सर्वोत्तरं परं ज्योतिः परमेश्वर एव, "पादोस्य सर्वा भूतानी" ति
तिपोस्य एकांशतया सर्वभूतानामभिधानात् ; नैतज्जाठराग्निसूर्ययोरस
वति, परिच्छिन्नत्वादिति । द्वितीयसूत्रे अन्येषां भाष्ये सिद्धान्तान्न विशे
टीकायान्तु 'तथाचेतोर्पणनिगमात्तथाहि दर्शनमि' त्यंशः प्रकारान्तरेण
जितः । तथा- तेन गायत्र्यवच्छिन्नत्वप्रकारेण, ध्यानोपदेशात्; त
न्यत्रापि 'एतंह्येव बह्वृचा महत्युक्थे मीमांसन्त ' इत्यादौ कार्यविशे
च्छिन्नपरमेश्वरदर्शनोपासनमस्तीति ।

परपक्षे सिद्धान्ते ब्रह्मण एव त्रिपाद्रूपत्वोपपत्तिरनुपपन्ना, द्विवी
करणनिर्देशानुपपत्तेः, व्यापकत्वाद्ब्रह्मणः । नच द्युशब्दो द्योतमानस्व
परः, सप्तम्यस्वारस्यात् । द्वितीयसूत्रे गायत्रीशब्दो गायत्रीरूपविक

स्वारस्यासिद्धेः । सूत्रे तावत्तथाशब्देन छन्दसः प्रकृतत्वाच्छन्दस्साहश्यमे
श्चवगम्यते, न विकारानुगतत्वम् । वाक्ये " गायत्री वा इदं सर्वमि " इ
रभ्य ब्रह्मणि भूतपृथिवीशरीरहृदयरूपांश्चतुरः पादान् गानत्राणभूतप्र
ष्ठात्वतदनतिवर्त्यत्वप्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपाण्षड्विधाश्चोपदिश्य
"सैषा चतुष्पदा षड्विधा गायत्री" ति गायत्र्यामप्यन्यदेव चतुष्पा
षाड्विध्यं चोच्यते; पूर्वोक्तपादविधानां ब्रह्मसम्बन्धित्वं गायत्र्यास्तद
न्यत्वादवगम्यते । सैषेत्यस्यायमर्थः- एषा- एतद्ब्रह्म, चतुष्पदत्वेन षड्वि
त्वेन च प्रसिद्धा या गायत्री सेत्यर्थः । चतुष्पदेति गायत्रीपादस्यैव निर्देश
तस्य पदस्य ऋग्वाचकत्वाभावे टाबृचीति विहितटाबनुपपत्तेः । अतश्चतु
देति पदं गभीरायामृचामित्यत्र गभीरपदवत् गायत्रीपदमुख्यार्थं विशिनष्टि
षड्विधेति पदमपि तत्समभिव्याहाराद्गायत्र्याश्चतुष्पात्त्वस्य प्रतिपाद्यं षड्वि
त्वेनोपपाद्यत्वाच्च गायत्रीपदमुख्यार्थविशेषणमेव । एवं च ब्रह्मणि ग
त्र्यांच चतुष्पात्त्वषाड्विध्योक्तेर्ब्रह्मणि गायत्रीसादृश्ये तात्पर्यमवगम्यते। ए
गायत्रीपदस्य विशेषणद्वयसमभिव्याहारलब्धोयमर्थः- पादविधाभ्यां गा
सदृशं ब्रह्मेति । अवयवगतस्यापि षाड्विध्यस्य समानधर्मतया वि
" अष्टावुपभृति अष्टाक्षरा गायत्री यदष्टाकपालो भवत्यष्टाक्षरा गायत्रं
त्यादिवदुपपद्यते । अतस्साहश्यानुसन्धानविधावेव वाक्यस्य स्वारसिक
त्पर्यम् । एतदनुसाराल्लक्षणातोपि गौणवृत्तिरेव ज्यायसी । अथवात्र भ
गौणी वृत्तिः, सामानाधिकरण्येन गायत्रीपदमुख्यार्थस्यैव ब्रह्माभेदप्रतिप
सति तस्यासम्भवाद्वाक्यस्य सादृश्यानुसन्धानविधितात्पर्यावगमे सति सा
नुसन्धानविधेः कल्पनात् । "अन्योन्तर आत्मा" "शारीर आत्मे" ति च
रूपवाक्यं च दृश्यते । महावाक्यतात्पर्याबाधाच्च न प्रामाण्यहानिः ।
हि दर्शनमि' त्यस्यापि न परोक्तार्थ उपपन्नः, 'एतमेवे' ति वाक्यस्य
कर्मसमाराध्यत्वपरत्वात् । एतमेव परमात्मानं पूजितत्वर्केण तत्तत्स

अपरेषां पक्षोऽप्यनुपपन्नः । तथाहि- चरणं हि
सापेक्षम् , नचेन्द्रियरूपप्रतिसम्बन्धि सूत्रे निर्दिष्टम् । च
पादपरत्वे तु ज्योतिःपदसमभिव्याहारात्तदेव प्रतिसम्बन्धीति
किञ्च " पादोस्य सर्वा भूतानी " ति वाक्येन ज्योतिस्स
मवगतम् , सूत्रेपि स्वरसतस्स एवार्थोऽवगम्यते, अतस्सूत्रसमा
मेव वाक्यं विषयः । किञ्चास्य सूत्रस्य बह्वृचवाक्यविषय
भिधानभूताद्विपादव्यपदेशोपदेशभेदानां तद्वाक्ये श्रवणाभावे
मसाङ्गत्यमेव स्यात् । अतएव तेषामधिकरणान्तरत्वमिष्यत
छन्दोभिधानात् ब्रह्म नात्र गायत्रीशब्दार्थ इति वा–' परो दि
रित्यत्र ज्योतिश्शब्दार्थो न भवतीति वा शंक्यत इति वाच्य
दित्यनेन शङ्कात्वावगमात् ; नचैवं शङ्का सगङ्गच्छते ,
शब्दार्थ इति वा, ' परो दिवो ज्योति ' रित्यत्र ज्योतिश्शब्द
प्रागप्रसक्तत्वात् । ननु ' इदं ज्योतिर्हृदय आहित ' मित्य
पदेन ब्रह्म नाभिधीयते, ' अथ यदतः पर ' इत्यत्र ज्योतिश्श
नभिधानात् , तच्च गायत्रीशब्देन छन्दोभिधानात् , ज्योतिष
त्वात्तज्ज्योतिषः पुरुषान्तवर्तिज्योतिषैक्योपदेशाच्चेति शङ्कार्थ
अत्र ज्योतिःपदस्य गायत्रीपरत्वे तस्य पुरुषान्तर्वर्तिज्योतिं
तदुक्तेरर्थवादतया ' इदं ज्योतिर्हृदय आहित ' मित्येतज्ज्यो
चात् । वाक्यद्वयेनापि पुरुषान्तज्योतिःप्रतिपादने ह्याक्षेपस्स
छन्दोभिधानविधुरवाक्ये पुरुषान्तर्वर्तिज्योतिःप्रतिपादनं छन्दः
वर्तित्वश्रुतिरर्थवाद इति वक्तुं शक्यम् । अतो न पूर्वसूत्रार्था
सम्भवेपि वा कथं नैकाधिकरणता, पूर्वशेषत्वात् । तदङ्गीका
स्यापि च्छान्दोग्यवाक्यविषयत्वमेव युक्तमित्युक्तम् ।
चरणाभिधानभूतादिपादव्यपदेशोक्त्योः पौनरुक्त्यम् , उभये

स्साधर्म्यमेव स्वरसतोवगम्यते, नतु गायत्रीशब्दार्थत्वम् । निगदादि
थगपपाठः, सम्प्रदायविरोधादर्थविरोधाच्च । पाठोहि निगदः । नच चेतो
र्पणं पठ्यते, किन्तु तात्पर्यविषयतया गम्यते । अतो निगमादित्येव युक्त
पाठः । निगमः- पर्यवसानम् । चेतोर्पणार्थमिति त्वसङ्गतम् , प्रकृतिविका
भावाभावेन चतुर्थीसमासस्य जघन्यत्वात् । तथाहि दर्शनमित्यस्य उक्तार्थ
न्यत्रापि दृश्यत इति हि स्वरसतोवगम्यते । लिंगदर्शनपरत्वे लिंगादिति व
लिंगदर्शनादिति वा स्यात् , नतु तथाहि दर्शनमिति । भूतादिसूत्रे चा
पदेन द्वितीयतृतीयचतुर्थपादतया विवक्षितानां पृथिवीशरीरहृदयानामे
ग्रहणं स्वरसतो ऽवगम्यते । भूतादीनां पादत्वविवक्षा च "सैषा चतुष्पदे"
त्युक्तेरवगम्यते । नतु " त्रिपादस्यामृतं दिवी " त्युक्तत्रिपात्स्वरूपस्या
पदेन ग्रहणम् । यदुक्तं षाड्विध्यानुवादेन चतुष्पात्त्वं ब्रह्मणो विधीयते—
"सैषा षड्विधा गायत्री चतुष्पदे" ति, तदेव चतुष्पात्त्वं व्याख्यायते—
"पादोस्य सर्वाभूतानि त्रिपादस्यामृतं दिवी" ति, एवमनङ्गीकारेच "तदे
दृचाभ्यनूक्तमि" त्यसङ्गतं स्यात् , पूर्वोक्तचतुष्पात्त्वस्य चाभिधान ए
हि 'तदेतदि' ति निर्देशस्समञ्जसो भवति, अतो भूतपृथिवीशरीरहृद
नां नपादत्वमिति । तन्न, गायत्रीशब्दस्य ब्रह्मपरत्वे चतुष्पदेत्यनुपपत्ते
'टावृची' ति ऋच्यभिधेयायामेव टाब्विधानात् । चतुष्पदेत्यस्य पादोस्ये
विवरणमित्यप्यसङ्गतम् , पुरुषसूक्ते 'पुरुष एवेदं सर्वमि' ति प्रकृतिप्राप्त
कृत्स्नविभूतिकत्वमुक्त्वा, एतावत्येव विभूतिरिति बुद्धिनिवृत्तये पूर्वोक्तप्रसि
विभूतिकत्वं 'एतावानस्य महिमे' त्यनूद्य, 'अतो ज्यायांश्च पुरुष'इति त
च्यधिकमहिमानं प्रतिज्ञाय,स एव महिमा'पादोस्य विश्वा भूतानि त्रिपाद
मृतं दिवी' ति--पूर्वं 'पुरुष एवेदं सर्व' मिति प्रतिपन्नविभूतिरेकदेशमात्र
ततोपि त्रिगुणविभूतिकत्वं ब्रह्मणोस्तीति यथा प्रतिपाद्यते, तथात्रापि
पृथिवीशरीरहृदयविभूतिकत्वप्रतिपादनेन परिच्छिन्नविभूतिकत्वबुद्धिव्य

महिमे' ति पूर्वोक्तचतुष्पात्त्वमनूद्य, 'ततो ज्यायांश्च पुरुषः' इत्य
मानं प्रतिज्ञाय, तत्कथमित्यपेक्षायां 'पादोस्य सर्वा भूतानि त्रिप
दिवी' ति पूर्वोक्तं भूतादिं अन्यदपि भूतभौतिकं कृत्स्नमेकदे
ततोपि त्रिगुणविभूतिकं ब्रह्मेति हि प्रतिपाद्यते । 'सैषा चतुष्पदे'
ष्पात्त्वमेव यदि 'पादोस्ये' त्यनेनोच्यते, तदा 'तावानस्य महिमे'
ति वाक्योक्तमनूद्य, 'अतो ज्यायांश्च पुरुष' इति ततोप्यधिकमहि
ज्ञाय, 'पादोस्ये' ति तद्विवरणं कथमिवोपपद्येत? स्वस्यैव स्वस्मादु
त्वात् ; 'तावानस्य महिमे' ति, 'पादोस्य सर्वा भूतानी' ति च पू
भिधानात् । 'तदेतदृचे' ति वाक्यमञ्जसैव । अधिकोक्तिस्तु
तथासति 'अतो ज्यायानि' त्यनाञ्जस्यात् । 'एव' मिति चावा
परत्र एव सार्थम्, परमसाध्यस्य पुनःप्रतिज्ञानैरपेक्ष्यात् । ननु
त्यस्य यद्येतद्विभूतिवर्तिपदार्थाः पादः नित्यविभूतिवर्त्यमृतपदार्था
इत्यर्थः तदा द्युसम्बन्धेन ज्योतिःप्रत्यभिज्ञोक्तिरनुपपन्ना, ज्य
इवात्र स्वरूपस्य द्युसम्बन्धानवगमात् ; त्रिपाद्विभूतेरेव ह्यत्र द्यु
गमः; ज्योतिर्वाक्ये प्यमृतत्रिपाद्विभूतित्वमेव 'दीप्यत' इत्यनेन
मित्युक्तौ, 'अथ यदत' इत्यस्य 'तस्य भासा सर्वमिदं विभाती'
नार्थत्वोक्तिविरोधः; यदि ब्रह्मव्यतिरिक्तमेकः पादः अमृतं ब्रह्मस्व
पादित्युच्यते, तदा 'दिवी' त्यधिकरणनिर्देशोनुपपन्नः, दिवि विद्य
द्युसम्बन्धेन व्यापकत्वं विवक्षित्वा तस्य स्वरूपन्त्रिपादित्युक्तौ दिवी
त्रिपादित्यनेनैव व्यापकत्वलाभात् ; इति । तन्न, सर्वा भूतान्य
अमृतमस्य त्रिपादित्युक्त्या— अमृतातिरिक्तं कृत्स्नमेकः पादः अमृ
मिति प्रतीतेः । स्वरूपातिरिक्तानां विभूतीनामेकपादत्वोक्त्या पाद
स्यामृतस्यापि स्वरूपातिरिक्तत्वमेव युक्तम् । नच तस्यैव द्यु
प्रत्यभिज्ञाविरहः, 'दिवि अस्य'— दिवि विद्यमानस्यास्येत्यर्थात् ।

ादात्, सन्निहितवाक्यस्य पुरोवादत्वे सम्भवति व्यवहितकल्पनायोग
च्चावगम्यते। अत्र द्युसम्बन्धिनाममृतत्वाभावस्य सुप्रसिद्धत्वाद्दिवि वि
ानस्यामृतं त्रिपादिति द्युसम्बन्धकीर्तनस्य सप्रयोजनत्वाय हेतुगर्भता
ाच्यत्वात्, तस्य हेतुताश्च त्रिपादमृतस्य तत्र विद्यमानतानिबन्धनत्वात्त
द्युसम्बन्धलाभ इति।

अन्येषां पक्षे पूर्वपक्षो ऽनुपपन्नः, आदित्यस्य कौक्षेयज्यो
ैक्योपदेशविरोधात्; जाठराग्नेः 'दिवः परः', 'विश्वतः पृष्ठेष्वि
त्याद्यर्थानुपपत्तेः। यत्तु टीकायामुक्तं— 'द्योशब्दो' देहबाह्यभूताका
परः, तथाच दिवःपरत्वं देहबाह्याकाशादन्यत्र देहान्तराकाशे वर्त
नत्वम् 'विश्वतः पृष्ठेष्वि' त्याद्युक्तं सर्वलोकव्यापिदीप्तिमत्वं ब्रह्माण्डशरीर
पिण्डाण्डरूपे देहे ध्यानार्थं तत्तल्लोकतया कल्पितेषु भागेषु व्याप्तत
"सन्तापयति स्वं देहमापादतलमस्तक" मिति श्रुतिप्रसिद्ध्या दीप्त
युक्तत्वमिति। तन्न, दिवःपरत्वस्यास्वरसत्वात्; आरोपमात्रेण लोकग
तया दीप्त्युपदेशानुपपादनात्। "छन्दोभिधानादि" त्यत्र टीको
र्थान्तरमप्यनुपपन्नम्, अपरपक्षदूषणदशायां सादृश्यानुसन्धान एव र
वाक्ययोस्तात्पर्योपपादनादिति॥

इति ज्योतिरधिकरणं दशमम्।

——(*)——

अथ इन्द्रप्राणाधिकरणम्।

"यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृत" मित्यादिवा
सुखेन तापनीयप्रत्यभिज्ञया कारणत्वोपपादकस्य मुमुक्षूपास्यत्वस्य
वति पर्यवसायकमिन्द्रप्राणवाक्यं विचारयति—

१- प्राणस्तथानुगमात् ॥१-१-२९॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां- "प्रतर्दनो ह वै दैवोदासिरिन्

ति वक्तारमिन्द्रं प्रति ' त्वमेव मे वरं वृणीष्व यं त्वम्मनुष्याय
म्मन्यसे " इति प्रतर्दनेनोक्ते, " स होवाच प्राणोऽस्मि प्रज्ञात्मा त
मृतमित्युपास्स्वे " ति श्रूयते ।

तत्र संशयः— हिततमोपासनकर्मत्वस्य जगत्कारणनि
त्कारणमिन्द्रशब्दनिर्दिष्टार्थः किं प्रसिद्धेन्द्रः, उतान्य इति ।

पूर्वपक्षस्तु— इन्द्रशब्दनिर्दिष्टः प्रसिद्धेन्द्र एव, तत्रैवेन
प्रसिद्धेः; ' प्राणोस्मी ' ति प्राणशब्दनिर्देशश्च इन्द्रस्य बलवत्
प्रधानत्वादुपपद्यते, ' प्राणा वै बल ' मिति श्रुतेः; या च
कृतिरिन्द्रकर्मैव तदितीन्द्रस्य बलवत्त्वप्रसिद्धेः; प्रज्ञात्मत्वमप्रति
दुपपन्नम्; ' अजरो मृत ' इत्येतच्च निर्जरत्वामृतत्वप्रसिद्धे
त्वाष्ट्रवधादिलिङ्गसहितायाः प्रसिद्धेर्बृत्तसर्वसिद्धान्तहेतुभ्योऽपि
कारणवाक्यानां सर्वेषामपि तदनुसारेण नेयत्वात्; इति ।

राद्धान्तस्तु इन्द्रशब्दनिर्दिष्टः प्रसिद्धेन्द्रादन्य एव, '
ऽजरोऽमृत " इत्युत्तरवाक्यप्रतिपादितानामानन्दादीनामन्यस्मि
वात् । चेतनमात्रसाधारणं स्वरूपानन्दत्वं स्वरूपगतमज
नेह विवक्षितम्, साधारणार्थस्येहोक्तेरनतिशयहेतुतया इन्द्रे
प्रयोजनाभावात् । अत आनन्दशब्दो निरुपाधिकानन्दयोगपर
मृतशब्दौ जरानाघ्रातनित्यमङ्गळविग्रहयोगपरौ । निरुपा
योगश्च कर्मवश्ये प्रसिद्धेन्द्रे न सम्भवतीति ।

सूत्रार्थस्तु— प्राणशब्दनिर्दिष्ट इन्द्रः प्रसिद्धेन्द्रादन्यः,
सिद्धिस्तथैव " स एष प्राण एव प्रज्ञात्मा ऽऽनन्दो जरोमृत "
इन्द्रशब्दार्थस्यानुगमात् । इन्द्रस्तथाऽनुगमादिति वक्तव्ये प्राण

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

॥१- १- ३०॥

इन्द्रशब्दनिर्दिष्ट "आनन्दोजरोमृत" इत्यनेनैकार्थ्यादन्य इति
यते, "मामेव विजानीहि प्राणोस्मि प्रज्ञात्मा तम्मामायुरमृतमित्युपा-
"ति वक्ता हीन्द्रः "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् साला
यः प्रायच्छं बह्वीस्सन्धा अतिक्रम्य दिवि प्रह्लादिनमन्तरिक्षे पौलो-
थिव्यां कालकक्ष्यान् तस्य मे न लोम च मीयते" इति त्वाष्ट्रवध
वृकयतिप्रदानदैत्यातिसन्धानपौलामनिरासैः प्रज्ञातजीवभावस्य स्वात्मन
ास्यतां प्रतर्दनायोपदिशति, अत उपक्रमे जीवविशेष इत्यवगते सति
ानन्दोजरोमृत" इत्युपसंहारस्तदनुगुण एव वर्णनीय इति चेत् ?
ात्मसम्बन्धभूमा ह्यस्मिन्—आत्मनि यस्सम्बन्धस्सोध्यात्मसम्बन्धः,
, भूमा- बहुत्वम् , सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् , तच्चा
र् वक्तरि परमात्मन्येव सम्भवति । "तद्यथा रथस्यारेषु नेमिरर्पिता
ावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे
ास एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति भूतमात्राशब्देना
नवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभि
तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य, तमेव "आ
ो जरो मृत" इत्युपदिशति । तदेतत्कृत्स्नचेतनाधारत्वं जीवादर्थान्त
ास्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ।

ननु कथं प्रज्ञामात्राशब्देन चेतनवर्गाभिधानम् , "दश प्रज्ञामात्र
धिभूत" मितीन्द्रियाणामेव प्रज्ञामात्राशब्देनोक्ततया तत्प्रत्यभिज्ञानेन
ापि तत्परत्वादिति चेन्न;—प्रज्ञाशब्दो हीन्द्रियेष्वमुख्यः, जीवेषु तु मुख्य
ां ज्ञानस्वरूपत्वात् । नच मुख्ये सम्भवति लक्षणाश्रयणं युक्तम् । किंच

स्मिन् प्रकरणे प्रज्ञाशब्दो बहुष्वर्थेषु प्रयुज्यते, जीवे तावत् "प्राण प्रज्ञात्मे" ति, मनसि च "न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञ दन्यत्र मे मनोभूदिति नाहमेतन्नाम प्राज्ञासिष" मिति, तथेन्द्रियेषु "दश प्रज्ञामात्रा" इति, अतो नैकार्थनियतः, अतः पूर्वं प्रज्ञा निर्दिष्टो जीव इह प्रज्ञामात्राशब्देनोच्यते । अथवा– अध्यात्मसम्ब भूमा ह्यस्मिन्— परमात्मासाधारणधर्मसम्बन्धो ह्यध्यात्मसम्बन्धः, भूमा– बहुत्वं, ह्यस्मिन् प्रकरणे विद्यते । तथाहि- प्रथमं "त्वमेव वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस" इति, "मामुपास्स्वे" । परमात्मासाधारणमोक्षोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीः तथा- "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निन एष वासाधु कर्म कारयति तं यमधो निनीषती" ति सर्वस्य कर्मणः यितृत्वं च परमात्मन एव धर्मः; तथा- "तद्यथा रथस्यारेषु नेमि नेमावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः ऽर्पिता" इति सर्वाधारत्वं च तस्यैव धर्मः; तथा "स एष प्राण ए ज्ञात्मानन्दोजरोमृत" इत्येतेपि परमात्मन एव धर्माः; "एष धिपतिः, एष सर्वेश" इति च परमात्मन्येव सम्भवति; तदेवम सम्बन्धभूम्नोत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रशब्दनिर्दिष्टः । यदुक्त उपक्रमे जीवविशेषानुगमादुपसंहारस्तदनुरोधेन नेय इति; तदयु उपक्रमोपसंहारौ हि वाक्यावयवौ, तयोरवयवभूतयोः परस्परविरोधे क्रमप्राबल्यम्, नत्ववयविविरोधे; अत्र त्वनेकावान्तरवाक्यैः प्रतिपन्नस्य वाक्यार्थस्यावयविनो विरोधे अवयवभूतोपक्रमो दुर्बलः ।

कथन्तर्हीन्द्रस्य "मामुपास्स्वे" ति स्वात्मन उपास्यत्व स्सङ्गंस्यते ? तत्राह—

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १- १- ३१ ॥

' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण "

ास्त्रदृष्ट्या स्वान्तर्यामिण उपास्यत्वाभिप्रायेण " मामेव विजानीहि

वे " तीन्द्रस्योपदेशः । यथाऽहमादिपदानां तत्तच्छरीरकपरमात्म

जानता वामदेवेन स्वान्तर्यामिणस्सार्वात्म्याभिप्रायेण मनुसूर्यादि

ाव उपदिष्टः । तथाहि श्रूयते- " तद्धैतत्पश्यन् नृषिर्वामदेवः

अहं मनुरभवं सूर्यश्चे " त्यादि । प्रह्लादश्च— " सर्वगत्वा

स एवाहमवास्थितः । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ॥ "

।

**ीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह**

**त् ॥ १- १- ३२ ॥**

" न वाचं विजिज्ञासीत वक्तारं विद्यात् " ' त्रिशीर्षाणं त्वाष्ट्र

' ' यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायु ' रित्यादि जीव

णलिङ्गबलात् प्रसिद्धेन्द्रमुख्यप्राणविवक्षा तावद्दुरपह्नवा; नन्व

विवक्षा, किन्तु परमात्मविशेषणतयेत्युक्तमिति चेत् ? तथा सति

नः पदान्तरेणानेनैव पदेन वृत्त्यन्तरेण वोपस्थापनसम्भवात्

द्रादिविवक्षा व्यर्था; तस्मादध्यात्मसम्बन्धो नेति चेन्न;- उपासा

ाद्धेतोः । उपासनत्रैविध्यमुपदेष्टुं तत्तद्विशेषणकपरमात्माभिधानम् ।

नः स्वरूपेणानुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानम्, भोग्य

करणशरीरकत्वानुसन्धानं चेति त्रिविधमुपासनमुपदेष्टुमित्यर्थः । अ-

हि त्रिविधं ब्रह्मानुसन्धानम् आश्रितं—प्रतिपन्नम् । यथा आनन्द

" सत्यं ज्ञानमनन्तं ब्रह्मे " त्यादौ स्वरूपेणानुसन्धानम्, " तत्

तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवात्, निरुक्तं चानि-

, निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च " त्यादिषु भोक्तृ

त्वेनाचेतनविशिष्टत्वेन चानुसन्धानम् । नन्वानन्दवल्ल्यां त्रिविध

मुपासनं युज्यते, “ यदा ह्येवैष ”इति वाक्येन पूर्वोक्तार्थोपास
इह तु न तथा दृश्यत इत्यत्राह—इह तद्योगा द्विति । इह
“ आनन्दोजरोमृत ” इति स्वेन रूपेणानुसन्धानम् , “
इत्यचिद्विशिष्टानुसन्धानम् , “ मामुपास्स्वे ” ति चिद्विशिष्टानुस
त्रिविधमुपासनं युज्यत एव । “ प्राणोस्मी ” ति वाक्ये हि ‘
प्रज्ञात्मे ” ति प्रथमान्ततया निर्देशः, “अमृत” मितीतिकरणं
तेनायमर्थोऽवगम्यते— आयुरमृतं मामित्युपास्स्वेति- प्राणेन्द्रप्रका
ति । अन्यथा पूर्वं प्रथमान्तनिर्देशस्य इतिकरणस्य चास्वारस्यात
रमृत ” मित्यैहिकामुष्मिकसकलफलप्रदत्वं उपास्यत्वोपपादकमुक्त
त्रेन्द्रशब्दनिर्दिष्टः प्रसिद्धेन्द्रादन्य इति ।

परेतु—प्राणशब्दनिर्दिष्टः पञ्चवृत्तिर्वायुः परमात्मा वेति ता
तत्र प्रसिद्धव्यतिक्रमे कारणभावात् वायुरेव प्राण इति पूर्वपक्षे, र
प्राणः परमात्मा, तथा— परमात्मपरत्वे, प्रकरणस्योपक्रमपरामर्शो
अनुगमात्- समन्वयात् । एवं स्थितेपीन्द्रलिंगानां किंचिद्बलावष्ट
पक्षान्तरमुत्थाप्य निराकरोति- न वक्तुरात्मोपदेशादिति चेदध
म्बन्धभूमा ह्यस्मिन् । इह प्राणशब्दनिर्दिष्ट इन्द्र इति युक्त
स्येन्द्रस्य “ मामेव विजानीहि ” ति वचनात् लिंगात् , नहि म
च्छते, “ मामेवे ” त्यवधारणेन स्वानुगतब्रह्मपर्यवसानं उ
अन्यथा अवधारणवैयर्थ्यात्, तस्मादिन्द्र एव प्राण इति पूर्वः मह
त्मेति सिद्धान्तः । अस्मिन् खलु प्रकरणे अध्यात्मसम्बन्धानां
सम्बन्धिनां लिंगानां, भूमा- बाहुल्यं उपलभ्यते । तथाहि- “ य देश
शरीरे प्राणो वसति तावदायु ” रित्यायुःप्रदत्वं, “ अस्ति
निश्श्रेयस” मितीन्द्रियनिश्श्रेयसहेतुत्वम् , “इदं शरीरं परिगृह्यो

प्रत्यग्लिंगानि दृश्यन्ते । कथं तर्हि "मामेव विजानीही" ।उ

पदेशः? शास्त्रदृष्ट्या तूपदेशो वामदेववत् । इन्द्रः स्वगात्मानं पर

त्वेनाहमेव परं ब्रह्मेति शास्त्रदृष्ट्या तूपदिशति " मामेव विजानीही "

। पुनर्विधान्तरेण पूर्वपक्षमुत्थाप्य निराकरोति- जीवमुख्यप्राणलिंगा

चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । स्यादेतत्,

देन्द्र उपास्यः प्रतिपाद्यः, तथापि जीवप्राणब्रह्माणि त्रीण्युपास्यानि

द्यानि स्युः, नतु ज्ञेयं ब्रह्मैव प्रतिपाद्यम्, ब्रह्मलिंगवज्जीवमुख्यप्राण

ोरपि सत्त्वादिति पूर्वः पक्षः । राद्धान्तस्तु—उपासात्रैविध्यप्रसंगात्,

तत्वाच्च अन्यत्रापि ब्रह्मलिंगवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेः,

। हिततमोपासादिब्रह्मलिंगयोगात् ब्रह्मोपदेशएवायमिति गम्यत इति ।

क्षे मुख्यप्राणपूर्वपक्षीकरणमनुपपन्नम्, " प्राणोऽस्मि प्रज्ञात्मे " ति

य विशेषणतयोपादानात्। चतुर्थसूत्रे शब्दोपात्तस्याध्यात्मसम्बन्धभूम्न

नेषेध्यत्वसम्भवे अन्यस्य निषेध्यत्वकल्पनं प्रसङ्गपदाध्याहारश्च दोषः ।

श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचिते

# पाराशर्यविजये

## प्रथमाध्यायस्य प्रथमः पादः ।

———

याद्धे
त्मनः
रकरण
पि हि
ं "
ा त
च